# नाटयशास्त्रम्

## प्रथमोऽध्यायः

प्रणम्य शिरसा देवौ पितामहमहेश्वरौ
नाटयशास्त्रं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम् १
समाप्तजप्यं व्रतिनं स्वसुतैः परिवारितम्
अनध्याये कदाचित्तु भरतं नाटयकोविदम् २
मुनयः पर्युपास्यैनमात्रेयप्रमुदाः पुरा
पप्रच्छस्ते महात्मानो नियतेन्द्रियबुद्धयः ३
योऽयं भगवता सम्यग्ग्रथितो वेदसम्मितः
नाटयवेदः कथं ब्रह्मन्नुत्पन्नः कस्य वा कृते ४
कत्यङ्गः किंप्रमाणश्च प्रयोगश्चात्म कीदृशः
सर्वमेतद्यथातत्त्वं भगवन्वक्तुमर्हसि ५
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः
प्रत्युवाच ततो वाक्यं नाटययवेदकथां प्रति ६
भवद्भिः शुचिभिर्भूत्वा तथाऽवहितमानसैः
भूयतां नाटयवेदस्य सम्भवो ब्रह्मनिर्मितः ७
पूर्वं कृतयुगे विप्रा वृत्ते स्वायम्भुवेऽन्तरे
त्रेतायुगेऽथ सम्प्राप्ते मनोर्वैवस्वतस्य तु ८
ग्राम्यधर्मप्रवृत्ते तु कामलोभवशं गते
ईर्ष्याक्रोधादिसंमढे लोके सुखितदुःखिते ९
देवदानवगन्धर्वयक्षरक्षोमहोरगैः
जम्बूद्वीपे समाक्रान्ते लोकपालप्रतिष्ठिते १०
महेन्द्रप्रमुखैर्देवैरुक्तः किल पितामहः
क्रडनीयकमिच्छामो दृश्यं श्रव्यं च यद्भवेत् ११
न वेदव्यवहारोऽयं संश्राव्यः शूद्रजातिषु
तस्मात् सृजापरं वेदं पञ्चमं सार्ववर्णिकम् १२
एवमस्त्विति तानुक्त्वा देवराजं विसृज्य च

सस्मार चतुरो वेदान् योगमास्थाय तत्त्ववित् १३
धर्म्यमर्थ्यं यशस्यं च सोपदेश्यं ससङ्ग्रहम्
भविष्यतश्च लोकस्य सर्वकर्मानुदर्शकम् १४
सर्वशास्त्रार्थसम्पन्नं सर्वशिल्पप्रवर्तकम्
नाट्याख्यं पञ्चमं वेदं सेतिहासं करोम्यहम् १५
एवं सङ्कल्प्य भगवान् सर्ववेदानअनुस्मरन्
नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसम्भवम् १६
जग्राह पाठ्यमृग्वेदात्सामम्यो गीतमेव च
यजुर्वेदादभिनयान् रसानाथर्वणादपि १७
वेदोपवेदैः सम्बद्धो नाट्यवेदो महात्मना
एवं भगवता सृष्टो ब्रह्मणा सर्ववेदिना १८
उत्पाद्य नाट्यवेदं तु ब्रह्मोवाच सुरेश्वरम्
इतिहासो मया सृष्टः स सुरेषु नियुज्यताम् १९
कुशला ये विदग्धाश्च प्रगल्भाश्च जितश्रमाः
तेष्वयं नाट्यसंज्ञो हि वेदः संक्राम्यतां त्वया २०
तच्छ्रुत्वा वचनं शक्रो ब्रह्मणा यदुदाहृतम्
प्राञ्जलिः प्रणतो भूत्वा प्रत्युवाच पितामहम् २१
ग्रहणे धारणे ज्ञाने प्रयोगे चास्य सत्तम
अशक्ता भगवन् देवा अयोग्या नाट्यकर्मणि २२
य इमे वेदगुह्यज्ञा ऋषयः संशितव्रताः
एतेऽस्य ग्रहणे शक्ताः प्रयोगे धारणे तथा २३
श्रुत्वा तु शक्रवचनं मामाहाम्बुजसम्भवः
त्वं पुत्रशतसंयुक्तः प्रयोक्ताऽस्य भवानघ २४
आज्ञापितो विदित्वाऽहं नाट्यवेदं पितामहात्
पुत्रानध्यापयामास प्रयोगं चापि तत्त्वतः २५
शाण्डिल्यं चैव वात्स्यं च कोहलं दत्तिलं तथा

जटिलाम्बष्टकौ चैव तण्डुमग्निशिखं तथा २६
सैन्धवं सपुलोमानं शाड्वलिं विपुलं तथा
कपिञ्जलिं बादिरं च यमधूम्रायणौ तथा २७
जम्बुध्वजं काकजङ्घं स्वर्णकं तापसं तथा
कैदारि शालिकर्णं च दीर्घगात्रं च शालिकम् २८
कौत्सं ताण्डायनिं चैव पिङ्गलं चित्रकं तथा
बन्धुलं भल्लकं चैव मुष्ठिकं सैन्धवायनम् २९
तैतिलं भार्गवं चैव शुचिं बहुलमेव च
अबुधं बुधसेनं च पाण्डुकर्णं सुकेरलम् ३०
ऋजुकं मण्डकं चैव शम्बरं वञ्जुलं तथा
मागधं सरलं चैव कर्तारं चोग्रमेव च ३१
तुषारं पार्षदं चैव गौतमं बादरायणम्
विशालं शबलं चैव सुनाभं मेषमेव च ३२
कालियं भ्रमरं चैव तथा पीठमुखं मुनिम्
नखकुट्टाश्मकुट्टौ च षट्पदं सोत्तमं तथा ३३
पादुकोपानहौ चैव श्रुतिं चाषस्वरं तथा
अग्निकुण्डाज्यकुण्डौ च वितण्ड्यं ताण्ड्यमेव च ३४
कर्तराक्षं हिरण्याक्षं कुशलं दुस्सहं तथा
लाजं भयानकं चैव बीभत्सं सविचक्षणम् ३५
पुण्ड्राक्षं पुण्ड्रनासं चाप्यसितं सितमेव च
विद्युज्जिह्वं महाजिह्वं शालङ्कायनमेव च ३६
श्यामायनं माठरं च लोहिताङ्गं तथैव च
संवर्तकं पञ्चशिखं त्रिशिखं शिखमेव च ३७
शङ्खवर्णमुखं षण्डं शङ्कुकर्णमथापि च
शक्रनेमिं गभस्तिं चाप्यंशुमालिं शठं तथा ३८
विद्युतं शातजङ्घं च रौद्रं वीरमथापि च

पितामहाज्ञयाऽस्माभिर्लोकस्य च गुणेप्सया ३९
प्रयोजितं पुत्रशतं यथाभूमिविभागशः
यो यस्मिन्कर्मणि यथा योग्यस्तस्मिन् स योजितः
भारतीं सात्त्वतीं चैव वृत्तिमारभटीं तथा
समाश्रितः प्रयोगस्तु प्रयुक्तो वै मया द्विजाः ४१
परिगृह्य प्रणम्याथ ब्रह्मा विज्ञापितो मया
अथाह मां सुरगुरुः कैशिकीमपि योजय ४२
यच्च तस्याः क्षमं द्रव्यं तद्ब्रूहि द्विजसत्तम
एवं तेनास्म्यभिहितः प्रत्युक्तश्च मया प्रभुः ४३
दीयतां भगवन्द्रव्यं कैशिक्याः सम्प्रयोजकम्
नृत्ताङ्गहारसम्पन्ना रसभावक्रियात्मिका ४४
दृष्टा मया भगवतो नीलकण्ठस्य नृत्यतः
कैशिकी श्लक्ष्णनैपथ्या शृङ्गाररससम्भवा ४५
अशक्या पुरुषैः सा तु प्रयोक्तुं स्त्रीजनादृते
ततोऽसृजन्महातेजा मनसाऽप्सरसो विभुः ४६
नाट्यालङ्कारचतुराः प्रादान्मह्यं प्रयोगतः
मञ्जुकेशीं सुकेशीं च मिश्रकेशीं सुलोचनाम् ४७
सौदामिनीं देवदत्तां देवसेनां मनोरमाम्
सुदतीं सुन्दरीं चैव विदग्धां विपुलां तथा ४८
सुमालां सन्ततिं चैव सुनन्दां सुमुखीं तथा
मागधीमर्जूनीं चैव सरलां केरलां धृतिम् ४९
नन्दां सपुष्कलां चैव कलमां चैव मे ददौ
स्वातिर्भाण्डनियुक्तस्तु सह शिष्यैः स्वयम्भुवा ५०
नारदाद्याश्च गन्धर्वा गानयोगे नियोजिताः
एवं नाट्यमिदं सम्यग्बुध्वा सर्वैः सुतैः सह ५१
स्वातिनारदसंयुक्तो वेदवेदाङ्गकारणम्

उपस्थितोऽहं ब्रह्माणं प्रयोगार्थं कृताञ्जलिः ५२
नाट्यस्य ग्रहणं प्राप्तं ब्रूहि किं करवाण्यहम्
एतत्तु वचनं श्रुत्वा प्रत्युवाच पितामहः ५३
महानयं प्रयोगस्य समयः प्रत्युपस्थितः
अयं ध्वजमहः श्रीमान् महेन्द्रस्य प्रवर्तते ५४
अत्रेदानीमयं वेदो नाट्यसंज्ञः प्रयुज्यताम्
ततस्तस्मिन्ध्वजमहे निहतासुरदानवे ५५
प्रहृष्टामरसंकीर्णे महेन्द्रविजयोत्सवे
पूर्वं कृता मया नान्दी ह्याशीर्वचनसंयुता ५६
अष्टाङ्गपदसंयुक्ता विचित्रा वेदनिर्मिता
तदन्तेऽनुकृतिर्बद्धा यथा दैत्याः सुरैर्जिताः ५७
सम्फेटविद्रवकृता च्छेद्यभेद्याहवात्मिका
ततो ब्रह्मादयो देवाः प्रयोगपरितोषिताः ५८
प्रददुर्मत्सुतेभ्यस्तु सर्वोपकरणानि वै
प्रीतस्तु प्रथमं शक्रो दत्तवान्स्वं ध्वजं शुभम् ५९
ब्रह्मा कुटिलकं चैव भृङ्गारं वरुणः शुभम्
सूर्यश्छत्रं शिवस्सिद्धिं वायुर्व्यजनमेव च ६०
विष्णुः सिंहासनं चैव कुबेरो मकुटं तथा
श्राव्यत्वं प्रेक्षणीयस्य ददौ देवी सरस्वती ६१
शेषा ये देवगन्धर्वा यक्षराक्षसपन्नगाः
तस्मिन्सदस्यभिप्रेतान्नानाजातिगुणाश्रयान् ६२
अंशांशैर्भाषितं भावान् रसान् रूपं बलं तथा
दत्तवन्तः प्रहृष्टास्ते मत्सुतेभ्यो दिवौकसः ६३
एवं प्रयोगे प्रारब्धे दैत्यदानवनाशने
अभवन्क्षुभिताः सर्वे दैत्या ये तत्र सङ्गताः ६४
विरूपाक्षपुरोगांश्च विघ्नान्प्रोत्साह्य तेऽब्रुवन्

न क्षमिष्यामहे नाट्यमेतदागम्यतामिति ६५
ततस्तैरसुरैः सार्धं विघ्ना मायामुपाश्रिताः
वा चश्चेष्टां स्मृतिं चैव स्तम्भयन्ति स्म नृत्यताम् ६६
तथा विध्वंसनं दृष्ट्वा सूत्रधारस्य देवराट्
कस्मात्प्रयोगवैषम्यमित्युक्त्वा ध्यानमाविशत् ६७
अथापश्यत्सदो विघ्नैः समन्तात्परिवारितम्
सहेतरैः सूत्रधारं नष्टसंज्ञं जडीकृतम् ६८
उत्थाय त्वरितं शक्रः गृहीत्वा ध्वजमुत्तमम्
सर्वरत्नोज्ज्वलतनुः किञ्चिदुद्वृत्तलोचनः ६९
रङ्गपीठगतान्विघ्नानसुरांश्चैव देवराट्
जर्जरीकृतदेहांस्तानकरोज्जर्जरेण सः ७०
निहतेषु च सर्वेषु विघ्नेषु सह दानवैः
सम्प्रहृष्य ततो वाक्यमाहुः सर्वे दिवौकसः ७१
अहो प्रहरणं दिव्यमिदमासादितं त्वया
जर्जरीकृतसर्वाङ्गा येतैते दानवाः कृताः ७२
यस्मादनेन ते विघ्नाः सासुरा जर्जरीकृताः
तस्माज्जर्जर एवेति नामतोऽयं भविष्यति ७३
शेषा ये चैव हिंसार्थमुपयास्यन्ति हिंसकाः
दृष्ट्वैव जर्जरं तेऽपि गमिष्यन्त्येवमेव तु ७४
एवमेवास्त्विति ततः शक्रः प्रोवाच तान्सुरान्
रक्षाभूतश्च सर्वेषां भविष्यत्येष जर्जरः ७५
प्रयोगे प्रस्तुते ह्येवं स्फीते शक्रमहे पुनः
त्रासं सञ्जनयन्ति स्म विघ्नाः शेषास्तु नृत्यताम् ७६
दृष्ट्वा तेषां व्यवसितं दैत्यानां विप्रकारजम्
उपस्थितोऽहं ब्रह्माणं सुतैः सर्वैः समन्वितः ७७
निश्चिता भगवन्विघ्ना नाट्यस्यास्य विनाशने

अस्य रक्षाविधिं सम्यगाज्ञापय सुरेश्वर ७८
ततश्च विश्वकर्माणं ब्रह्मोवाच प्रयत्नतः
कुरु लक्षणसम्पन्नं नाट्यवेश्म महामते ७९
ततोऽचिरेण कालेन विश्वकर्मा महच्छुभम्
सर्वलक्षणसम्पन्नं कृत्वा नाट्यगृहं तु सः ८०
प्रोक्तवान्द्रुहिणं गत्वा सभायान्तु कृताञ्जलिः
सज्जं नाट्यगृहं देव तदवेक्षितुमर्हसि ८१
ततः सह महेन्द्रेण सुरैः सर्वैश्च सेतरैः
आगतस्त्वरितो द्रष्टुं द्रुहिणो नाट्यमण्डपम् ८२
दृष्ट्वा नाट्यगृहं ब्रह्मा प्राह सर्वान्सुरांस्ततः
अंशभागैर्भवद्भिस्तु रक्ष्योऽयं नाट्यमण्डपः ८३
रक्षणे मण्डपस्याथ विनियुक्तस्तु चन्द्रमाः
लोकपालास्तथा दिक्षु विदिक्ष्वपि च मारुताः ८४
नेपथ्यभूमौ मित्रस्तु निक्षिप्तो वरुणोऽम्बरे
वेदिकारक्षणे वह्निर्भाण्डे सर्वदिवौकसः ८५
वर्णाश्चत्वार एवाथ स्तम्भेषु विनियोजिताः
आदित्याश्चैव रुद्राश्च स्थिताः स्तम्भान्तरेष्वथ ८६
धारणीष्वथ भूतानि शालास्वप्सरसस्तथा
सर्ववेश्मसु यक्षिण्यो महीपृष्ठे महोदधिः ८७
द्वारशालानियुक्तौ तु कृतान्तः काल एव च
स्थापितौ द्वारपत्रेषु नागमुख्यौ महाबलौ ८८
देहल्यां यमदण्डस्तु शूलं तस्योपरि स्थितम्
द्वारपालौ स्थितौ चोभौ नियतिर्मृत्युरेव च ८९
पार्श्वे च रङ्गपीठस्य महेन्द्रः स्थितवान्स्वयम्
स्थापिता मत्तवारण्यां विद्युद्दैत्यनिषूदनी ९०
स्तम्भेषु मत्तवारण्याः स्थापिताः परिपालने

भूतयत्तपिशाचाश्च गृह्यकाश्च महाबलाः ९१
जर्जरे तु विनिक्षिप्तं वज्रं दैत्यनिबर्हणम्
तत्पर्वसु विनिक्षिप्ताः सुरेन्द्रा ह्यमितौजसः ९२
शिरःपर्वस्थितो ब्रह्मा द्वितीये शङ्करस्तथा
तृतीये च स्थितो विष्णुश्चतुर्थे स्कन्द एव च ९३
पञ्चमे च महानागाः शेषवासुकितक्षकाः
एवं विघ्नविनाशाय स्थापिता जर्जरे सुराः ९४
रङ्गपीठस्य मध्ये तु स्वयं ब्रह्मा प्रतिष्ठितः
इष्ट्यर्थं रङ्गमध्ये तु क्रियते पुष्पमोक्षणम् ९५
पातालवासिनो ये च यक्षगुह्यकपन्नगाः
अधस्ताद्रङ्गपीठस्य रक्षणे ते नियोजिताः ९६
नायकं रक्षतीन्द्रस्तु नायिकां च सरस्वती
विदूषकमथौङ्कारः शेषास्तु प्रकृतीर्हरः ९७
यान्येतानि नियुक्तानि दैवतानीह रक्षणे
एतान्येवाधिदैवानि भविष्यन्तीत्युवाच सः ९८
एतस्मिन्नन्तरे देवैः सर्वैरुक्तः पितामहः
साम्ना तावदिमे विघ्नाः स्थाप्यन्तां वचसा त्वया
पूर्वं साम प्रयोक्तव्यं द्वितीयं दानमेव च
तयोरुपरि भेदस्ततो दण्डः प्रयुज्यते १००
देवानां वचनं श्रुत्वा ब्रह्मा विघ्नानुवाच ह
कस्माद्भवन्तो नाट्यस्य विनाशाय समुत्थिताः १०१
ब्रह्मणो वचनं श्रुत्वा विरूपाक्षोऽब्रवीद्वचः
दैत्यैर्विघ्नगणैः सार्धं सामपूर्वमिदं ततः १०२
योऽयं भगवता सृष्टो नाट्यवेदः सुरेच्छया
प्रत्यादेशोऽयमस्माकं सरार्थं भवता कृतः १०३
तन्नैतदेवं कर्तव्यं त्वया लोकपितामह

यथा देवास्तथा दैत्यास्त्वत्तः सर्वे विनिर्गताः १०४
विघ्नानां वचनं श्रुत्वा ब्रह्मा वचनमब्रवीत्
अलं वो मन्युना दैत्या विषादं त्यजतानघाः १०५
भवतां देवतानां च शुभाशुभविकल्पकः
कर्मभावान्वयापेक्षी नाट्यवेदो मया कृतः १०६
नैकान्ततोऽत्र भवतां देवानां चानुभावनम्
त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम् १०७
क्वचिद्धर्मः क्वचित्क्रीडा क्वचिदर्थः क्वचिच्छमः
क्वचिद्धास्यं क्वचिद्युद्धं क्वचित्कामः क्वचिद्वधः १०८
धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम्
निग्रहो दुर्विनीतानां विनीतानां दमक्रिया १०९
क्लीबानां धाष्टर्यजननमुत्साहः शूरमानिनाम्
अबुधानां विबोधश्च वैदुष्यं विदुषामपि ११०
ईश्वराणां विलासश्च स्थैर्यं दुःखार्दितस्य च
अर्थोपजीविनामर्थो धृतिरुद्विग्नवेतसाम् १११
नानाभावोपसम्पन्नं नानावस्थान्तरात्मकम्
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम् ११२
उत्तमाधममध्यानां नराणां कर्मसंश्रयम्
हितोपदेशजननं धृतिक्रीडासुखादिकृत् ११३
एतद्रसेषु भावेषु सर्वकर्मक्रियास्वथ
सर्वोपदेशजननं नाट्यं लोके भविष्यति
दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम्
विश्रान्तिजननं काले नाट्यमेतद्भविष्यति ११४
धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम्
लोकोपदेशजननं नाट्यमेतद्भविष्यति ११५
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला

नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते ११६
तान्नात्र मन्युः कर्तव्यो भवद्भिरमरान्प्रति
सप्तद्वीपानुकरणं नाट्यमेतद्भविष्यति ११७
येनानुकरणं नाट्यमेतत्तद्यन्मया कृतम्
देवानामसुराणां च राज्ञामथ कुटुम्बिनाम्
ब्रह्मर्षीणां च विज्ञेयं नाट्यं वृत्तान्तदर्शकम् ११८
योऽयं स्वभावो लोकस्य सुखदुःखसमन्वितः
सोऽङ्गाद्यभिनयोपेतो नाट्यमित्यभिधीयते ११९
वेदविद्येतिहासानामाख्यानपरिकल्पनम्
विनोदकरणं लोके नाट्यमेतद्भविष्यति
श्रुतिस्मृतिसदाचारपरिशेषार्थकल्पनम्
विनोदजननं लोके नाट्यमेतद्भविष्यति
एतस्मिन्नन्तरे देवान् सर्वानाह पितामहः
क्रियतामद्य विधिवद्यजनं नाट्यमण्डपे १२०
बलिप्रदानैर्होमैश्च मन्त्रौषधिसमन्वितैः
भोज्यैर्भक्ष्यैश्च पानैश्च बलिः समुपकल्प्यताम् १२१
मर्त्यलोकगताः सर्वे शुभां पूजामवाप्स्यथ
अपूजयित्वा रङ्गं तु नैव प्रेक्षां प्रवर्तयेत् १२२
अपूजयित्वा रङ्गं तु यः प्रेक्षां कल्पयिष्यति
निष्फलं तस्य तत् ज्ञानं तिर्यग्योनिं च यास्यति १२३
यज्ञेन संमितं ह्येतद्रङ्गदैवतपूजनम्
तस्मात्सर्वप्रयत्नेन कर्तव्यं नाट्ययोक्तृभिः १२४
नर्तकोऽर्थपतिर्वापि यः पूजां न करिष्यति
न कारयिष्यत्यन्यैर्वा प्राप्नोत्यपचयं तु सः १२५
यथाविधि यथादृष्टं यस्तु पूजां करिष्यति
स लप्स्यते शुभानर्थान् स्वर्गलोकं च यास्यति १२६

एवमुक्त्वा तु भगवान्द्रुहिणः सह दैवतैः
रङ्गपूजां कुरुष्वेति मामेवं समचोदयत्  १२७
इति प्रथमोऽध्यायः

द्वितीयोऽध्यायः
भरतस्य वचः श्रुत्वा पप्रच्छुर्मुनयस्ततः
भगवन् श्रोतुमिच्छामो यजनं रङ्गसंश्रयम्  १
अथवा याः क्रियास्तत्र लक्षणं यच्च पूजनम्
भविष्यद्भिर्नरैः कार्यं कथं तन्नाट्यवेश्मनि  २
इहादिर्नाट्ययोगस्य नाट्यमण्डप एव हि
तस्मात्तस्यैव तावत्त्वं लक्षणं वक्तुमर्हसि  ३
तेषां तु वचनं श्रुत्वा मुनीनां भरतोऽब्रवीत्
लक्षणं पूजनं चैव श्रूयतां नाट्यवेश्मनः  ४
दिव्यानां मानसी सृष्टिर्गृहेषूपवनेषु च
यथाभावाभिनिर्वर्त्याः सर्वे भावास्तु मानुषाः
नराणां यत्नतः कार्याः लक्षणाभिहिताः क्रियाः  ५
श्रूयतां तद्यथा यत्र कर्तव्यो माट्यमण्डपः
तस्य वास्तु च पूजा च यथा योज्या प्रयत्नतः  ६
इह प्रेक्षागृहं दृष्ट्वा धीमता विश्वकर्मणा
त्रिविधः सन्निवेशश्च शास्त्रतः परिकल्पितः  ७
विकृष्टश्चतुरश्रश्च त्र्यश्रश्चैव तु मण्डपः
तेषां त्रीणि प्रमाणानि ज्येष्ठं मध्यं तथाऽवरम्  ८
प्रमाणमेषां निर्दिष्टं हस्तदण्डसमाश्रयम्
शतं चाष्टौ चतुःषष्टिर्हस्ता द्वात्रिंशदेव च  ९
अष्टाधिकं शतं ज्येष्ठं चतुःषष्टिस्तु मध्यमम्
कनीयस्तु तथा वेश्म हस्ता द्वात्रिंशदिष्यते  १०

देवानां तु भवेज्ज्येष्ठं नृपाणां मध्यमं भवेत्
शेषाणां प्रकृतीनां तु कनीयः संविधीयते ११
प्रेक्षागृहाणां सर्वेषां प्रशस्तं मध्यमं स्मृतम्
तत्र पाठ्यं च गेयं च सुखश्राव्यतरं भवेत्
प्रेक्षागृहाणां सर्वेषां त्रिप्रकारो विधिः स्मृतः
विकृष्टश्चतुरस्रश्च त्र्यस्रश्चैव प्रयोक्तृभिः
कनीयस्तु स्मृतं त्र्यस्रं चतुरस्रं तु मध्यमम्
ज्येष्ठं विकृष्टं विज्ञेयं नाट्यवेदप्रयोक्तृभिः
प्रमाणं यच्च निर्दिष्टं लक्षणं विश्वकर्मणा
प्रेक्षागृहाणां सर्वेषां तच्चैव हि निबोधत १२
अणू रजश्च वालश्च लिक्षा यूका यवस्तथा
अङ्गुलं च तथा हस्तो दण्डश्चैव प्रकीर्तितः १३
अणवोऽष्टौ रजः प्रोक्तं तान्यष्टौ वाल उच्यते
वालास्त्वष्टौ भवेल्लिक्षा यूका लिक्षाष्टाकं भवेत् १४
यूकास्त्वष्टौ यवो ज्ञेयो यवास्त्वष्टौ तथाङ्गुलम्
अङ्गुलानि तथा हस्तश्चतुर्विंशतिरुच्यते १५
चतुर्हस्तो भवेद्दण्डो निर्दिष्टस्तु प्रमाणतः
अनेनैव प्रमाणेन वक्ष्यास्येषां विनिर्णयम् १६
चतुः षष्टिकरान्कुर्याद्दीर्घत्वेन तु मण्डपम्
द्वात्रिंशतं च विस्तारान्मर्त्यानां यो भवेदिह १७
अत ऊर्ध्वं न कर्तव्यः कर्तृभिर्नाट्यमण्डपः
यस्मादव्यक्तभावं हि तत्र नाट्यं व्रजेदिति १८
मण्डपे विप्रकृष्टे तु पाठ्यमुच्चारिनस्वरम्
अनिस्सरणधर्मत्वाद्विस्वरत्वं भृशं व्रजेत् १९
यश्चाप्यास्यगतो भावो नानादृष्टिसमन्वितः
स वेश्मनः प्रकृष्टत्वाद्व्रजेदव्यक्ततां पराम् २०

प्रेक्षागृहाणां सर्वेषां तस्मान्मध्यममिष्यते
यावत्पाठ्यं च गेयं च तत्र श्रव्यतरं भवेत् २१
प्रेक्षागृहाणां सर्वेषां त्रिप्रकारो विधिः स्मृतः
विकृष्टश्चतुरस्रश्च त्र्यस्रश्चैव प्रयोक्तृभिः
कनीयस्तु स्मृतं त्र्यस्रं चतुरस्रं च मध्यमम्
ज्येष्ठं विकृष्टं विज्ञेयं नाट्यवेश्म प्रयोक्तृभिः
देवानां मानसी सृष्टिर्गृहेषूपवनेषु च
यत्नभावाभिनिष्पन्नाः सर्वे भावा हि मानुषाः २२
तस्माद्देवकृतैर्भावैर्न विस्पर्धेत मानुषः
मानुषस्य तु गेहस्य सम्प्रवक्ष्यामि लक्षणम् २३
भूमेर्विभागं पूर्वं तु परीक्षेत प्रयोजकः
ततो वास्तु प्रमाणेन प्रारभेत शुभेच्छया २४
समा स्थिरा तु कठिना कृष्णा गौरी च या भवेत्
भूमिस्तत्रैव कर्तव्यः कर्तृभिर्नाट्यमण्डपः २५
प्रथमं शोधनं कृत्वा लाङ्गलेन समुत्कृषेत्
अस्थिकीलकपालानि तृणगुल्मांश्च शोधयेत् २६
शोधयित्वा वसुमतीं प्रमाणं निर्दिशेत्ततः
त्रीण्युत्तराणि सौम्यं च विशाखापि च रेवती
हस्ततिष्यानुराधाश्च प्रशस्ता नाट्यकर्मणि
पुष्यनक्षत्रयोगेन शुक्लं सूत्रं प्रसारयेत् २७
कार्पासं बाल्वजं वापि मौञ्जं वाल्कलमेव च
सूत्रं बुधैस्तु कर्तव्यं यस्य च्छेदो न विद्यते २८
अर्धच्छिन्ने भवेत्सूत्रे स्वामिनो नरणं ध्रुवम्
त्रिभागच्छिन्नया रज्ज्वा राष्ट्रकोपो विधीयते २९
छिन्नायां तु चतुर्भागे प्रयोक्तुर्नाश उच्यते
हस्तात्प्रभ्रष्टया वापि कश्चित्त्वपचयो भवेत् ३०

तस्मान्नित्यं प्रयत्नेन रज्जुग्रहणमिष्यते
कार्यं चैव प्रयत्नेन मानं नाट्यगृहस्य तु ३१
मुहूर्तेनानुकूलेन तिथ्या सुकरणेन च
ब्राह्मणांस्तर्पयित्वा तु पुण्याहं वाचयेत्ततः ३२
शान्तितोयं ततो दत्वा ततः सूत्रं प्रसारयेत्
चतुष्षष्टिकरान्कृत्वा द्विधा कुर्यात्पुनश्च तान् ३३
पृष्ठतो यो भवेद्भागो द्विधाभूतस्य तस्य तु
सममर्धविभागेन रङ्गशीर्षं प्रकल्पयेत् ३४
पश्चिमे च विभागेऽथ नेपथ्यगृहमादिशेत्
विभज्य भागान्विधिवद्यथावदनुपूर्वशः ३५
शुभे नक्षत्रयोगे च मण्डपस्य निवेशनम्
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गपणवादिभिः ३६
सर्वातोद्यैः प्रणुदितैः स्थापनं कार्यमेव तु
उत्सार्याणि त्वनिष्टानि पाषण्ड्याश्रमिणस्तथा ३७
काषायवसनाश्चैव विकलाश्चैव ये नराः
निशायां च बलिः कार्यो नानाभोजनसंयुतः ३८
गन्धपुष्पफलोपेतो दिशो दश समाश्रितः
पूर्वेण शुक्लान्नयुतो नीलान्नो दक्षिणेन च ३९
पश्चिमेन बलिः पीतो रक्तश्चैवोत्तरेण तु
यादृशं दिशि यस्यां तु दैवतं परिकल्पितम् ४०
तादृशस्तत्र दातव्यो बलिर्मन्त्रपुरस्कृतः
स्थापने ब्राह्मणेभ्यश्च दातव्यं घृतपायसम् ४१
मधुपर्कस्तथा राज्ञे कर्तृभ्यश्च गुडौदनम्
नक्षत्रेण तु कर्तव्यं मूलेन स्थापनं बुधैः ४२
मुहूर्तेनानुकूलेन तिथ्या सुकरणेन च
एवं तु स्थापनं कृत्वा भित्तिकर्म प्रयोजयेत् ४३

भित्तिकर्मणि निर्वृत्ते स्तम्भानां स्थापनं ततः
तिथिनक्षत्रयोगेन शुभेन करणेन च ४४
स्तम्भानां स्थापनं कार्यं रोहिण्या श्रवणेन वा
आचार्येण सुयुक्तेन त्रिरात्रोपोषितेन च ४५
स्तम्भानां स्थापनं कार्यं प्राप्ते सूर्योदये शुभे
प्रथमे ब्राह्मणस्तम्भे सर्पिस्सर्षपसंस्कृतः ४६
सर्वशुक्लो विधिः कार्यो दद्यात्पायसमेव च
ततश्च क्षत्रियस्तम्भे वस्त्रमाल्यानुलेपनम् ४७
सर्वं रक्तं प्रदातव्यं द्विजेभ्यश्च गुडौदनम्
वैश्यस्तम्भे विधिः कार्यो दिग्भागे पश्चिमोत्तरे ४८
सर्वं पीतं प्रदातव्यं द्विजेभ्यश्च घृतौदनम्
शूद्रस्तम्भे विधिः कार्यः सम्यक्पूर्वोत्तराश्रये ४९
नीलप्रायं प्रयत्नेन कृसरं च द्विजाशनम्
पूर्वोक्तब्राह्मणस्तम्भे शुक्लमाल्यानुलेपने ५०
निक्षिपेत्कनकं मूले कर्णाभरणसंश्रयम्
ताम्रं चाधः प्रदातव्यं स्तम्भे क्षत्रियसंज्ञके ५१
वैश्यस्तम्भस्य मूले तु रजतं सम्प्रदापयेत्
शूद्रस्तम्भस्य मूले तु दद्यादायसमेव च ५२
सर्वेष्वेव तु निक्षेप्यं स्तम्भमूलेषु काञ्चनम्
स्वस्तिपुण्याहघोषेण जयशब्देन चैव हि ५३
स्तम्भानां स्थापनं कार्यं पुष्पमालापुरस्कृतम्
रत्नदानैः सगोदानैर्वस्त्रदानैरनल्पकैः ५४
ब्राह्मणांस्तर्पयित्वा तु स्तम्भानुत्थापयेत्ततः
अचलं चाप्यकम्पञ्च तथैवावलितं पुनः ५५
स्तम्भस्योत्थापने सम्यग्दोषा ह्येते प्रकीर्तिताः
अवृष्टिरुक्ता चलने वलने मृत्युतो भयम् ५६

कम्पने परचक्रात्तु भयं भवति दारुणम्
दोषैरेतैर्विहीनं तु स्तम्भमुत्थापयेच्छिवम्  ५७
पवित्रे ब्राह्मणास्तम्भे दातव्या दक्षिणा च गौः
शेषाणां भोजनं कार्यं स्थापने कर्तृसंश्रयम्  ५८
मन्त्रपूतं च तद्देयं नाट्याचार्येण धीमता
पुरोहितं नृपं चैव भोजयेन्मधुपायसैः  ५९
कर्तॄनपि तथा सर्वान्कृसरां लवणोत्तराम्
सर्वमेवं विधिं कृत्वा सर्वातोद्यैः प्रवादितैः  ६०
अभिमन्त्र्य यथान्यायं स्तम्भानुत्थापयेच्छुचिः
यथाऽचलो गिरिर्मेरुर्हिमवांश्च महाबलः  ६१
जयावहो नरेन्द्रस्य तथा त्वमचलो भव
स्तम्भद्वारं च भित्तिं च नेपथ्यगृहमेव च  ६२
एवमुत्थापयेत्तज्ज्ञो विधिदृष्टेन कर्मणा
रङ्गपीठस्य पार्श्वे तु कर्तव्या मत्तवारणी  ६३
चतुःस्तम्भसमायुक्ता रङ्गपीठप्रमाणतः
अध्यर्धहस्तोत्सेधेन कर्तव्या मत्तवारणी  ६४
उत्सेधेन तयोस्तुल्यं कर्तव्यं रङ्गमण्डपम्
तस्यां माल्यं च धूपं च गन्धं वस्त्रं तथैव च  ६५
नानावर्णानि देयानि तथा भूतप्रियो बलिः
आयसं तत्र दातव्यं स्तम्भानां कुशलैरधः  ६६
भोजने कृसराश्चैव दातव्यं ब्राह्मणाशनम्
एवं विधिपुरस्कारैः कर्तव्या मत्तवारणी  ६७
रङ्गपीठं ततः कार्यं विधिदृष्टेन कर्मणा
रङ्गशीर्षन्तु कर्तव्यं षड्दारुकसमन्वितम्  ६८
कार्यं द्वारद्वयं चात्र नेपथ्यगृहकस्य तु
पूरणे मृत्तिका चात्र कृष्णा देया प्रयत्नतः  ६९

लाङ्गलेन समुत्कृष्य निर्लोष्टतृणशर्करम्
लाङ्गले शुद्धवर्णौ तु धुर्यौ योज्यौ प्रयत्नतः ७०
कर्तारः पुरुषाश्चात्र येऽङ्गदोषविवर्जिताः
अहीनाङ्गैश्च वोढव्या मृत्तिका पिटकैर्नवैः ७१
एवंविधैः प्रकर्तव्यं रङ्गशीर्षं प्रयत्नतः
कूर्मपृष्ठं न कर्तव्यं मत्स्यपृष्ठं तथैव च ७२
शुद्धादर्शतलाकारं रङ्गशीर्षं प्रशस्यते
रत्नानि चात्र देयानि पूर्वे वज्रं विचक्षणैः ७३
वैडूर्यं दक्षिणे पार्श्वे स्फटिकं पश्चिमे तथा
प्रवालमुत्तरे चैव मध्ये तु कनकं भवेत् ७४
एवं रङ्गशिरः कृत्वा दारुकर्म प्रयोजयेत्
ऊहप्रत्यूहसंयुक्तं नानाशिल्पप्रयोजितम् ७५
नानासञ्जवनोपेतं बहुव्यालोपशोभितम्
ससालभञ्जिकाभिश्च समन्तात्समलङ्कृतम् ७६
निर्व्यूहकुहरोपेतं नानाग्रथितवेदिकम्
नानाविन्याससंयुक्तं चित्रजालगवाक्षकम् ७७
सुपीठधारिणीयुक्तं कपोतालीसमाकुलम्
नानाकुट्टिमविन्यस्तैः स्तम्भैश्चाप्युपशोभितम् ७८
एवं काष्ठविधिं कृत्वा भित्तिकर्म प्रयोजयेत्
स्तम्भं वा नागदन्तं वा वातायनमथापि वा ७९
कोणं वा सप्रतिद्वारं द्वारविद्धं न कारयेत्
कार्यः शैलगुहाकारो द्विभूमिर्नाट्यमण्डपः ८०
मन्दवातायनोपेतो निर्वातो धीरशब्दवान्
तस्मान्निवातः कर्तव्यः कर्तृभिर्नाट्यमण्डपः ८१
गम्भीरस्वरता येन कुतपस्य भविष्यति
भित्तिकर्मविधिं कृत्वा भित्तिलेपं प्रदापयेत् ८२

सुधाकर्म बहिस्तस्य विधातव्यं प्रयत्नतः
भित्तिष्वथ विलिप्तासु परिमृष्टासु सर्वतः ८३
समासु जातशोभासु चित्रकर्म प्रयोजयेत्
चित्रकर्मणि चालेख्याः पुरुषाः स्त्रीजनास्तथा ८४
लताबन्धाश्च कर्तव्याश्चरितं चात्मभोगजम्
एवं विकृष्टं कर्तव्यं नाट्यवेश्म प्रयोक्तृभिः ८५
पुनरेव हि वक्ष्यामि चतुरश्रस्य लक्षणम्
समन्ततश्च कर्तव्या हस्ता द्वात्रिंशदेव तु ८६
शुभभूमिविभागस्थो नाट्यज्ञैर्नाट्यमण्डपः
यो विधिः पूर्वमुक्तस्तु लक्षणं मङ्गलानि च ८७
विकृष्टे तान्यशेषाणि चतुरश्रेऽपि कारयेत्
चतुरश्रं समं कृत्वा सूत्रेण प्रविभज्य च ८८
बाह्यतः सर्वतः कार्या भित्तिः श्लिष्टेष्टका दृढा
तत्राभ्यन्तरतः कार्या रङ्गपीठोपरि स्थिताः ८९
दश प्रयोक्तृभिः स्तम्भाः शक्ता मण्डपधारणे
स्तम्भानां बाह्यतश्चापि सोपानाकृति पीठकम् ९०
इष्टकादारुभिः कार्यं प्रेक्षकाणां निवेशनम्
हस्तप्रमाणैरुत्सेधैर्भूमिभागसमुत्थितैः ९१
रङ्गपीठावलोक्यं तु कुर्यादासनजं विधिम्
षडन्यानन्तरे चैव पुनः स्तम्भान्यथादिशम् ९२
विधिना स्थापयेत्तज्ज्ञो दृढान्मण्डपधारणे
अष्टौ स्तम्भान्पुनश्चैव तेषामुपरि कल्पयेत् ९३
स्थाप्यं चैव ततः पीठमष्टहस्तप्रमाणतः
विद्धास्यमष्टहस्तं च पीठं तेषु ततो न्यसेत् ९४
तत्र स्तम्भाः प्रदातव्यास्तज्ज्ञैर्मण्डपधारणे
धारणीधारणास्ते च शालस्त्रीभिरलङ्कृताः ९५

नेपथ्यगृहकं चैव ततः कार्यं प्रयत्नतः
द्वारं चैकं भवेत्तत्र रङ्गपीठप्रवेशनम्  ९६
जनप्रवेशनं चान्यदाभिमुख्येन कारयेत्
रङ्गस्याभिमुखं कार्यं द्वितीयं द्वारमेव तु  ९७
अष्टहस्तं तु कर्तव्यं रङ्गपीठं प्रमाणतः
चतुरश्रं समतलं वेदिकासमलङ्कृतम्  ९८
पूर्वप्रमाणनिर्दिष्टा कर्तव्या मत्तवारणी
चतुःस्तम्भसमायुक्ता वेदिकाग्रास्तु पार्श्वतः  ९९
समुन्नतं समं चैव रङ्गशीर्षं तु कारयेत्
विकृष्टे तून्नतं कार्यं चतुरश्रे समं तथा  १००
एवमेतेन विधिना चतुरश्रं गृहं भवेत्
अतः परं प्रवक्ष्यामि त्र्यश्रगेहस्य लक्षणम्  १०१
त्र्यश्रं त्रिकोणं कर्तव्यं नाट्यवेश्म प्रयोक्तृभिः
मध्ये त्रिकोणमेवास्य रङ्गपीठं तु कारयेत्  १०२
द्वारं तेनैव कोणेन कर्तव्यं तस्य वेश्मनः
द्वितीयं चैव कर्तव्यं रङ्गपीठस्य पृष्टतः  १०३
विधिर्यश्चतुरश्रस्य भित्तिस्तम्भसमाश्रयः
स तु सर्वः प्रयोक्तव्यस्त्र्यश्रस्यापि प्रयोक्तृभिः  १०४
एवमेतेन विधिना कार्या नाट्यगृहा बुधैः
पुनरेषां प्रवक्ष्यामि पूजामेवं यथाविधि  १०५
इति भारतीये नाट्यशास्त्रे मण्डपविधानो नाम द्वितीयोऽध्यायः

## तृतीयोऽध्यायः

सर्वलक्षणसम्पन्ने कृते नाट्यगृहे शुभे
गावो वसेयुः सप्ताहं सह जप्यपरैर्द्विजैः  १
ततोऽधिवासयेद्वेश्म रङ्गपीठं तथैव च

मन्त्रपूतेन तोयेन प्रोक्षिताङ्गो निशागमे २
यथास्थानान्तरगतो दीक्षितः प्रयतः शुचिः
त्रिरात्रोपोषितो भूत्वा नाट्याचार्योऽहताम्बरः ३
नमस्कृत्य महादेवं सर्वलोकोद्भवं भवम्
जगत्पितामहं चैव विष्णुमिन्द्रं गुहं तथा ४
सरस्वतीं च लक्ष्मीं च सिद्धिं मेधां धृतिं स्मृतिम्
सोमं सूर्यं च मरुतो लोकपालांस्तथाश्विनौ ५
मित्रमग्निं सुरान्वर्णान् रुद्रान्कालं कलिं तथा
मृत्युं च नियतिं चैव कालदण्डं तथैव च ६
विष्णुप्रहरणं चैव नागराजं च वासुकिम्
वज्रं विद्युत्समुद्रांश्च गन्धर्वाप्सरसो मुनीन् ७
भूतान् पिशाचान् यक्षांश्च गुह्यकांश्च महेश्वरान्
असुरान्नाट्यविघ्नांश्च तथाऽन्यान्दैत्यराक्षसान् ८
तथा नाट्यकुमारीश्च महाग्रामण्यमेव च
यक्षांश्च गुह्यकांश्चैव भूतसङ्घांस्तथैव च ९
एतांश्चान्यांश्च देवर्षीन्प्रणम्य रचिताञ्जलिः
यथास्थानान्तरगतान्समावाह्य ततो वदेत् १०
भवद्भिर्नो निशायां तु कर्तव्यः सम्परिग्रहः
साहाय्यं चैव दातव्यमस्मिन्नाट्ये सहानुगैः ११
सम्पूज्य सर्वानेकत्र कुतपं सम्प्रयुज्य च
जर्जराय प्रयुञ्जीत पूजां नाट्यप्रसिद्धये १२
त्वं महेन्द्रप्रहरण सर्वदानवसूदन
निर्मितस्सर्वदेवैश्च सर्वविघ्ननिबर्हण १३
नृपस्य विजयं शंस रिपूणां च पराजयम्
गोब्राह्मणशिवं चैव नाट्यस्य च विवर्धनम् १४
एवं कृत्वा यथान्यायमुपास्यं नाट्यमण्डपे

निशायां तु प्रभातायां पूजनं प्रक्रमेदिह १५
आर्द्रायां वा मघायां वा याम्ये पूर्वेषु वा त्रिषु
आश्लेषामूलयोर्वापि कर्तव्यं रङ्गपूजनम् १६
आचार्येण तु युक्तेन शुचिना दीक्षितेन च
रङ्गस्योद्योतेन कार्यं देवतानां च पूजनम् १७
दिनान्ते वारुणे घोरे मुहूर्ते यमदैवते
आचम्य तु यथान्यायं देवता वै निवेशयेत् १८
रक्ताः प्रतिसराः सूत्रं रक्तगन्धाश्च पूजिताः
रक्ताः सुमनसश्चैव यच्च रक्तं फलं भवेत् १९
यवैस्सिद्धार्थकैर्लाजैरक्षतैः शालितण्डुलैः
नागपुष्पस्य चूर्णेन वितुषाभिः प्रियङ्गुभिः २०
एतैर्द्रव्यैर्युतं कुर्याद्देवतानां निवेशनम्
आलिखेन्मण्डलं पूर्व यथास्थानं यथाविधि २१
समन्ततश्च कर्तव्यं हस्ताः षोडश मण्डलम्
द्वाराणि चात्र कुर्वीत विधानेन चतुर्दिशम् २२
मध्ये चैवात्र कर्तव्ये द्वे रेखे तिर्यगूर्ध्वगे
तयोः कक्ष्याविभागेन दैवतानि निवेशयेत् २३
पद्मोपविष्टं ब्रह्माणं तस्य मध्ये निवेशयेत्
आदौ निवेश्यो भगवान्सार्धं भूतगणैः शिवः २४
नारायणो महेन्द्रश्च स्कन्दः सूर्योऽश्विनौ शशी
सरस्वती च लक्ष्मीश्च श्रद्धा मेधा च पूर्वतः २५
पूर्वदक्षिणतो वह्निर्निवेश्यः स्वाहया सह
विश्वेदेवाः सगन्धर्वा रुद्राः सर्पगणास्तथा २६
दक्षिणेन निवेश्यस्तु यमो मित्रश्च सानुगः
पितृन्पिशाचानुरगान् गुह्यकांश्च निवेशयेत् २७
नैर्ऋत्यां राक्षसांश्चैव भूतानि च निवेशयेत्

पश्चिमायां समुद्रांश्च वरुणं यादसां पतिम्  २८
वायव्यायां दिशि तथा सप्त वायुन्निवेशयेत्
तत्रैव विनिवेश्यस्तु गरुडः पक्षिभिः सह  २९
उत्तरस्यां दिशि तथा धनदं संनिवेशयेत्
नाटचस्य मातॄश्च तथा यक्षानथ सगुह्यकान्  ३०
तथैवोत्तरपूर्वायां नन्द्याद्यांश्च गणेश्वरान्
ब्रह्मर्षिभूतसंघांश्च यथाभागं निवेशयेत्  ३१
स्तम्भे सनत्कुमारं तु दक्षिणे दक्षमेव च
ग्रामण्यमुत्तरे स्तम्भे पूजार्थं संनिवेशयेत्  ३२
अनेनैव विधानेन यथास्थानं यथाविधि
सुप्रसादानि सर्वाणि दैवतानि निवेशयेत्  ३३
स्थाने स्थाने यथान्यायं विनिवेश्य तु देवताः
तासां प्रकुर्वीत ततः पूजनं तु यथार्हतः  ३४
देवताभ्यस्तु दातव्यं सितमाल्यानुलेपनम्
गन्धर्ववह्निसूर्येभ्यो रक्तमाल्यानुलेपनम्  ३५
गन्धं माल्यं च धूपं च यथावदनुपूर्वशः
दत्त्वा ततः प्रकुर्वीत बलिं पूजां यथाविधि  ३६
ब्रह्माणं मधुपर्केण पायसेन सरस्वतीम्
शिवविष्णुमहेन्द्राद्याः सम्पूज्या मोदकैरथ  ३७
घृतौदनेन हुतभुक्सोमार्कौ तु गुडौदनैः
विश्वेदेवाः सगन्धर्वा मुनयो मधुपायसैः  ३८
यममित्रौ च सम्पूज्यावपूपैर्मोदकैस्तथा
पितॄन्पिशाचानुरगान् सर्पिःक्षीरेण तर्पयेत्  ३९
पक्वान्नेन तु मांसेन सुरासीथुफलासवैः
अर्चयेद्भूतसंघांश्च चणकैः पललाप्लुतैः  ४०
अनेनैव विधानेन सम्पूज्या मत्तवारणी

पक्वामेन तु मांसेन सम्पूज्या रक्षसां गणाः ४१
सुरामांसप्रदानेन दानवान्प्रतिपूजयेत्
शेषान्देवगणांस्तज्ज्ञः सापूपोत्कारिकौदनैः ४२
मत्स्यैश्च पिष्टभक्ष्यैश्च सागरान्सरितस्तथा
सम्पूज्य वरुणं चापि दातव्यं घृतपायसम् ४३
नानामूलफलैश्चापि मुनीन्सम्प्रतिपूजयेत्
वायूंश्च पक्षिणश्चैव विचित्रैर्भक्ष्यभोजनैः ४४
मातॄर्नाट्यस्य सर्वास्ता धनदं च सहानुगैः
अपूपैर्लाजिकामिश्रैर्भक्ष्यभोज्यैश्च पूजयेत् ४५
एवमेषां बलिः कार्यो नानाभोजनसंश्रयः
पुनर्मन्त्रविधानेन बलिकर्म चवक्ष्यते ४६
देवदेव महाभाग सर्वलोकपितामह
मन्त्रपूतमिमं सर्वं प्रतिगृह्णीष्व मे बलिम् ४७
देवदेव महादेव गणेश त्रिपुरान्तक
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः ४८
नारायणामितगते पद्मनाभ सुरोत्तम
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयार्पितः ४९
पुरन्दरामरपते वज्रपाणे शतक्रतो
प्रगृह्यतां बलिर्देव विधिमन्त्रपुरस्कृतः ५०
देवसेनापते स्कन्द भगवन् शङ्करप्रिय
बलिः प्रीतेन मनसा षण्मुख प्रतिगृह्यताम् ५१
देवि देव महाभागे सरस्वति हरिप्रिये
प्रगृह्यतां बलिर्मातर्मया भक्त्या समपर्तिः ५२
नानानित्तिसम्भूताः पौलस्त्याः सर्व एव तु
राक्षसेन्द्रा महासत्त्वाः प्रतिगृह्णीत मे बलिम् ५३
लक्ष्मीः सिद्धिर्मतिर्मेधा सर्वलोकनमस्कृताः

मन्त्रपूतमिमं देव्यः प्रतिगृह्णन्तु मे बलिम्  ५४
सर्वभूतानुभावज्ञ लोकजीवन मारुत
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः  ५५
देववक्त्र सुरश्रेष्ठ धूमकेतो हुताशन
भक्त्या समुद्यतो देव बलिः सम्प्रतिगृह्यताम्  ५६
सर्वग्रहाणां प्रवर तेजोराशे दिवाकर
भक्त्या मयोद्यतो देव बलिः सम्प्रति गृह्यताम्  ५७
सर्वग्रहपते सोम द्विजराज जगत्प्रिय
प्रगृह्यतामेष बलिर्मन्त्रपूतो मयोद्यतः  ५८
महागणेश्वराः सर्वे नन्दीश्वरपुरोगमाः
प्रगृह्यतां बलिर्भक्त्या मया सम्प्रति चोदितः  ५९
नमः पितृभ्यः सर्वेभ्यः प्रतिगृह्णन्त्विमं बलिम्
कामपाल नमो नित्यं वस्यायं ते विधिः कृतः  ६०
नारदस्तुम्बुरुश्चैव विश्वावसुपुरोगमाः
परिगृह्णन्तु मे सर्वे गन्धर्वा बलिमुद्यतम्  ६१
यमो मित्रश्च भगवानीश्वरौ लोकपूजितौ
इमं मे प्रतिगृह्णीतां बलिं मन्त्रपुरस्कृतम्  ६२
रसातलगतेभ्यश्च पन्नगेभ्यो नमोनमः
दिशस्तु सिद्धिर्नाट्यस्य पूजिताः पापनाशनाः  ६३
सर्वाम्भसां पतिर्देवो वरुणो हंसवाहनः
पूजितः प्रीतिमानस्तु ससमुद्रनदीनदः  ६४
वैनतेय महासत्त्व सर्वपक्षिपते विभो
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः  ६५
धनाध्यक्षो यक्षपतिर्लोकपालो धनेश्वरः
सगुह्यकस्सयक्षश्च प्रतिगृह्णातु मे बलिम्  ६६
नमोऽस्तु नाट्यमातृभ्यो ब्राह्मयाद्याभ्यो नमोनमः

सुमुखीभिः प्रसन्नाभिर्वलिरद्य प्रगृह्यताम् ६७
रुद्रप्रहरणं सर्वं प्रतिगृह्णातु मे बलिम्
विष्णुप्रहरणं चैव विष्णुभक्त्या मयोद्यतम् ६७
तथा कृतान्तः कालश्च सर्वप्राणिवधेश्वरौ
मृत्युश्च नियतिश्चैव प्रतिगृह्णातु मे बलिम् ६९
याश्चास्यां मत्तवारण्यां संश्रिता वास्तुदेवताः
मन्त्रपूतमिमं सम्यक्प्रतिगृह्णन्तु मे बलिम् ७०
अन्ये ये देवगन्धर्वा दिशो दश समाश्रिताः
दिव्यान्तरिक्ष भौमाश्च तेभ्यश्चायं बलिः कृतः ७१
कुम्भं सलिलसम्पूर्णं पुष्पमालापुरस्कृतम्
स्थापयेद्रङ्गमध्ये तु सुवर्णं चात्र दापयेत् ७२
पूजयित्वा तु सर्वाणि दैवतानि यथाक्रमम्
जर्जरस्त्वभिसंपूज्यः स्यात्ततो विघ्नजर्जरः ७३
श्वेतं शिरसि वस्त्रं स्यान्नीलं रौद्रे च पर्वणि
विष्णुपर्वणि वै पीतं रक्तं स्कन्दस्य पर्वणि ७४
मृडपवणि चित्रं तु देयं वस्त्रं हितार्थिना
सदृशं च प्रदातव्यं धूपमाल्यानुलेपनम् ७५
आतोद्यानि च सर्वाणि वासोभिरवगुण्ठयेत्
गन्धैर्माल्यैश्च धूपैश्च भक्ष्यभोज्यैश्च पूजयेत् ७६
सर्वमेव विधिं कृत्वा गन्धमाल्यानुलेपनैः
विघ्नजर्जरणार्थं तु जर्जरं त्वभिमन्त्रयेत् ७७
अत्र विघ्नविनाशार्थं पितामहमुखैस्सुरैः
निर्मितस्त्वं महावीर्यो वज्रसारो महातनुः ७८
शिरस्ते रक्षतु ब्रह्मा सर्वैर्देवगणैः सह
द्वितीयं च हरः पर्व तृतीयं च जनार्दनः ७९
चतुर्थं च कुमारस्ते पञ्चमं पन्नगोत्तमः

नित्यं सर्वेऽपिपान्तु त्वां सुरार्थे च शिवो भव ८०
नक्षत्रेऽभिजिति त्वं हि प्रसूतोऽहितसूदन
जयं चाभ्युदयं चैव पार्थिवस्य समावह ८१
जर्जरं पूजयित्वैवं बलिं सर्वं निवेद्य च
अग्नौ होमं ततः कुर्यान्मन्त्राहुतिपुरस्कृतम् ८२
हुताश एव दीप्ताभिरुल्काभिः परिमार्जनम्
नृपतेर्नर्तकीनां च कुर्याद्दीप्त्यभिवर्धनम् ८३
अभिद्योत्य सहातोद्यैर्नृपतिं नर्तकीस्तथा
मन्त्रपूतेन तोयेन पुनरभ्युक्ष्य तान्वदेत् ८४
महाकुले प्रसूता स्थ गुणौघैश्चाप्यलङ्कृताः
यद्वो जन्मगुणोपेतं तद्वो भवतु नित्यशः ८४
एवमुक्त्वा ततो वाक्यं नृपतेर्भूतये बुधः
नाट्ययोगप्रसिद्ध्यर्थमाशिषस्सम्प्रयोजयेत् ८६
सरस्वती धृतिर्मेधा ह्रीः श्रीर्लक्ष्मीस्स्मृतिर्मतिः
पान्तु वो मातरः सौम्यास्सिद्धिदाश्च भवन्तु वः ८७
होमं कृत्वा यथान्यायं हविर्मन्त्रपुरस्कृतम्
भिन्द्यात्कुम्भं ततश्चैव नाट्याचार्यः प्रयत्नतः ८८
अभिन्ने तु भवेत्कुम्भे स्वामिनः शत्रुतो भयम्
भिन्ने चैव तु विज्ञेयः स्वामिनः शत्रुसंक्षयः ८९
भिन्ने कुम्भे ततश्चैव नाट्याचार्यः प्रयत्नतः
प्रगृह्य दीपिकां दीप्तां सर्व रङ्गं प्रदीपयेत् ९०
क्ष्वेडितैः स्फोटितैश्चैव वल्गितैश्च प्रधावितैः
रङ्गमध्ये तु तां दीप्तां सशब्दां सम्प्रयोजयेत् ९१
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गपणवैस्तथा
सर्वातोद्यैः प्रणदितै रङ्गे युद्धानि कारयेत् ९२
तत्र च्छिन्नं च भिन्नं च दारितं च सशोणितम्

क्षतं प्रदीप्तमायस्तं निमित्तं सिद्धिलक्षणम् ९३
सम्यगिष्टस्तु रङ्गो वै स्वामिनः शुभमावहेत्
पुरस्याबालवृद्धस्य तथा जनपदस्य च ९४
दुरिष्टस्तु तथा रङ्गो दैवतैर्दुरधिष्ठितः
नाट्यविध्वंसनं कुर्यान्नृपस्य च तथाऽशुभम् ९५
य एवं विधिमुत्सृज्य यथेष्टं सम्प्रयोजयेत्
प्राप्नोत्यपचयं शीघ्रं तिर्यग्योनिं च गच्छति ९६
यज्ञेन सम्मितं ह्येतद्रङ्गदैवतपूजनम्
अपूजयित्वा रङ्गं तु नैव प्रेक्षां प्रयोजयेत् ९७
पूजिताः पूजयन्त्येते मानिता मानयन्ति च
तस्मात्सर्वप्रयत्नेन कर्तव्यं रङ्गपूजनम् ९८
न तथा प्रदहत्यग्निः प्रभञ्जनसमीरितः
यथा ह्यपप्रयोगस्तु प्रयुक्तो दहति क्षणात् ९९
शास्त्रज्ञेन विनीतन शुचिना दीक्षितेन च
नाट्याचार्येण शान्तेन कर्तव्यं रङ्गपूजनम् १००
स्थानभ्रष्टं तु यो दद्याद्बलिमुद्विग्नमानसः
मन्त्रहीनो यथा होता प्रायश्चित्ती भवेत्तु सः १०१
इत्ययं यो विधिर्दृष्टो रङ्गदैवतपूजने
नवे नाट्यगृहे कार्यः प्रेक्षायां च प्रयोक्तृभिः १०२

इति भारतीये नाट्यशास्त्रे रङ्गदैवतपूजनं नाम तृतीयोऽध्यायः

## चतुर्थोऽध्यायः

एवं तु पूजनं कृत्वा मया प्रोक्तः पितामहः
आज्ञापय विभो क्षिप्रं कः प्रयोगः प्रयुज्यताम् १
ततोऽस्म्युक्तो भगवता योजयामृतमन्थनम्
एतदुत्साहजननं सुरप्रीतिकरं तथा २

योऽयं समवकारस्तु धर्मकामार्थसाधकः
मया प्राग्ग्रथितो विद्वन्स प्रयोगः प्रयुज्यताम् ३
तस्मिन्समवकारे तु प्रयुक्ते देवदानवाः
हृष्टाः समभवन्सर्वे कर्मभावानुदर्शनात् ४
कस्यचित्त्वथ कालस्य मामाहाम्बुजसम्भवः
नाट्यं सन्दर्शयामोऽद्य त्रिनेत्राय महात्मने ५
ततः सार्ध सुरैर्गत्वा वृषभाङ्कनिवेशनम्
समभ्यर्च्य शिवं पश्चादुवाचेदं पितामहः ६
मया समवकारस्तु योऽयं सृष्टः सुरोत्तम
श्रवणे दर्शने चास्य प्रसादं कर्तुमर्हसि ७
पश्याम इति देवेशो द्रुहिणं वाक्यमब्रवीत्
ततो मामाह भगवान् सज्जो भव महामते ८
ततो हिमवतः पृष्ठे नानानगसमाकुले
बहुभूतगणाकीर्णे रम्यकन्दरनिर्झरे ९
पूर्वरङ्गः कृतः पूर्वं तत्रायं द्विजसत्तमाः
तथा त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः १०
ततो भूतगणा हृष्टाः कर्मभावानुकीर्तनात्
महादेवश्च सुप्रीतः पितामहमथाब्रवीत् ११
अहो नाट्यमिदं सम्यक्त्वया सृष्टं महामते
यशस्यं च शुभार्थं च पुण्यं बुद्धिविवर्धनम् १२
मयाऽपीदं स्मृतं नृत्यं सन्ध्याकालेषु नृत्यता
नानाकरणसंयुक्तैरङ्गहारैर्विभूषितम् १३
पूर्वरङ्गविधावस्मिंस्त्वया सम्यक्प्रयोज्यताम्
वर्धमानकयोगेषु गीतेष्वासारितेषु च १४
महागीतेषु चैवार्थान्सम्यगेवाभिनेष्यसि
यश्चायं पूर्वरङ्गस्तु त्वया शुद्धः प्रयोजितः १५

एभिर्विमिश्रितश्चायं चित्रो नाम भविष्यति
श्रुत्वा महेश्वरवचः प्रत्युक्तस्तु स्वयम्भुवा १६
प्रयोगमङ्गहाराणामाचक्ष्व सुरसत्तम
ततस्तण्डुं समाहूय प्रोक्तवान् भुवनेश्वरः १७
प्रयोगमङ्गहाराणामाचक्ष्व भरताय वै
ततो ये तण्डुना प्रोक्तास्त्वङ्गहारा महात्मना १८
तान्वः करणसंयुक्तान्व्याख्यास्यामि सरेचकान्
स्थिरहस्तोऽङ्गहारस्तु तथा पर्यस्तकः स्मृतः १९
सूचीविद्धस्तथा चैव ह्यपविद्धस्तथैव च
आक्षिप्तकोऽथ विज्ञेयस्तथा चोद्धट्टितः स्मृतः २०
विष्कम्भश्चैव सम्प्रोक्तस्तथा चैवापराजितः
विष्कम्भापसृतश्चैव मत्ताक्रीडस्तथैव च २१
स्वस्तिको रेचितश्चैव पार्श्वस्वस्तिक एव च
वृश्चिकापसृतः प्रोक्तो भ्रमरश्च तथापरः २२
मत्तस्खलितकश्चैव मदाद्विलसितस्तथा
गतिमण्डलको ज्ञेयः परिच्छिन्नस्तथैव च २३
परिवृत्तचितोऽथ स्यात्तथा वैशाखरेचितः
परावृत्तोऽथ विज्ञेयस्तथा चैवाप्यलातकः २४
पार्श्वच्छेदोऽथ सम्प्रोक्तो विद्युद्भ्रान्तस्तथैव च
ऊरूद्वृत्तस्तथा चैव स्यादालीढस्तथैव च २५
रेचितश्चापि विज्ञेयस्तथैवाच्छुरितः स्मृतः
आक्षिप्तरेचितश्चैव सम्भ्रान्तश्च तथापरः २६
अपसर्पस्तु विज्ञेहस्तथा चार्धनिकुट्टकः
द्वात्रिंशदेते सम्प्रोक्ता अङ्गहारास्तु नामतः २७
एतेषां तु प्रवक्ष्यामि प्रयोगं करणाश्रयम्
हस्तपादप्रचारश्च यथा योज्यः प्रयोक्तृभिः २८

अङ्गहारेषु वक्ष्यामि करणेषु च वै द्विजाः
सर्वेषामङ्गहाराणां निष्पत्तिः करणैर्यतः २९
तान्यतः सम्प्रवक्ष्यामि नामतः कर्मतस्तथा
हस्तपादसमायोगो नृत्यस्य करणं भवेत् ३०
द्वे नृत्तकरणे चैव भवतो नृत्तमातृका
द्वाभ्यां त्रिभिश्चतुर्भिर्वाप्यङ्गहारस्तु मातृभिः ३१
त्रिभिः कलापकं चैव चतुर्भिः षण्डकं भवेत्
पञ्चैव करणानि स्युः सङ्घातक इति स्मृतः ३२
षड्भिर्वा सप्तभिर्वापि अष्टभिर्नवभिस्तथा
करणैरिह संयुक्ता अङ्गहाराः प्रकीर्तिताः ३३
एतेषामेव वक्ष्यामि हस्तपादविकल्पनम्
तलपुष्पपुटं पूर्वं वर्तितं वलितोरु च ३४
अपविद्धं समनखं लीनं स्वस्तिकरेचितम्
मण्डलस्वस्तिकं चैव निकुट्टकमथापि च ३५
तथैवार्धनिकुट्टं च कटिच्छिन्नं तथैव च
अर्धरेचितकं चैव वक्षःस्वस्तिकमेव च ३६
उन्नत्तं स्वस्तिकं चैव पृष्ठस्वस्तिकमेव च
दिवस्वस्तिकमलातं च तथैव च कटीसमम् ३७
आक्षिप्तरेचितं चैव विक्षिप्ताक्षिप्तकं तथा
अर्धस्वस्तिकमुद्दिष्टमञ्चितं च तथापरम् ३८
भुजङ्गत्रासितं प्रोक्तमूर्ध्वजानु तथैव च
निकुञ्चितं च मत्तल्लि त्वर्धमत्तल्लि चैव हि ३९
स्याद्रेचकनिकुट्टं च तथा पादापविद्धकम्
वलितं घूर्णितं चैव ललितं च तथापरम् ४०
दण्डपक्षं तथा चैव भुजङ्गत्रस्तरेचितम्
नूपुरं चैव सम्प्रोक्तं तथा वैशाखरेचितम् ४१

भ्रमरं चतुरं चैव भुजङ्गाञ्चितमेव च
दरडरेचितकं चैव तथा वृश्चिककुट्टितम् ४२
कटिभ्रान्तं तथा चैव लतावृश्चिकमेव च
छिन्नं च करणं प्रोक्तं तथा वृश्चिकरेचितम् ४३
वृश्चिकं व्यंसितं चैव तथा पार्श्वनिकुट्टकम्
ललाटतिलकं क्रान्तं कुञ्चितं चक्रमरडलम् ४४
उरोमरडलमाक्षिप्तं तथा तलविलासितम्
अर्गलं चाथ विक्षिप्तमावृत्तं दोलपादकम् ४५
विवृत्तं विनिवृत्तं च पार्श्वक्रान्तं निशुम्भितम्
विद्युभ्रान्तमतिक्रान्तं विवर्तितकमेव च ४६
गजक्रीडितकं चैव तलसंस्फोटितं तथा
गरुडप्लुतकं चैव गरडसूचि तथापरम् ४७
परिवृत्तं समुद्दिष्टं पार्श्वंजानु तथैव च
गृध्रावलीनकं चैव सन्नतं सूच्यथापि च ४८
अर्धसूचीति करणं सूचीविद्धं तथैव च
अपक्रान्तं च सम्प्रोक्तं मयूरललितं तथा ४९
सर्पितं दरडपादं च हरिणप्लुतमेव च
प्रेङ्खोलितं नितम्बं च स्खलितं करिहस्तकम् ५०
प्रसर्पितकमुद्दिष्टं सिंहविक्रीडितं तथा
सिंहाकर्षितमुद्वृत्तं तथोपसृतमेव च ५१
तलसङ्घट्टितं चैव जनितं चावहित्थकम्
निवेशमेलकाक्रीडमूरू द्वृत्तं तथैव च ५२
मदस्खलितकं चैव विष्णुक्रान्तमथापि च
सम्भ्रान्तमथ विष्कम्भमुद्घट्टितमथापि च ५३
वृषभक्रीडितं चैव लोलितं च तथापरम्
नागापसर्पितं चैव शकटास्यं तथैव च ५४

गङ्गावतरणं चैवेत्युक्तमष्टाधिकं शतम्
अष्टोत्तरशतं ह्येतत्करणानां मयोदितम्  ५५
नृत्ते युद्धे नियुद्धे च तथा गतिपरिक्रमे
गतिप्रचारे वक्ष्यामि युद्धचारीविकल्पनम्  ५६
यत्र तत्रापि संयोज्यमाचार्यैर्नाट्यशक्तितः
प्रायेण करणे कार्यो वामो वक्षःस्थितः करः  ५७
चरणस्यानुगश्चापि दक्षिणस्तु भवेत्करः
हस्तपादप्रचारन्तु कटिपार्श्वोरुसंयुतम्  ५८
उरःपृष्ठोदरोपेतं वक्ष्यमाणं निबोधत
यानि स्थानानि याश्चार्यो नृत्तहस्तास्तथैव च  ५९
सा मातृकेति विज्ञेया तद्योगात्करणं भवेत्
कटी कर्णसमा यत्र कोर्परांसशिरस्तथा  ६०
समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत्
वामे पुष्पपुटः पार्श्वे पादोऽग्रतलसञ्चरः  ६१
तथा च सन्नतं पार्श्वं तलपुष्पपुटं भवेत्
कुञ्चितौ भणिबन्धे तु ध्यावृत्तपरिवर्तितौ  ६२
हस्तौ निपतितौ चोर्वोर्वर्तितं करणं तु तत्
शुकतुण्डौ यदा हस्तौ व्यावृत्तपरिवर्तितौ  ६३
ऊरू च वलितौ यस्मिन्वलितोरुकमुच्यते
आवर्त्यं शुकतुण्डाख्यमूरुपृष्ठे निपातयेत्  ६४
वामहस्तश्च वक्षःस्थोऽप्यपविद्धं तु तद्भवेत्
श्लिष्टौ समनखौ पादौ करौ चापि प्रलम्बितौ  ६५
देहः स्वाभाविको यत्र भवेत्समनखं तु तत्
पताकाञ्जलि वक्षःस्थं प्रसारितशिरोधरम्  ६६
निहञ्चितां सकूटं च तल्लीनं करणं स्मृतम्
स्वस्तिकौ रेचिताविद्धौ विश्लिष्टौ कटिसंश्रितौ  ६७

यत्र तत्करणं ज्ञेयं बुधैः स्वस्तिकरेचितम्
स्वस्तिकौ तु करौ कृत्वा प्राङ्मुखोर्ध्वतलौ समौ ६८
तथा च मण्डलं स्थानं मण्डलस्वस्तिकं तु तत्
निकुट्टितौ यदा हस्तौ स्वबाहुशिरसोऽन्तरे ६९
पादौ निकुट्टितौ चैव ज्ञेयं तत्तु निकुट्टकम्
अञ्चितौ बाहुशिरसि हस्तस्त्वभिमुखाङ्गुलिः ७०
निकुञ्चितार्धयोगेन भवेदर्धनिकुट्टकम्
पर्यायशः कटिश्छिन्ना बाह्वोः शिरसि पल्लवौ ७१
पुनःपुनश्च करणं कटिच्छिन्नं तु तद्भवेत्
अपविद्धकरः सूच्या पादश्चैव निकुट्टितः ७२
सन्नतं यत्र पार्श्वं च तद्भवेदर्धरेचितम्
स्वस्तिकौ चरणौ यत्र करौ वक्षसि रेचितौ ७३
निकुञ्चितं तथा वक्षो वक्षस्स्वस्तिकमेव तत्
अञ्चितेन तु पादेन रेचितौ तु करौ यदा ७४
उन्मत्तं करणं तत्तु विज्ञेयं नृत्तकोविदैः
हस्ताभ्यामथ पादाभ्यां भवतः स्वस्तिकौ यदा ७५
तत्स्वस्तिकमिति प्रोक्तं करणं करणार्थिभिः
विक्षिप्ताक्षिप्तबाहुभ्यां स्वस्तिकौ चरणौ यदा ७६
अपक्रान्तार्धसूचिभ्यां तत्पृष्ठस्वस्तिकं भवेत्
पार्श्वयोरग्रतश्चैव यत्र श्लिष्टः करो भवेत् ७७
स्वस्तिकौ हस्तपादाभ्यां तद्दिक्स्वस्तिकमुच्यते
अलातं चरणं कृत्वा व्यंसयेद्दक्षिणं करम् ७८
ऊर्ध्वजानुक्रमं कुर्यादलातकमिति स्मृतम्
स्वस्तिकापसृतः पादः करौ नाभिकटिस्थितौ ७९
पार्श्वमुद्वाहितं चैव करणं तत्कटीसमम्
हस्तो हृदि भवेद्वामः सव्यश्चाक्षिप्तरेचितः ८०

रेचितश्चापविद्धश्च तत्स्यादाक्षिप्तरेचितम्
विक्षिप्तं हस्तपादं च तस्यैवाक्षेपणं पुनः ८१
यत्र तत्करणं ज्ञेयं विक्षिप्ताक्षिप्तकं द्विजाः
स्वस्तिकौ चरणौ कृत्वा करिहस्तं च दक्षिणम् ८२
वक्षःस्थाने तथा वाममर्धस्वस्तिकमादिशेत्
व्यावृत्तपरिवृत्तस्तु स एव तु करो यदा ८३
अञ्चितो नासिकाग्रे तु तदञ्चितमुदाहृतम्
कुञ्चितं पादमुत्क्षिप्य त्र्यश्रमूरुं विवर्तयेत् ८४
कटिजानुविवर्ताच्च भुजङ्गत्रासितं भवेत्
कुञ्चितं पादमुत्क्षिप्य जानुस्तनसमं न्यसेत् ८५
प्रयोगवशगौ हस्तादूर्ध्वजानु प्रकीर्तितम्
वृश्चिकं करणं कृत्वा करं पार्श्वे निकुञ्चियेत् ८६
नासाग्रे दक्षिणं चैव ज्ञेयं तत्तु निकुञ्चितम्
वामदक्षिणपादाभ्यां घूर्णमानोपसर्पणैः ८७
उद्वेष्टितापविद्धैश्च हस्तैर्मत्तल्ल्युदाहृतम्
स्खलितापसृतौ पादौ वामहस्तश्च रेचितः ८८
सव्यहस्तः कटिस्थः स्यादर्धमत्तल्लि तत्स्मृतम्
रेचितो दक्षिणो हस्तः पादः सव्यो निकुट्टितः ८९
दोला चैव भवेद्वामस्तद्रेचितनिकुट्टितम्
कायौ नाभितटे हस्तौ प्राङ्मुखौ खटकामुखौ ९०
सूचीविद्धावपक्रान्तौ पादौ पादापविद्धके
अपविद्धो भवेद्धस्तः सूचीपादस्तथैव च ९१
तथा त्रिकं विवृत्तं च वलितं नाम तद्भवेत्
वर्तिताघूर्णितः सव्यो हस्तो वामश्च दोलितः ९२
स्वस्तिकापसृतः पादः करणं घूर्णितं तु तत्
करिहस्तो भवेद्वामो दक्षिणश्च विवर्तितः ९३

बहुशः कुट्टितः पादो ज्ञेयं तल्ललितं बुधैः
ऊर्ध्वजानुं विधायाथ तस्योपरि लतां न्यसेत् ९४
दण्डपक्षं तु तत्प्रोक्तं करणं नृत्तवेदिभिः
भुजङ्गत्रासितं कृत्वा यत्रोभावपि रेचितौ ९५
वामपार्श्वस्थितौ हस्तौ भुजङ्गत्रस्तरेचितम्
त्रिकं सुवलितं कृत्वा लतारेचितकौ करौ ९६
नुपूरश्च तथा पादः करणे नूपुरे न्यसेत्
रेचितौ हस्तपादौ च कटी ग्रीवा च रेचिता ९७
वैशाखस्थानकेनैतद्भवेद्वैशाखरेचितम्
आक्षिप्तः स्वस्तिकः पादः करौ चोद्वेष्टितौ तथा ९८
त्रिकस्य वलनाच्चैव ज्ञेयं भ्रमरकं तु तत्
अञ्चितः स्यात्करो वामः सव्यश्चतुर एव तु ९९
दक्षिणः कुट्टितः पादश्चतुरं तत्प्रकीर्तितम्
भुजङ्गत्रासितः पादो दक्षिणो रेचितः करः १००
लताख्यश्च करो वामो भुजङ्गाञ्चितकं भवेत्
विक्षिप्तं हस्तपादं तु समन्ताद्यत्र दण्डवत् १०१
रेच्यते तद्धि करणं ज्ञेयं दण्डकरेचितम्
वृश्चिकं चरणं कृत्वा द्वावप्यथ निकुट्टितौ १०२
विधातव्यौ करौ तत्तु ज्ञेयं वृश्चिककुट्टितम्
सूचीं कृत्वापविद्धं च दक्षिणं चरणं न्यसेत् १०३
रेचिता च कटिर्यत्र कटिभ्रान्तं तदुच्यते
अञ्चितः पृष्ठतः पादः कुञ्चितोर्ध्वतलाङ्गुलिः १०४
लताख्यश्च करो वामस्तल्लतावृश्चिकं भवेत्
अलपद्मः कटीदेशे छिन्ना पर्यायशः कटी १०५
वैशाखस्थानकेनेह तच्छिन्नं करणं भवेत्
वृश्चिकं चरणं कृत्वा स्वस्तिकौ च करावुभौ १०६

रेचितौ विप्रकीर्णौ च करौ वृश्चिकरेचितम्
बाहुशीर्षाञ्चितौ हस्तौ पादः पृष्ठाञ्चितस्तथा  १०७
दूरसन्नतपृष्ठं च वृश्चिकं तत्प्रकीर्तितम्
आलीढं स्थानकं यत्र करौ वक्षसि रेचितौ  १०८
ऊर्ध्वाधोविप्रकीर्णौ च व्यंसितं करणं तु तत्
हस्तौ तु स्वस्तिकौ पार्श्वे तथा पादो निकुट्टितः  १०९
यत्र तत्करणं ज्ञेयं बुधैः पार्श्वनिकुट्टितम्
वृश्चिकं चरणं कृत्वा पादस्याङ्गुष्ठकेन तु  ११०
ललाटे तिलकं कुर्याल्ललाटतिलकं तु तत्
पृष्ठतः कुञ्चितं कृत्वा व्यतिक्रान्तक्रमं ततः  १११
आक्षिप्तौ च करौ कार्यौ क्रान्तके करणे द्विजाः
आद्यः पादो नतः कार्यः सव्यहस्तश्च कुञ्चितः  ११२
उत्तानो वामपार्श्वस्थस्तत्कुञ्चितमुदाहृतम्
प्रलम्बिताभ्यां बाहुभ्यां यद्गात्रेणानतेन च  ११३
अभ्यन्तरापविद्धः स्यात्तज्ज्ञेयं चक्रमण्डलम्
स्वस्तिकापसृतौ पादावपविद्धक्रमौ यदा  ११४
उरोमण्डलकौ हस्तावुरोमण्डलिकन्तु तत्
आक्षिप्तं हस्तपादं च क्रियते यत्र वेगतः  ११५
आक्षिप्तं नाम करणं विज्ञेयं तत् द्विजोत्तमाः
ऊर्ध्वाङ्गुलितलः पादः पार्श्वेनोर्ध्वं प्रसारितः  ११६
प्रकुर्यादञ्चिततलौ हस्तौ तलविलासिते
पृष्ठतः प्रसृतः पादो द्वौ तालावर्धमेव च  ११७
तस्यैव चानुगो हस्तः पुरतस्त्वर्गलं तु तत्
विक्षिप्तं हस्तपादं च पृष्ठतः पार्श्वतोऽपि वा  ११८
एकमार्गगतं यत्र तद्विक्षिप्तमुदाहृतम्
प्रसार्य कुञ्चितं पादं पुनरावर्तयेत् द्रुतम्  ११९

प्रयोगवशगौ हस्तौ तदावर्तमुदाहृतम्
कुञ्चितं पादमुत्क्षिप्य पार्श्वात्पार्श्वं तु डोलयेत् १२०
प्रयोगवशगौ हस्तौ डोलापादं तदुच्यते
आक्षिप्तं हस्तपादं च त्रिकं चैव विवर्तयेत् १२१
रेचितो च तथा हस्तौ विवृत्ते करणे द्विजाः
सूचीविद्धं विधायाथ त्रिकं तु विनिवर्तयेत् १२२
करौ च रेचितौ कार्यौ विनिवृत्ते द्विजोत्तमाः
पार्श्वक्रान्तक्रमं कृत्वा पुरस्तादथ पातयेत् १२३
प्रयोगवशगौ हस्तौ पार्श्वक्रान्तं तदुच्यते
पृष्ठतः कुञ्चितः पादो वक्षश्चैव समुन्नतम् १२४
तिलके च करः स्थाप्यस्तन्निस्तम्भितमुच्यते
पृष्ठतो वलितं पादं शिरोघृष्टं प्रसारयेत् १२५
सर्वतो मण्डलाविद्धं विद्युद्भ्रान्तं तदुच्यते
अतिक्रान्तक्रमं कृत्वा पुरस्तात्संप्रसारयेत् १२६
प्रयोगवशगौ हस्तावतिक्रान्ते प्रकीर्तितौ
आक्षिप्तं हस्तपादं च त्रिकं चैव विवर्तितम् १२७
द्वितीयो रचितो हस्तो विवर्तितकमेव तत्
कर्णेऽञ्चितः करो वामो लताहस्तश्च दक्षिणः १२८
दोलापादस्तथा चैव गजक्रीडितकं भवेत्
द्रुतमुत्क्षिप्य चरणं पुरस्तादथ पातयेत् १२९
तलसंस्फोटितौ हस्तौ तलसंस्फोटिते मतौ
पृष्ठप्रसारितः पादः लतारेचितकौ करौ १३०
समुन्नतं शिरश्चैव गरुडप्लुतकं भवेत्
सूचीपादो नतं पार्श्वमेको वक्षःस्थितः करः १३१
द्वितीयश्चाञ्चितो गण्डे गण्डसूची तदुच्यते
ऊर्ध्वापवेष्टितौ हस्तौ सूचीपादो विवर्तितः १३२

परिवृत्तत्रिकं चैव परिवृत्तं तदुच्यते
एकः समस्थितः पाद ऊरुपृष्ठे स्थितोऽपरः १३३
मुष्टिहस्तश्च वक्षःस्थः पार्श्वजानु तदुच्यते
पृष्ठप्रसारितः पादः किञ्चिदञ्चितजानुकः १३४
यत्र प्रसारितौ बाहू तत्स्यात् गृध्रावलीनकम्
उत्प्लुत्य चरणौ कार्यावग्रतः स्वस्तिकस्थितौ १३५
सन्नतौ च तथा हस्तौ सन्नतं तदुदाहृतम्
कुञ्चितं पादमुत्क्षिप्य कुर्यादग्रस्थितं भुवि १३६
प्रयोगवशगौ हस्तौ सा सूची परिकीर्तिता
अलपद्मः शिरोहस्तः सूचीपादश्च दक्षिणः १३७
यत्र तत्करणं ज्ञेयमर्धसूचीति नामतः
पादसूच्या यदा पादो द्वितीयस्तु प्रविध्यते १३८
कटिवक्षःस्थितौ हस्तौ सूचीविद्धं तदुच्यते
कृत्वोरुवलितं पादमपक्रान्तक्रमं न्यसेत् १३९
प्रयोगवशगौ हस्तावपक्रान्तं तदुच्यते
वृश्चिकं चरणं कृत्वा रेचितौ च तथा करौ १४०
तथा त्रिकं विवृत्तं च मयूरललितं भवेत्
अञ्चितापसृतौ पादौ शिरश्च परिवाहितम् १४१
रेचितौ च तथा हस्तौ तत्सर्पितमुदाहृतम्
नूपुरं चरणं कृत्वा दण्डपादं प्रसारयेत् १४२
क्षिप्राविद्धकरं चैव दण्डपादं तदुच्यते
अतिक्रान्तक्रमं कृत्वा समुत्प्लुत्य निपातयेत् १४३
जङ्घाञ्चितोपरि क्षिप्ता तद्विद्याद्धरिणप्लुतम्
डोलापादक्रमं कृत्वा समुत्प्लुत्य निपातयेत् १४४
परिवृत्तत्रिकं चैव तत्प्रेङ्खोलितमुच्यते
भुजावूर्ध्वविनिष्क्रान्तौ हस्तौ चाभिमुखाङ्गुली १४५

बद्धा चारी तथा चैव नितम्बे करणे भवेत्
दोलापादक्रमं कृत्वा हस्तौ तदनुगावुभौ १४६
रेचितौ घूर्णितौ वापि स्खलितं करणं भवेत्
एको वक्षःस्थितो हस्तः प्रोद्वेष्टिततलोऽपरः १४७
अञ्चितश्चरणश्चैव प्रयोज्यः करिहस्तके
एकस्तु रेचितो हस्तो लताख्यस्तु तथा परः १४८
प्रसर्पिततलौ पादौ प्रसर्पितकमेव तत्
अलातं च पुरःकृत्वा द्वितीयं च द्रुतक्रमम् १४९
हस्तौ पादानुगौ चापि सिंहविक्रीडिते स्मृतौ
पृष्ठप्रसर्पितः पादस्तथा हस्तौ निकुञ्चितौ १५०
पुनस्तथैव कर्तव्यौ सिंहाकर्षितके द्विजाः
आक्षिप्तहस्तमाक्षिप्तदेहमाक्षिप्तपादकम् १५१
उद्वृत्तगात्रमित्येतदुद्वृत्तं करणं स्मृतम्
आक्षिप्तश्चरणश्चैको हस्तौ तस्यैव चानुगौ १५२
आनतं च तथा गात्रं तथोपसृतकं भवेत्
दोलापादक्रमं कृत्वा तलसङ्घट्टितौ करौ १५३
रेचयेच्च करं वामं तलसङ्घट्टिते सदा
एको वक्षःस्थितो हस्तो द्वितीयश्च प्रलम्बितः १५४
तलाग्रसंस्थितः पादो जनिते करणे भवेत्
जनितं करणं कृत्वा हस्तौ चाभिमुखाङ्गुली १५५
शनैर्निपतितौ चैव ज्ञेयं तदवहित्थकम्
करौ वक्षःस्थितौ कार्यावुरो निर्भुग्नमेव च १५६
मण्डलस्थानकं चैव निवेशं करणं तु तत्
तलसञ्चरपादाभ्यामुत्प्लुत्य पतनं भवेत् १५७
संनतं वलितं गात्रमेलकाक्रीडितं तु तत्
करमावृत्तकरणमूरुपृष्ठेऽञ्चितं न्यसेत् १५८

जङ्घाञ्चिता तथोद्वृत्ता ह्यूरूद्वृत्तं तु तद्भवेत्
करौ प्रलम्बितौ कार्यौ शिरश्च परिवाहितम् १५९
पादौ च वलिताविद्धौ मदस्खलितके द्विजाः
पुरः प्रसारितः पादः कुञ्चितो गगनोन्मुखः १६०
करौ च रेचितौ यत्र विष्णुक्रान्तं तदुच्यते
करमावर्तितं कृत्वा ह्यूरुपृष्ठे निकुञ्चयेत् १६१
ऊरुश्चैव तथाविद्धः सम्भ्रान्तं करणं तु तत्
अपविद्धः करः सूच्या पादश्चैव निकुट्टितः १६२
वक्षःस्थश्च करो वामो विष्कम्भे करणे भवेत्
पादावुद्घट्टितौ कार्यौ तलसङ्घट्टितौ करौ १६३
नतश्च पार्श्वं कर्तव्यं बुधैरुद्घट्टिते सदा
प्रयुज्यालातकं पूर्वं हस्तौ चापि हि रेचयेत् १६४
कुञ्चितावञ्चितौ चैव वृषभक्रीडिते सदा
रेचितावञ्चितौ हस्तौ लोलितं वर्तितं शिरः १६५
उभयोः पार्श्वयोर्यत्र तल्लोलितमुदाहृतम्
स्वस्तिकापसृतौ पादौ शिरश्च परिवाहितम् १६६
रेचितौ च तथा हस्तौ स्यातां नागापसर्पिते
निषण्णाङ्गस्तु चरणं प्रसार्य तलसञ्चरम् १६७
उद्वाहितमुरः कृत्वा शकटास्यं प्रयोजयेत्
ऊर्ध्वाङ्गुलितलौ पादौ त्रिपताकावधोमुखौ १६८
हस्तौ शिरस्सन्नतं च गङ्गावतरणं त्विति
यानि स्थानानि याश्चार्यो व्यायामे कथितानि तु १६९
पादप्रचारस्त्वेषां तु करणानामयं भवेत्
ये चापि नृत्तहस्तास्तु गदिता नृत्तकर्मणि १७०
तेषां समासतो योगः करणेषु विभाव्यते
प्रायेण करणे कार्यो वामो वक्षः स्थितः करः १७१

चरणश्चानुगश्चापि दक्षिणस्तु भवेत्करः
चार्यश्चैव तु याः प्रोक्ता नृत्तहस्तास्तथैव च १७२
सा मातृकेति विज्ञेया तद्भेदात्करणानि तु
अष्टोत्तरशतं ह्येतत्करणानां मयोदितम् १७३
अतः परं प्रवक्ष्यामि ह्यङ्गहारविकल्पनम्
प्रसार्योत्क्षिप्य च करौ समपादं प्रयोजयेत् १७४
व्यंसितापसृतं सव्यं हस्तमूर्ध्वं प्रसारयेत्
प्रत्यालीढं ततः कुर्यात्तथैव च निकुट्टकम् १७५
ऊरूद्वृत्तं ततः कुर्यादाक्षिप्तं स्वस्तिकं ततः
नितम्बं करिहस्तं च कटिच्छिन्नं च योगतः १७६
स्थिरहस्तो भवेदेष त्वङ्गहारो हरप्रियः
तलपुष्पापविद्धे द्वे वर्तितं सनिकुट्टकम् १७७
ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलमेव च
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च १७८
एषः पर्यस्तको नाम ह्यङ्गहारो हरोद्भवः
अलपल्लवसूचीं च कृत्वा विक्षिप्तमेव च १७९
आवर्तितं ततः कुर्यात्तथैव च निकुट्टकम्
ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलमेव च १८०
करिहस्तं कटिच्छिन्नं सूत्रीविद्धो भवेदयम्
अपविद्धं तु करणं सूचीविद्धं तथैव च १८१
उद्वेष्टितेन हस्तेन त्रिकं तु परिवर्तयेत्
उरोमण्डलकौ हस्तौ कटिच्छिन्नं तथैव च १८२
अपविद्धोऽङ्गहारश्च विज्ञेयोऽयं प्रयोक्तृभिः
करणं नूपुरं कृत्वा विक्षिप्तालातके पुनः १८३
पुनराक्षिप्तकं कुर्यादुरोमण्डलकं तथा
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च १८४

आक्षिप्तकः स विज्ञेयो ह्यङ्गहारः प्रयोक्तृभिः
उद्वेष्टितापविद्धस्तु करः पादो निकुट्टितः १८५
पुनस्तेनैव योगेन वामपार्श्वे भवेदथ
उरोमण्डलकौ हस्तौ नितम्बं करिहस्तकम् १८६
कर्तव्यं सकटिच्छिन्नं नृत्ते तूद्धट्टिते सदा
पर्यायोद्वेष्टितौ हस्तौ पादौ चैव निकुट्टितौ १८७
कुञ्चितावञ्चितौ चैव ह्यूरूद्वृत्तं तथैव च
चतुरश्रं करं कृत्वा पादेन च निकुट्टकम् १८८
भुजङ्गत्रासितं चैव करं चोद्वेष्टितं पुनः
परिच्छिन्नं च कर्तव्यं त्रिकं भ्रमरकेण तु १८९
करिहस्तं कटिच्छिन्नं विष्कम्भे परिकीर्तितम्
दण्डपादं करं चैव विक्षिप्याक्षिप्य चैव हि १९०
व्यंसितं वामहस्तं च सह पादेन सर्पयेत्
निकुट्टकद्वयं कार्यमाक्षिप्तं मण्डलोरसि १९१
करिहस्तं कटिच्छिन्नं कर्तव्यमपराजिते
कुट्टितं करणं कृत्वा भुजङ्गत्रासितं तथा १९२
रेचितेन तु हस्तेन पताकं हस्तमादिशेत्
आक्षिप्तकं प्रयुञ्जीत ह्युरोमण्डलकं तथा १९३
लताख्यं सकटिच्छिन्नं विष्कम्भापसृते भवेत्
त्रिकं सुवलितं कृत्वा नूपुरं करणं तथा १९४
भुजङ्गत्रासितं सव्यं तथा वैशाखरेचितम्
आक्षिप्तकं ततः कृत्वा परिच्छिन्नं तथैव च १९५
बाह्यभ्रमरकं कुर्यादुरोमण्डलमेव च
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च १९६
मत्ताक्रीडो भवेदेष ह्यङ्गहारो हरप्रियः
रेचितं हस्तपादं च कृत्वा वृश्चिकमेव च १९७

पुनस्तेनैव योगेन वृश्चिक सम्प्रयोजयेत्
निकुट्टकं तथा चैव सव्यासव्यकृतं क्रमात्  १९८
लताख्यः सकटिच्छेदो भवेत्स्वस्तिकरेचिते
पार्श्वे तु स्वस्तिकं बद्ध्वा कार्यं त्वथ निकुट्टकम्  १९९
द्वितीयस्य च पार्श्वस्य विधिः स्यादयमेव हि
ततश्च करमावर्त्य ह्यूरुपृष्ठे निपातयेत्  २००
ऊरूद्वृत्तं ततः कुर्यादाक्षिप्तं पुनरेव हि
नितम्ब करिहस्तं च कटिच्छिन्नं तथैव च  २०१
पार्श्वस्वस्तिक इत्येष ह्यङ्गहारः प्रकीर्तितः
वृश्चिकं करणं कृत्वा लताख्यं हस्तमेव च  २०२
तमेव च करं भूयो नासाग्रे सन्निकुञ्चयेत्
तमेवोद्वेष्टितं कृत्वा नितम्बं परिवर्तयेत्  २०३
करिहस्तं कटिच्छिन्नं वृश्चिकापसृते भवेत्
कृत्वा नूपुरपादं तु तथाक्षिप्तकमेव च  २०४
परिच्छिन्नं च कर्तव्यं सूचीपादं तथैव च
नितम्बं करिहस्तं चाप्युरोमण्डलकं तथा  २०५
कटिच्छिन्नं ततश्चैव भ्रमरः सतु संज्ञितः
मत्तल्लिकरणं कृत्वा करमावर्त्य दक्षिणम्  २०६
कपोलस्य प्रदेशे तु कार्यं सम्यङ् निकुञ्चितम्
अपविद्धं द्रुतं चैव तलसंस्फोटसंयुतम्  २०७
करिहस्तं कटिच्छिन्नं मत्तस्खलितके भवेत्
दोलैः करैः प्रचलितैः स्वस्तिकापसृतैः पदैः  २०८
अञ्चितैर्वलितैर्हस्तैस्तलसङ्घट्टितैस्तथा
निकुट्टितं च कर्तव्यमूरूद्वृत्तं तथैव च  २०९
करिहस्तं कटिच्छिन्नं मदाद्विलसिते भवेत्
मण्डलं स्थानकं कृत्वा तथा हस्तौ च रेचितौ  २१०

उद्धट्टितेन पादेन मत्तल्लिकरणं भवेत्
आक्षिप्तं करणं चैव ह्युरोमण्डलमेव च २११
कटिच्छिन्नं तथा चैव भवेत्तु गतिमण्डले
समपादं प्रयुज्याथ परिच्छिन्नं त्वनन्तरम् २१२
आविद्धेन तु पादेन बाह्यभ्रमरकं तथा
वामसूच्या त्वतिक्रान्तं भुजङ्गत्रासितं तथा २१३
करिहस्तं कटिच्छिन्नं परिच्छिन्ने विधीयते
शिरसस्तूपरि स्थाप्यौ स्वस्तिकौ विच्युतौ करौ २१४
ततः सव्यं करं चापि गात्रमानम्य रेचयेत्
पुनरुत्थापयेत्तत्र गात्रमुन्नम्य रेचितम् २१५
लताख्यौ च करौ कृत्वा वृश्चिकं सम्प्रयोजयेत्
रेचितं करिहस्तं च भुजङ्गत्रासितं तथा २१६
आक्षिप्तकं प्रयुञ्जीत स्वस्तिकं पादमेव च
पराङ्मुखविधिर्भूय एवमेव भवेदिह २१७
करिहस्तं कटिच्छिन्नं परिवृत्तकरेचिते
रेचितौ सह गात्रेण ह्यपविद्धौ करौ यदा २१८
पुनस्तेनैव देशेन गात्रमुन्नम्य रेचयेत्
कुर्यान्नूपुरपादं च भुजङ्गत्रासितं तथा २१९
रेचितं मण्डलं चैव बाहुशीर्षे निकुञ्चयेत्
ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलमेव च २२०
करिहस्तं कटिच्छिन्नं कुर्याद्वैशाखरेचिते
आद्यं तु जनितं कृत्वा पादमेकं प्रसारयेत् २२१
तथैवालातकं कुर्यात्त्रिकं तु परिवर्तयेत्
अञ्चितं वामहस्तं च गण्डदेशे निकुट्टयेत् २२२
कटिच्छिन्नं तथा चैव परावृत्ते प्रयोजयेत्
स्वस्तिकं करणं कृत्वा व्यंसितौ च करौ पुनः २२३

अलातकं प्रयुञ्जीत ह्यूर्ध्वजानु निकुञ्चितम्
अर्धसूची च विक्षिप्तमुद्वृत्ताक्षिप्तके तथा २२४
करिहस्तं कटिच्छिन्नमङ्गहारे ह्यलातके
निकुटय वक्षसि करावूर्ध्वजानु प्रयोजयेत् २२५
आक्षिप्तस्वस्तिकं कृत्वा त्रिकं तु परिवर्तयेत्
उरोमण्डलकौ हस्तौ नितम्बं करिहस्तकम् २२६
कटिच्छिन्नं तथा चैव पार्श्वच्छेदे विधीयते
सूचीवामपदं दद्याद्विद्युद्भ्रान्तं च दक्षिणम् २२७
दक्षिणेन पुनः सूची विद्युद्भ्रान्तं च वामतः
परिच्छिन्नं तथा चैव ह्यतिक्रान्तं च वामकम् २२८
लताख्यं सकटिच्छिन्नं विद्युद्भ्रान्तश्च स स्मृतः
कृत्वा नूपुरपादं तु सव्यवामौ प्रलम्बितौ २२९
करौ पार्श्वे ततस्ताभ्यां विक्षिप्तं सम्प्रयोजयेत्
ताभ्यां सूची तथा चैव त्रिकं तु परिवर्तयेत् २३०
लताख्यं सकटिच्छिन्नं कुर्यादुद्वृत्तके सदा
आलीढव्यंसितौ हस्तौ बाहुशीर्षे निकुट्टयेत् २३१
नूपुरश्चरणो वामस्तथालातश्च दक्षिणः
तेनैवाक्षिप्तकं कुर्यादुरोमण्डलकौ करौ २३२
करिहस्तं कटिच्छिन्नमालीढे सम्प्रयोजयेत्
हस्तं तु रेचितं कृत्वा पार्श्वमानम्य रेचयेत् २३३
पुनस्तेनैव योगेन गात्रमानम्य रेचयेत्
रेचितं करणं कार्यमुरोमण्डलमेव च २३४
कटिच्छिन्नं तु कर्तव्यमङ्गहारे तु रेचिते
नूपुरं चरणं कृत्वा त्रिकं तु परिवर्तयेत् २३५
व्यंसितेन तु हस्तेन त्रिकमेव विवर्तयेत्
वामं चालातकं कृत्वा सूचीमत्रैव योजयेत् २३६

करिहस्तं कटिच्छिन्नं कुर्यादाच्छुरिते सदा
रेचितौ स्यस्तिकौ पादौ रेचितौ स्वस्तिकौ करौ २३७
कृत्वा विश्लेषमेवं तु तेनैव विधिना पुनः
पुनरुत्क्षेपणं चैव रेचितैरेव कारयेत् २३८
उद्वृत्ताक्षिप्तके चैव ह्युरोमण्डलमेव च
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च २३९
आक्षिप्तरेचितो ह्येष करणानां विधिः स्मृतः
विक्षिप्तं करणं कृत्वा हस्तपादं मुखानुगम् २४०
वामसूचीसहकृतं विक्षिपेद्वामकं करम्
वक्षःस्थाने भवेत्सव्यो वलितं त्रिकमेव च २४१
नूपुराक्षिप्तके चैव ह्यर्धस्वस्तिकमेव च
नितम्बं करिहस्तं च ह्युरोमण्डलकं तथा २४२
कटिच्छिन्नं च कर्तव्यं सम्भ्रान्ते नृत्तयोक्तृभिः
अपक्रान्तक्रमं कृत्वा व्यंसितं हस्तमेव च २४३
कुर्यादुद्वेष्टितं चैव ह्यर्धसूचीं तथैव च
विक्षिप्तं सकटिच्छिन्नमुद्वृत्ताक्षिप्तके तथा २४४
करिहस्तं कटिच्छिन्नं कर्तव्यमपसर्पिते
कृत्वा नूपुरपादं च द्रुतमाक्षिप्य च क्रमम् २४५
पादस्य चानुगौ हस्तौ त्रिकं च परिवर्तयेत्
निकुट्य करपादं चाप्युरोमण्डलकं पुनः २४६
करिहस्तं कटिच्छिन्नं कार्यमर्धनिकुट्टके
द्वात्रिंशदेते सम्प्रोक्ता ह्यङ्गहारा द्विजोत्तमाः २४७
चतुरो रेचकांश्चापि गदतो मे निबोधत
पादरेचक एकः स्यात् द्वितीयः कटिरेचकः २४८
कररेचकस्तृतीयस्तु चतुर्थः कण्ठरेचकः
रेचिताख्यः पृथग्भावे वलने चाभिधीयते

उद्वाहनात्पृथग्भावाच्चलनाच्चापि रेचकः
पार्श्वात्पार्श्वे तु गमनं स्खलितैश्चलितैः पदैः
विविधैश्चैव पादस्य पादरेचक उच्यते
त्रिकस्योद्वर्तनं चैव कटीवलनमेव च
तथाऽपसर्पणं चैव कटिरेचक उच्यते
उद्वर्तनं परिक्षेपो विक्षेपः परिवर्तनम्
विसर्पणं च हस्तस्य हस्तरेचक उच्यते
उद्वाहनं सन्नमनं तथा पार्श्वस्य सन्नतिः
भ्रमणं चापि विज्ञेयो ग्रीवाया रेचको बुधैः
रेचकैरङ्गहारैश्च नृत्यन्तं वीक्ष्य शङ्करम्  २४९
सुकुमारप्रयोगेण नृत्यन्तीं चैव पार्वतीम्
मृदङ्गभेरीपटहैर्भाण्डडिण्डिमगोमुखैः  २५०
पणवैर्दर्दुरैश्चैव सर्वातोद्यैः प्रवादितैः
दक्षयज्ञे विनिहते सन्ध्याकाले महेश्वरः  २५१
नानाङ्गहारैः प्रानृत्यल्लयतालवशानुगैः
पिण्डीबन्धांस्ततो दृष्ट्वा नन्दिभद्रमुखा गणाः  २५२
चक्रुस्ते नाम पिण्डीनां बन्धमासां सलक्षणम्
ईश्वरस्येश्वरी पिण्डी नन्दिनश्चापि पट्टसी  २५३
चण्डिकाया भवेत्पिण्डी तथा वै सिंहवाहिनी
तार्क्ष्यपिण्डी भवेद्विष्णोः पद्मपिण्डी स्वयम्भुवः  २५४
शक्रस्यैरावती पिण्डी झषपिण्डी तु मान्मथी
शिखिपिण्डी कुमारस्य रूपपिण्डी भवेच्छ्रियः  २५५
धारापिण्डी च जाह्नव्याः पाशपिण्डी यमस्य च
वारुणी च नदीपिण्डी याक्षी स्याद्धनदस्य तु  २५६
हलपिण्डी बलस्यापि सर्पपिण्डी तु भोगिनाम्
गाणेश्वरी महापिण्डी दक्षयज्ञविमर्दिनी  २५७

त्रिशूलाकृतिसंस्थाना रौद्री स्यादन्धकद्विषः
एवमन्यास्वपि तथा देवतासु यथाक्रमम्  २५८
ध्वजभूताः प्रयोक्तव्याः पिरडीबन्धा सुचिह्निताः
रेचका श्रङ्गहाराश्च पिरडीबन्धास्तथैव च  २५९
सृष्ट्वा भगवता दत्तास्तराडवे मुनये तदा
तेनापि हि ततः सम्यग्गानभाराडसमन्वितः  २६०
नृत्तप्रयोगः सृष्टो यः स ताराडव इति स्मृतः
ऋषय ऊचुः
यदा प्राप्त्यर्थमर्थानां तज्ज्ञैरभिनयः कृतः  २६१
कस्मान्नृत्तं कृतं ह्येतत्कं स्वभावमपेक्षते
न गीतकार्थसम्बद्धं न चाप्यर्थस्य भावकम्  २६२
कस्मान्नृत्तं कृतं ह्येतद्गीतेष्वासारितेषु च
भरतः
श्रत्रोच्यते न खल्वर्थं कञ्चिन्नृत्तमपेक्षते  २६३
किं तु शोभां प्रजनयेदिति नृत्तं प्रवर्तितम्
प्रायेण सर्वलोकस्य नृत्तमिष्टं स्वभावतः  २६४
मङ्गल्यमिति कृत्वा च नृत्तमेतत्प्रकीर्तितम्
विवाहप्रसवावाहप्रमोदाभ्युदयादिषु  २६५
विनोदकारणं चेति नृत्तमेतत्प्रवर्तिनम्
श्रतश्चैव प्रतिक्षेपाद्भूतसङ्घैः प्रवर्तिताः  २६६
ये गीतकादौ युज्यन्ते सम्यङ्नृत्तविभागकाः
देवेन चापि सम्प्रोक्तस्तराडुस्ताराडवपूर्वकम्  २६७
गीतप्रयोगमाश्रित्य नृत्तमेतत्प्रवर्त्यताम्
प्रायेण ताराडवविधिर्देवस्तुत्याश्रयो भवेत्  २६८
सुकुमारप्रयोगश्च शृङ्गाररससम्भवः
तस्य तराडुप्रयुक्तस्य ताराडवस्य विधिक्रियाम्  २६९

वर्धमानकमासाद्य संप्रवक्ष्यामि लक्षणम्
कलानां वृद्धिमासाद्य ह्यक्षराणां च वर्धनात् २७०
लयस्य वर्धनाच्चापि वर्धमानकमुच्यते
कृत्वा कुतपविन्यासं यथावद्द्विजसत्तमाः २७१
आसारितप्रयोगस्तु ततः कार्यः प्रयोक्तृभिः
तत्र तूपोहनं कृत्वा तन्त्रीगानसमन्वितम् २७२
कार्यः प्रवेशो नर्तक्या भाण्डवाद्यसमन्वितः
विशुद्धकरणायां तु जात्यां वाद्यं प्रयोजयेत् २७३
गत्या वाद्यानुसारिण्या तस्याश्चारीं प्रयोजयेत्
वैशाखस्थानकेनेह सर्वरेचकचारिणी २७४
पुष्पाञ्जलिधरा भूत्वा प्रविशेद्रङ्गमण्डपम्
पुष्पाञ्जलिं विसृज्याथ रङ्गपीठं परीत्य च २७५
प्रणम्य देवताभ्यश्च ततोऽभिनयमाचरेत्
यत्राभिनेयं गीतं स्यात्तत्र वाद्येन योजयेत् २७६
अङ्गहारप्रयोगे तु भाण्डवाद्यं विधीयते
समं रक्तं विभक्तं च स्फुटं शुद्धप्रहारजम् २७७
नृत्ताङ्गग्राहि वाद्यज्ञैर्वाद्यं योज्यं तु ताण्डवे
प्रयुज्य गीतवाद्ये तु निष्क्रामेन्नर्तकी ततः २७८
अनेनैव विधानेन प्रविशन्त्यपराः पृथक्
अन्याश्चानुक्रमेणाथ पिण्डीं बध्नन्ति याः स्त्रियः २७९
तावत्पर्यस्तकः कार्यो यावत्पिण्डी न बध्यते
पिण्डीं बध्वा ततः सर्वा निष्क्रामेयुः स्त्रियस्तु ताः २८०
पिण्डीबन्धेषु वाद्य तु कर्तव्यमिह वादकैः
पर्यस्तकप्रमाणेन चित्रौघकरणान्वितम् २८१
तत्रोपवहनं भूयः कार्यं पूर्ववदेव हि
ततश्चासारितं भूयो गायनं तु प्रयोजयेत् २८२

पूर्वेणैव विधानेन प्रविशेच्चापि नर्तकी
गीतकार्थं त्वभिनयेद् द्वितीयासारितस्य तु २८३
तदेव च पुनर्वस्तु नृत्तेनापि प्रदर्शयेत्
आसारिते समाप्ते तु निष्क्रामेन्नर्तकी ततः २८४
पूर्ववत्प्रविशन्त्यन्याः प्रयोगः स्यात्स एव हि
एवं पदे पदे कार्यो विधिरासारितस्य तु २८५
भाण्डवाद्यकृते चैव तथा गानकृतेऽपि च
एका तु प्रथमं योज्या द्वे द्वितीयं तथैव च २८६
तिस्रो वस्तु तृतीयं तु चतस्रस्तु चतुर्थकम्
पिण्डीनां विधयश्चैव चत्वारः सम्प्रकीर्तिताः २८७
पिण्डी शृङ्खलिका चैव लताबन्धोऽथ भेद्यकः
पिण्डीबन्धस्तु पिण्डत्वाद्गुल्मः शृङ्खलिका भवेत् २८८
जालोपनद्धा च लता सनृत्तो भेद्यकः स्मृतः
पिण्डीबन्धः कनिष्ठे तु शृङ्खला तु लयान्तरे २८९
मध्यमे च लताबन्धो ज्येष्ठे चैवाथ मेद्यकः
पिण्डीनां विविधा योनिर्यन्त्रं भद्रासनं तथा २९०
शिक्षायोगस्तथा चैव प्रयोक्तव्यः प्रयोक्तृभिः
एवं प्रयोगः कर्तव्यो वर्धमाने तपोधनाः २९१
गीतानां छन्दकानां च भूयो वक्ष्याम्यहं विधिम्
यानि वस्तुनिबद्धानि यानि चाङ्गकृतानि तु २९२
गीतानि तेषां वक्ष्यामि प्रयोगं नृत्तवाद्ययोः
तत्रावतरणं कार्यं नर्तक्याः सार्वभाण्डकम् २९३
क्षेपप्रतिक्षेपकृतं भाण्डोपोहनसंस्कृतम्
प्रथमं त्वभिनेयं स्याद्गीतके सर्ववस्तुकम् २९४
तदेव च पुनर्वस्तु नृत्तेनापि प्रदर्शयेत्
यो विधिः पूर्वमुक्तस्तु नृत्ताभिनयवादिते २९५

आसारितविधौ स स्याद्गीतानां वस्तुकेष्वपि
एवं वस्तुनिबन्धानां गीतकानां विधिः स्मृतः २९६
शृणुताङ्गनिबद्धानां गीतानामपि लक्षणम्
य एव वस्तुकविधिर्नृत्ताभिनयवादिते २९७
तमेवाङ्गनिबद्धेषु च्छन्दकेष्वपि योजयेत्
वाद्यं गुर्वक्षरकृतं तथाल्पाक्षरमेव च २९८
मुखे सोपोहने कुर्याद्वर्णानां विप्रकर्षलः
यदा गीतिवशादङ्गं भूयो भूयो निवर्तते २९९
तत्राद्यभिनेयं स्याच्छेषं नृत्तेन योजयेत्
यदा गीतिवशादङ्गं भूयो भूयो निवर्तते ३००
त्रिपाणिलयसंयुक्तं तत्र वाद्यं प्रयोजयेत्
यथा लयस्तथा वाद्यं कर्तव्यमिह वादकैः ३०१
ततं चानुगतं चापि ओघं च करणान्वितम्
स्थिरे तत्त्वं प्रयोक्तव्यं मध्ये चानुगतं भवेत्
भूयश्चौघः प्रयोक्तव्यस्त्वेष वाद्यगतो विधिः
छन्दोगीतकमासाद्य त्वङ्गानि परिवर्तयेत्
एष कार्यो विधिर्नित्यं नृत्ताभिनयवादिते
यानि वस्तुनिबद्धानि तेषामन्ते ग्रहो भवेत्
अङ्गानां तु परावृत्तावादावेव ग्रहो मतः
एवमेष विधिः कार्यो गीतेष्वासारितेष्वपि
देवस्तुत्याश्रयं ह्येतत्सुकुमारं निबोधत ३०२
स्त्रीपुंसयोस्तु संलापो यस्तु कामसमुद्भवः
तज्ज्ञेयं सुकुमारं हि शृङ्गाररससम्भवम् ३०३
यस्यां यस्यामवस्थायां नृत्तं योज्यं प्रयोक्तृभिः
तत्सर्वं सम्प्रवक्ष्यामि तच्च मे शृणुत द्विजाः ३०४
अङ्गवस्तुनिवृत्तौ तु तथा वर्णनिवृत्तिषु

तथा चाभ्युदयस्थाने नृत्तं तज्ज्ञः प्रयोजयेत् ३०५
यत्तु संदृश्यते किञ्चिद्दम्पत्योर्मदनाश्रयम्
नृत्तं तत्र प्रयोक्तव्यं प्रहर्षार्थगुणोद्भवम् ३०६
यत्र सन्निहिते कान्ते ऋतुकालादिदर्शनम्
गीतकार्थाभिसम्बद्धं नृत्तं तत्रापि चेष्यते ३०७
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा
यस्मिन्नङ्गे तु युवतिर्न नृत्तं तत्र योजयेत् ३०८
सखीप्रवृत्ते संलापे तथाऽसन्निहिते प्रिये
नहि नृत्तं प्रयोक्तव्यं यस्या वा प्रोषितः प्रियः ३०९
दूत्याश्रयं यदा तु स्यादृतुकालादिदर्शनम्
औत्सुक्यचिन्तासंबद्धं न नृत्तं तत्र योजयेत्
यस्मिन्नङ्गे प्रसादं तु गृह्णीयान्नायिका क्रमात्
ततःप्रभृति नृत्तं तु शेषेष्वङ्गेषु योजयेत् ३१०
देवस्तुत्याश्रयकृतं यदङ्गं तु भवेदथ
माहेश्वरैरङ्गहारैरुद्धतैस्तत्प्रयोजयेत् ३११
यत्तु शृङ्गारसंबद्धं गानं स्त्रीपुरुषाश्रयम्
देवीकृतैरङ्गहारैर्ललितैस्तत्प्रयोजयेत् ३१२
चतुष्पदा नर्कुटके खञ्जके परिगीतके
विधानं सम्प्रवक्ष्यामि भाण्डवाद्यविधिं प्रति ३१३
खञ्जनर्कुटसंयुक्ता भवेद्या तु चतुष्पदा
पादान्ते सन्निपाते तु तस्या भाण्डग्रहो भवेत् ३१४
या ध्रुवा छन्दसा युक्ता समपादा समाक्षरा
तस्याः पादावसाने तु प्रदेशिन्या ग्रहो भवेत् ३१५
कृत्वैकं परिवर्तं तु गानस्याभिनयस्य च
पुनः पादनिवृत्तिं तु भाण्डवाद्येन योजयेत् ३१६
अङ्गवस्तु निवृत्तौ तु वर्णान्तरनिवृत्तिषु

तथोपस्थाने चैव भाण्डवाद्यं प्रयोजयेत्  ३१७
येऽपि चान्तरमार्गास्स्युः तन्त्रीवाक्करणैः कृताः
तेषु सूची प्रयोक्तव्या भाण्डेन सह ताण्डवे  ३१८
महेश्वरस्य चरितं य इदं सम्प्रयोजयेत्
सर्वपापविशुद्धात्मा शिवलोकं स गच्छति  ३१९
एवमेष विधिः सृष्टस्ताण्डवस्य प्रयोगतः
भूयः किं कथ्यतामन्यन्नाट्यवेदविधिं प्रति  ३२०
इति भारतीये नाट्यशास्त्रे ताण्डवलक्षणं नाम चतुर्थोऽध्यायः

## पञ्चमोऽध्यायः

भरतस्य वचः श्रुत्वा नाट्यसन्तानकारणम्
पुनरेवाब्रुवन्वाक्यमृषयो हृष्टमानसाः  १
यथा नाट्यस्य जन्मेदं जर्जरस्य च सम्भवः
विघ्नानां शमनं चैव देवतानां च पूजनम्  २
तदस्माभिः श्रुतं सर्वं गृहीत्वा चावधारितम्
निखिलेन यथातत्त्वमिच्छामो वेदितुं पुनः  ३
पूर्वरङ्गं महातेजः सर्वलक्षणसंयुतम्
यथा बुद्ध्यामहे ब्रह्मंस्तथा व्याख्यातुमर्हसि  ४
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः
प्रत्युवाच पुनर्वाक्यं पूर्वरङ्गविधिं प्रति  ५
पूर्वरङ्गं महाभागा गदतो मे निबोधत
पादभागाः कलाश्चैव परिवर्तास्तथैव च  ६
यस्माद्रङ्गे प्रयोगोऽयं पूर्वमेव प्रयुज्यते
तस्मादयं पूवरङ्गो विज्ञेयो द्विजसत्तमाः  ७
अस्याङ्गानि तु कार्याणि यथावदनुपूर्वशः
तन्त्रीभाण्डसमायोगैः पाठ्ययोगकृतैस्तथा  ८

प्रत्याहारोऽवतरणं तथा ह्यारम्भ एव च
ह्याश्रावणा वक्त्रपाणिस्तथा च परिघट्टना ९
सङ्घोटना ततः कार्या मार्गासारितमेव च
ज्येष्ठमध्यकनिष्ठानि तथैवासारितानि च १०
एतानि तु बहिर्गीतान्यन्तर्यवनिकागतैः
प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि च ११
ततः सर्वैस्तु कुतपैः संयुक्तानीह कारयेत्
विघट्य वै यवनिकां नृत्तपाठ्यकृतानि तु १२
गीतानां मद्रकादीनां योज्यमेकं तु गीतकम्
वर्धमानमथापीह ताण्डवं यत्र युज्यते १३
ततश्चोत्थापनं कार्यं परिवर्तनमेव च
नान्दी शुष्कावकृष्टा च रङ्गद्वारं तथैव च १४
चारी चैव ततः कार्या महाचारी तथैव च
त्रिकं प्ररोचना चापि पूर्वरङ्गे भवन्ति हि १५
एतान्यङ्गानि कार्याणि पूर्वरङ्गविधौ द्विजाः
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः १६
कुतपस्य तु विन्यासः प्रत्याहार इति स्मृतः
तथावतरणं प्रोक्तं गायिकानां निवेशनम् १७
परिगीतक्रियारम्भ आरम्भ इति कीर्तितः
आतोद्यरञ्जनार्थं तु भवेदाश्रावणाविधिः १८
वाद्यावृत्तिविभागार्थं वक्त्रपाणिर्विधीयते
तन्त्र्योजःकरणार्थं तु भवेच्च परिघट्टनाम् १९
तथा पाणिविभागार्थं भवेत्संघोटनाविधिः
तन्त्रीभाण्डसमायोगान्मार्गासारितमिष्यते २०
कलापातविभागार्थं भवेदासारितक्रिया
कीर्तनाद्देवतानां च ज्ञेयो गीतविधिस्तथा २१

अतः परं प्रवक्ष्यामि ह्युत्थापनविधिक्रियाम्
यस्मादुत्थापयन्त्यत्र प्रयोगं नान्दिपाठकाः
पूर्वमेव तु रङ्गेऽस्मिंस्तस्मादुत्थापनं स्मृतम्  २२
यस्माच्च लोकपालानां परिवृत्य चतुर्दिशम्
वन्दनानि प्रकुर्वन्ति तस्माच्च परिवर्तनम्  २३
आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता  २४
अत्र शुष्काक्षरैरेव ह्यवकृष्टा ध्रुवा यतः
तस्माच्छुष्कावकृष्टेयं जर्जरश्लोकदर्शिका  २५
यस्मादभिनयस्त्वत्र प्रथमं ह्यवतार्यते
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम्  २६
शृङ्गारस्य प्रचरणाच्चारी सम्परिकीर्तिता
रौद्रप्रचरणाच्चापि महाचारीति कीर्तिता  २७
विदूषकः सूत्रधारस्तथा वै पारिपार्श्वकः
यत्र कुर्वन्ति सञ्जल्पं तच्चापि त्रिगतं मतम्  २८
उपक्षेपेण काव्यस्य हेतुयुक्तिसमाश्रया
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना  २९
अतः परं प्रवक्ष्यामि ह्याश्रावणविधिक्रियाम्
वहिर्गीतविधौ सम्यगुत्पत्तिं कारणं तथा  ३०
चित्रदक्षिणवृत्तौ तु सप्तरूपे प्रवर्तिते
सोपोहने सनिर्गीते देवस्तुत्यभिनन्दिते  ३१
नारदाद्यैस्तु गन्धर्वैः सभायां देवदानवाः
निर्गीतं श्राविताः सम्यग्लयतालसमन्वितम्  ३२
तच्छ्रुत्वा तु सुखं गानं देवस्तुत्यभिनन्दितम्
अभवन्क्षुभिताः सर्वे मात्सर्याद्दैत्यराक्षसाः  ३३
सम्प्रधार्य च तेऽन्योन्यमित्यवोचन्नवस्थिताः

निर्गीतं तु सवादित्रमिदं गृह्णीमहे वयम् ३४
सप्तरूपेण सन्तुष्टा देवाः कर्मानुकीर्तनात्
वयं गृह्णीम निर्गीतं तुष्यामोऽत्रैव सर्वदा ३५
ते तत्र तुष्टा दैत्यास्तु साधयन्ति पुनः पुनः
रुष्टाश्चापि ततो देवाः प्रत्यभाषन्त नारदम् ३६
एते तुष्यन्ति निर्गीते दानवाः सह राक्षसैः
प्रणश्यतु प्रयोगोऽयं कथं वा मन्यते भवान् ३७
देवानां वचनं श्रुत्वा नारदो वाक्यमब्रवीत्
धातुवाद्याश्रयकृतं निर्गीतं मा प्रणश्यतु ३८
किन्तूपोहनसंयुक्तं धातुवाद्यविभूषितम्
भविष्यतीदं निर्गीतं सप्तरूपविधानतः ३९
निर्गीतेनावबद्धाश्च दैत्यदानवराक्षसाः
न क्षोभं न विघातं च करिष्यन्तीह तोषिताः ४०
एवं निर्गीतमेतत्तु दैत्यानां स्पर्धया द्विजाः
देवानां बहुमानेन बहिर्गीतमिति स्मृतम् ४१
धातुभिश्चित्रवीणायां गुरुलघ्वक्षरान्वितत्
वर्णालङ्कारसंयुक्तं प्रयोक्तव्यं बुधैरथ ४२
निर्गीतं गीयते यस्मादपदं वर्णयोजनात्
असूयया च देवानां बहिर्गीतमिदं स्मृतम् ४३
निर्गीतं यन्मया प्रोक्तं सप्तरूपसमन्वितम्
उत्थापनादिकं यच्च तस्य कारणमुच्यते ४४
आश्रावणायां युक्तायां दैत्यास्तुष्यन्ति नित्यशः
वक्त्रपाणौ कृते चैव नित्यं तुष्यन्ति दानवाः ४५
परिघट्टनया तुष्टा युक्तायां रक्षसां गणः
सङ्घोटनाक्रियायां च तुष्यन्त्यपि च गृह्यकाः ४६
मार्गासारितमासाद्य तुष्टा यक्षा भवन्ति हि

गीतकेषु प्रयुक्तेषु देवास्तुष्यन्ति नित्यशः ४७
वर्धमाने प्रयुक्ते तु रुद्रस्तुष्यति सानुगः
तथा चोत्थापने युक्ते ब्रह्मा तुष्टो भवेदिह ४८
तुष्यन्ति लोकपालाश्च प्रयुक्ते परिवर्तने
नान्दीप्रयोगेऽथ कृते प्रीतो भवति चन्द्रमाः ४९
युक्तायामवकृष्टायां प्रीता नागा भवन्ति हि
तथा शुष्कावकृष्टायां प्रीतः पितृगणो भवेत् ५०
रङ्गद्वारे प्रयुक्ते तु विष्णुः प्रीतो भवेदिह
जर्जरस्य प्रयोगे तु तुष्टा विघ्नविनायकाः ५१
तथा चार्या प्रयुक्तायामुमा तुष्टा भवेदिह
महाचार्यां प्रयुक्तायां तुष्टो भूतगणो भवेत् ५२
आश्रावणादिचार्यन्तमेतद्दैवतपूजनम्
पूर्वरङ्गे मया ख्यातं तथा चाङ्गविकल्पनम् ५३
देवस्तुष्यति यो येन यस्य यन्मनसः प्रियम्
तत्तथा पूर्वरङ्गे तु मया प्रोक्तं द्विजोत्तमाः ५४
सर्वदैवतपूजार्हं सर्वदैवतपूजनम्
धन्यं यशस्यमायुष्यं पूर्वरङ्गप्रवर्तनम् ५५
दैत्यदानवतुष्ट्यर्थं सर्वेषां च दिवौकसाम्
निर्गीतानि सगीतानि पूर्वरङ्गकृतानि तु ५६
या विद्या यानि शिल्पानि या गतिर्यच्च चेष्टितम्
लोकालोकस्य जगतस्तदस्मिन्नाटाकाश्रये
निर्गीतानां सगीतानां वर्धमानस्य चैव हि
ध्रुवाविधाने वक्ष्यामि लक्षणं कर्म चैव हि ५७
प्रयुज्य गीतकविधिं वर्धमानमथापि च
गीतकान्ते ततश्चापि कार्या ह्युत्थापनी ध्रुवा ५८
आदौ द्वे च चतुर्थं चाप्यष्टमैकादशे तथा

गुर्वक्षराणि जानीयात्पादे ह्येकादशाक्षरे ५९
चतुष्पदा भवेत्सा तु चतुरश्रा तथैव च
चतुर्भिस्सन्निपातैश्च त्रिलया त्रियतिस्तथा ६०
परिवर्तांश्च चत्वारः पाणयस्त्रय एव च
जात्या चैव हि विश्लोका तां च तालेन योजयेत् ६१
शम्या तु द्विकला कार्या तालो द्विकल एव च
पुनश्चैकला शम्या सन्निपातः कलात्रयम् ६२
एवमष्टकलः कार्यः सन्निपातो विचक्षणैः
चत्वारः सन्निपाताश्च परिवर्तः स उच्यते ६३
पूर्व स्थितलयः कार्यः परिवर्तो विचक्षणैः
तृतीये सन्निपाते तु तस्य भाण्डग्रहो भवेत् ६४
एकस्मिन्परिवर्ते तु गते प्राप्ते द्वितीयके
कार्यं मध्यलये तज्ज्ञैः सूत्रधारप्रवेशनम् ६५
पुष्पाञ्जलिं समादाय रक्षामङ्गलसंस्कृताः
शुद्धवस्त्राः सुमनसस्तथा चाद्भुतदृष्टयः ६६
स्थानन्तु वैष्णवं कृत्वा मौष्ठवाङ्गपुरस्कृतम्
दीक्षिताः शुचयश्चैव प्रविशेयुः समं त्रयः ६७
भृङ्गारजर्जरधरौ भवेतां पारिपार्श्विकौ
मध्ये तु सूत्रभृत्ताभ्यां वृत्तः पञ्चपदीं व्रजेत् ६८
पदानि पञ्च गच्छेयुर्ब्रह्मणो यजनेच्छया
पदानाञ्चापि विक्षेपं व्याख्यास्याम्यनुपूर्वशः ६९
त्रितालान्तरविष्कम्भमुत्क्षिपेच्चरणं शनैः
पार्श्वोत्थानोत्थितं चैव तन्मध्ये पातयेत्पुनः ७०
एवं पञ्चपदीं गत्वा सूत्रधारः सहेतरः
सूचीं वामपदे दद्याद्विक्षेपं दक्षिणेन च ७१
पुष्पाञ्जल्यपवर्गश्च कार्यो ब्राह्मेऽथ मण्डले

रङ्गपीठस्य मध्ये तु स्वयं ब्रह्मा प्रतिष्ठितः ७२
ततः सललितैर्हस्तैरभिवन्द्य पितामहम्
अभिवादानि कार्याणि त्रीणि हस्तेन मूतले ७३
कालप्रकर्षहेतोश्च पादानां प्रविभागतः
सूत्रधारप्रवेशाद्यो वन्दनाभिनयान्तकः ७४
द्वितीयः परिवर्तस्तु कार्यो मध्यलयाश्रितः
ततः परं तृतीये तु मण्डलस्य प्रदक्षिणम् ७५
भवेदाचमनं चैव जर्जरग्रहणं तथा
उत्थाय मण्डलात्तूर्णं दक्षिणं पादमुद्धरेत् ७६
वेधं तेनैव कुर्वीत विक्षेपं वामकेन च
पुनश्च दक्षिणं पादं पार्श्वसंस्थं समुद्धरेत् ७७
ततश्च वामवेधस्तु विक्षेपो दक्षिणस्य च
इत्यनेन विधानेन सम्यक्कृत्वा प्रदक्षिणम् ७८
भृङ्गारभृतमाहूय शौचं चापि समाचरेत्
यथान्यायं तु कर्तव्या तेन ह्याचमनक्रिया ७९
आत्मप्रोक्षणमेवाद्भिः कर्तव्यं तु यथाक्रमम्
प्रयत्नकृतशौचेन सूत्रधारेण यत्नतः ८०
सन्निपातसमं ग्राह्यो जर्जरो विघ्नजर्जरः
प्रदक्षिणाद्यो विज्ञेयो जर्जरग्रहणान्तकः ८१
तृतीयः परिवर्तस्तु विज्ञेयो वै द्रुते लये
गृहीत्वा जर्जरं त्वष्टौ कला जप्यं प्रयोजयेत् ८२
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणस्य च
ततः पञ्चपदीं चैव गच्छेत्तु कुतपोन्मुखः ८३
वामवेधस्तु तत्रापि विक्षेपो दक्षिणस्य तु
जर्जरग्रहणाद्योऽयं कुतपाभिमुखान्तकः ८४
चतुर्थः परिवर्तस्तु कार्यो द्रुतलये पुनः

करपादनिपातास्तु भवन्त्यत्र तु षोडश ८५
त्र्यश्रे द्वादश पातास्तु भवन्ति करपादयोः
वन्दनान्यथ कार्याणि त्रीणि हस्तेन भूतले ८६
आत्मप्रोक्षणमद्भिश्च त्र्यश्रे नैव विधीयते
एवमुत्थापनं कार्यं ततस्तु परिवर्तनम् ८७
चतुरश्रं लये मध्ये सन्निपातैरथाष्टभिः
यस्या लघूनि सर्वाणि केवलं नैधनं गुरु ८८
भवेदतिजगत्यास्तु सा ध्रुवा परिवर्तनी
वार्तिकेन तु मार्गेण वाद्येनानुगतेन च ८९
ललितैः पादविन्यासैर्वन्द्या देवा यथादिशम्
द्विकलं पादपतनं पादचार्यां गतं भवेत् ९०
वामपादेन वेधस्तु कर्तव्यो नृत्तयोक्तृभिः
द्वितालान्तरविष्कम्भो विक्षेपो दक्षिणस्य च ९१
ततः पञ्चपदीं गच्छेदतिक्रान्तैः पदैरथ
ततोऽभिवादनं कुर्याद्देवतानां यथादिशम् ९२
वन्देत प्रथमं पूर्वां दिशं शक्राधिदैवताम्
द्वितीयां दक्षिणामाशां वन्देत यमदैवताम् ९३
वन्देत पश्चिमामाशां ततो वरुणदैवताम्
चतुर्थीमुत्तरामाशां वन्देत धनदाश्रयाम् ९४
दिशां तु वन्दनं कृत्वा वामवेधं प्रयोजयेत्
दक्षिणेन च कर्तव्यं विक्षेपपरिवर्तनम् ९५
प्राङ्मुखस्तु ततः कुर्यात्पुरुषस्त्रीनपुंसकैः
त्रिपद्या सूत्रभृद्रुद्रब्रह्मोपेन्द्राभिवादनम् ९६
दक्षिणं तु पदं पुंसो वामं स्त्रीणां प्रकीर्तितम्
पुनर्दक्षिणमेव स्यान्नात्युत्क्षिप्तं नपुंसकम् ९७
वन्देत पौरुषेणेशं स्त्रीपदेन जनार्दनम्

नपुंसकपदेनापि तथैवाम्बुजसम्भवम्  ९८
परिवर्तनमेवं स्यात्तस्यान्ते प्रविशेत्ततः
चतुर्थकारः पुष्पाणि प्रगृह्य विधिपूर्वकम्  ९९
यथावत्तेन कर्तव्यं पूजनं जर्जरस्य तु
कुतपस्य च सर्वस्य सूत्रधारस्य चैव हि  १००
तस्य भाण्डसमः कार्यस्तज्ज्ञैर्गतिपरिक्रमः
न तत्र गानं कर्तव्यं तत्र स्तोभक्रिया भवेत्  १०१
चतुर्थकारः पूजां तु स कृत्वान्तर्हितो भवेत्
ततो गेयावकृष्टा तु चतुरश्रा स्थिता ध्रुवा  १०२
गुरुप्राया तु सा कार्या तथा चैवावपाणिका
स्थायिवर्णाश्रयोपेता कलाष्टकविनिर्मिता  १०३
चतुर्थं पञ्चमं चैव सप्तमं चाष्टमं तथा
लघूनि पादे पङ्क्त्यान्तु सावकृष्टा ध्रुवा स्मृता
सूत्रधारः पठेत्तत्र मध्यमं स्वरमाश्रितः
नान्दी पदैर्द्वादशभिरष्टभिर्वाऽप्यलङ्कृताम्  १०४
नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यः शुभं तथा
जितं सोमेन वै राज्ञा शिवं गोब्राह्मणाय च  १०५
ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा
प्रशास्त्विमां महाराजः पृथिवीं च ससागराम्  १०६
राष्ट्रं प्रवर्धतां चैव रङ्गस्याशा समृद्ध्यतु
प्रेक्षकर्तुर्महान्धर्मो भवतु ब्रह्मभाषितः  १०७
काव्यकर्तुर्यशश्चास्तु धर्मश्चापि प्रवर्धताम्
इज्यया चानया नित्यं प्रीयन्तां देवता इति  १०८
नान्दीपदान्तरेष्वेषु ह्येवमार्येति नित्यशः
वदेतां सम्यगुक्ताभिर्वाग्भिस्तौ पारिपार्श्विकौ  १०९
एवं नान्दी विधातव्या यथावल्लक्षणान्विता

ततश्शुष्कावकृष्टा स्याज्जर्जरश्लोकदर्शिका ११०
नवगुर्वक्षराण्यादौ षड्लघूनि गुरुत्रयम्
शुष्कावकृष्टा तु भवेत्कला ह्यष्टौ प्रमाणतः १११
यथा
दिग्ले दिग्ले दिग्ले दिग्ले जम्वुकपलितकते तेचाम्
कृत्वा शुष्कावकृष्टां तु यथावद्द्विजसत्तमाः ११२
ततः श्लोकं पठेदेकं गम्भीरस्वरसंयुतम्
देवस्तोत्रं पुरस्कृत्य यस्य पूजा प्रवर्तते ११३
राज्ञो वा यत्र भक्तिः स्यादथ वा ब्रह्मणस्स्तवम्
गदित्वा जर्जरश्लोकं रङ्गद्वारे च यत्स्मृतम् ११४
पठेदन्यं पुनः श्लोकं जर्जरस्य विनाशनम्
जर्जरं नमयित्वा तु ततश्चारीं प्रयोजयेत् ११५
पारिपार्श्विकयोश्च स्यात्पश्चिमेनापसर्पणम्
अङ्किता चात्र कर्तव्या ध्रुवा मध्यलयान्विता ११६
चतुर्भिः सन्निपातैश्च चतुरश्रा प्रमाणतः
आद्यमन्त्यं चतुर्थं च पञ्चमं च तथा गुरु ११७
यस्यां ह्रस्वानि शेषाणि सा ज्ञेया त्वङ्किता बुधैः
अस्याः प्रयोगं वक्ष्यामि यथा पूर्वं महेश्वरः ११८
सहोमया क्रीडितवान्नानाभावविचेष्टितैः
कृत्वाऽवहित्थं स्थानं तु वामं चाधोमुखं भुजम् ११९
चतुरश्रमुरः कार्यमञ्चितश्चापि मस्तकः
नाभिप्रदेशे विन्यस्य जर्जरं च तु लाधृतम् १२०
वामपल्लवहस्तेन पादैस्तालान्तरोत्थितैः
गच्छेत्पञ्चपदीं चैव सविलासाङ्गचेष्टितैः १२१
वामवेधस्तु कर्तव्यो विक्षेपो दक्षिणस्य च
शृङ्गाररससंयुक्तां पठेदार्यां विचक्षणः १२२

चारीश्लोकं गदित्वा तु कृत्वा च परिवर्तनम्
तैरेव च पदैः कार्यं पश्चिमेनापसर्पणं १२३
पारिपार्श्विकहस्ते तु न्यस्य जर्जरमुत्तमम्
महाचारीं ततश्चैव प्रयुञ्जीत यथाविधि १२४
चतुरश्रा ध्रुवा तत्र तथा द्रुतलयान्विता
चतुर्भिस्सन्निपातैश्च कला ह्यष्टौ प्रमाणतः १२५
आद्यं चतुर्थमन्त्यं च सप्तमं दशमं गुरु
लघु शेषं ध्रुवापादे चतुर्विंशतिके भवेत् १२६
पादतलाहतिपातितशैलं
क्षोभितभूतसमग्रसमुद्रम्
ताण्डवनृत्तमिदं प्रलयान्ते
पातु जगत्सुखदायिहरस्य १२७
भाण्डोन्मुखेन कर्तव्यं पादविक्षेपणं ततः
सूचीं कृत्वा पुनः कुर्याद्विक्षेपपरिवर्तनम् १२८
अतिक्रान्तैः सललितैः पादैर्द्रुतलयान्वितैः
त्रितालान्तरमुत्क्षेपैर्गच्छेत्पञ्चपदीं ततः १२९
तत्रापि वामवेधस्तु विक्षेपो दक्षिणस्य च
तैरेव च पदैः कार्यं प्राङ्मुखेनापसर्पणम् १३०
पुनः पदानि त्रीण्येव गच्छेत्प्राङ्मुख एव तु
ततश्च वामवेधं स्याद्विक्षेपो दक्षिणस्य च १३१
ततो रौद्ररसं श्लोकं पादसंहरणं पठेत्
तस्यान्ते तु त्रिपद्याथ व्याहरेत्पारिपार्श्विकौ १३२
तयोरागमने कार्यं गानं नर्कुटकं बुधैः
तथा च भारतीभेदे त्रिगतं सम्प्रयोजयेत् १३३
विदूषकस्त्वेकपदां सूत्रधारस्मितावहाम्
असम्बद्धकथाप्रायां कुर्यात्कथनिकां ततः १३४

वितगडां गगडसंयुक्तां तालिकाञ्च प्रयोजयेत्
कस्तिष्ठति जितं केनेत्यादिकाव्यप्ररूपिणीम्
पारिपार्श्विकसञ्जल्पो विदूषकविरूपितः
स्थापितः सूत्रधारेण त्रिगतं सम्प्रयुज्यते
प्ररोचना च कर्तव्या सिद्धेनोपनिमन्त्रणम्
रङ्गसिद्धौ पुनः कार्यं काव्यवस्तुनिरूपणम् १३५
सर्वमेव विधिं कृत्वा सूचीवेधकृतैरथ
पादैरनाविद्धगतैर्निष्क्रामेयुः समं त्रयः १३६
एवमेष प्रयोक्तव्यः पूर्वरङ्गो यथाविधि
चतुरश्रो द्विजश्रेष्ठास्त्रश्रं चापि निबोधत १३७
अयमेव प्रयोगः स्यादङ्गान्येतानि चैव हि
तालप्रमाणं सङ्क्षिप्तं केवलं तु विशेषकृत् १३८
शम्या तु द्विकला कार्या तालो ह्येककलस्तथा
पुनश्चैककला शम्या सन्निपातः कलाद्वयम् १३९
अनेन हि प्रमाणेन कलाताललयान्वितः
कर्तव्यः पूर्वरङ्गस्तु त्र्यश्रोऽप्युत्थापनादिकः १४०
आद्यं चतुर्थं दशममष्टमं नैधनं गुरु
यस्यास्तु जागते पादे सा त्र्यश्रोत्थापिनी ध्रुवा १४१
वाद्यं गतिप्रचारश्च ध्रुवा तालस्तथैव च
संक्षिप्तान्येव कार्याणि त्र्यश्रे नृत्तप्रवेदिभिः १४२
वाद्यगीतप्रमाणेन कुर्यादङ्गविचेष्टितम्
विस्तीर्णमथ सङ्क्षिप्तं द्विप्रमाणविनिर्मितम् १४३
हस्तपादप्रचारस्तु द्विकलः परिकीर्तितः
चतुरश्रे परिक्रान्ते पाताः स्युः षोडशैव तु १४४
त्र्यश्रे द्वादश पातास्तु भवन्ति करपादयोः
एतत्प्रमाणं विज्ञेयमुभयोः पूर्वरङ्गयोः १४५

केवलं परिवर्ते तु गमने त्रिपदी भवेत्
दिग्वन्दने पञ्चपदी चतुरश्रे विधीयते १४६
आचार्यबुद्ध्या कर्तव्यस्त्र्यश्रस्तालप्रमाणतः
तस्मान्न लक्षणं प्रोक्तं पुनरुक्तं भवेद्यतः १४७
एवमेष प्रयोक्तव्यः पूर्वरङ्गो द्विजोत्तमाः
त्र्यश्रश्च चतुरश्रश्च शुद्धो भारत्युपाश्रयः १४८
एवं तावदयं शुद्धः पूर्वरङ्गो मयोदितः
चित्रत्वमस्य वक्ष्यामि यथाकार्यं प्रयोक्तृभिः १४९
वृत्ते ह्युत्थापने विप्राः कृते च परिवर्तने
चतुर्थकारदत्ताभिः सुमनोभिरलङ्कृते १५०
उदात्तगानैगन्धर्वैः परिगीते प्रमाणतः
देवदुन्दुभयश्चैव निनदेयुर्भृशं ततः १५१
सिद्धा कुसुममालाभिर्विकिरेयुः समन्ततः
अङ्गहारैश्च देव्यस्ता उपनृत्येयुरग्रतः १५२
यस्ताण्डवविधिः प्रोक्तो नृत्ते पिण्डीसमन्वितः
रेचकैरङ्गहारैश्च न्यासोपन्याससंयुतः १५३
नान्दीपदानां मध्ये तु एकैकस्मिन्पृथक्पृथक्
प्रयोक्तव्यो बुधैः सम्यक्चित्रभावमभीप्सुभिः १५४
एवं कृत्वा यथान्यायं शुद्धं चित्रं प्रयत्नतः
ततःपरं प्रयुञ्जीत नाटाकं लक्षणान्वितम् १५५
ततस्त्वन्तर्हिताः सर्वा भवेयुर्दिव्ययोषितः
निष्क्रान्तासु च सर्वासु नर्तकीषु ततः परम् १५६
पूर्वरङ्गे प्रयोक्तव्यमङ्गजातमतः परम्
एवं शुद्धो भवेच्चित्रः पूर्वरङ्गो विधानतः १५७
कार्यो नातिप्रसङ्गोऽत्र नृत्तगीतविधिं प्रति
गीते वाद्ये च नृत्ते च प्रवृत्तेऽतिप्रसङ्गतः १५८

खेदो भवेत्प्रयोक्तॄणां प्रेक्षकाणां तथैव च
खिन्नानां रसभावेषु स्पष्टता नोपजायते १५९
ततः शेषप्रयोगस्तु न रागजनको भवेत्
लक्षणेन विना बाह्यलक्षणाद्विस्तृतं भवेत्
लोकशास्त्रानुसारेण तस्मान्नाट्यं प्रवर्तते
त्र्यश्रं वा चतुरश्रं वा शुद्धं चित्रमथापि वा १६०
प्रयुज्य रङ्गान्निष्क्रामेत्सूत्रधारः सहानुगः
देवपार्थिवरङ्गानामाशीर्वचनसंयुताम्
कवेर्नामगुणोपेतां वस्तूपक्षेपरूपिकाम्
लघुवर्णपदोपेतां वृत्तैश्चित्रैरलङ्कृताम्
अन्तर्यवनिकासंस्थः कुर्यादाश्रावणां ततः
आश्रावणावसाने च नान्दीं कृत्वा स सूत्रधृत्
पुनः प्रविश्य रङ्गं तु कुर्यात्प्रस्तावनां ततः
प्रयुज्य विधिनैवं तु पूर्वरङ्गं प्रयोगतः १६१
स्थापकः प्रविशेत्तत्र सूत्रधारगुणाकृतिः
स्थानं तु वैष्णवं कृत्वा सौष्ठवाङ्गपुरस्कृतम् १६२
प्रविश्य रङ्गं तैरेव सूत्रधारपदैर्व्रजेत्
स्थापकस्य प्रवेशे तु कर्तव्याऽर्थानुगा ध्रुवा १६३
त्र्यश्रा वा चतुरश्रा वा तज्ज्ञैर्मध्यलयान्विता
कुर्यादनन्तरं चारीं देवब्राह्मणशंसिनीम् १६४
सुवाक्यमधुरैः श्लोकैर्नानाभावरसान्वितैः
प्रसाद्य रङ्गं विधिवत्कवेर्नाम च कीर्तयेत् १६५
प्रस्तावनां ततः कुर्यात्काव्यप्रख्यापनाश्रयाम्
उद्घात्यकादि कर्तव्यं काव्योपक्षेपणाश्रयम् १३६
दिव्ये दिव्याश्रयो भूत्वा मानुषे मानुषाश्रयः
दिव्यमानुषसंयोगे दिव्यो वा मानुषोऽपि वा १६७

मुखवीजानुसदृशं नानामार्गसमाश्रयम्
नानाविधैरुपक्षैपैः काव्योपक्षेपणं भवेत्  १६८
प्रस्ताप्यैवं तु निष्क्रामेत्काव्यप्रस्तावकस्ततः
एवमेष प्रयोक्तव्यः पूर्वरङ्गो यथाविधि  १६९
य इमं पूर्वरङ्गं तु विधिनैव प्रयोजयेत्
नाशुभं प्राप्नुयात्किञ्चित्स्वर्गलोकं च गच्छति  १७०
यश्चापि विधिमुत्सृज्य यथेष्टं संप्रयोजयेत्
प्राप्नोत्यपत्तयं घोरं तिर्यग्योनिं च गच्छति  १७१
न तथाऽग्निः प्रदहति प्रभञ्जनसमीरितः
यथा ह्यपप्रयोगस्तु प्रयुक्तो दहति क्षणात्  १७२
इत्येवावन्तिपाञ्चालदाक्षिणात्यौढ्रमागधैः
कर्तव्यः पूर्वरङ्गस्तु द्विप्रमाणविनिर्मितः  १७३
एष वः कथितो विप्राः पूर्वरङ्गाश्रितो विधिः
भूयः किं कथ्यतां सम्यङ्नाट्यवेदविधिं प्रति  १७४
इति भारतीये नाट्यशास्त्रे पूर्वरङ्गप्रयोगो नाम पञ्चमोऽध्यायः

## षष्ठोऽध्यायः

पूर्वरङ्गविधिं श्रुत्वा पुनराहुर्महत्तमाः
भरतं मुनयः सर्वे प्रश्नान्पञ्चाभिधत्स्व नः  १
ये रसा इति पठ्यन्ते नाट्ये नाट्यविचक्षणैः
रसत्वं केन वै तेषामेतदाख्यातुमर्हसि  २
भावाश्चैव कथं प्रोक्ताः किं वा ते भावयन्त्यपि
संग्रहं कारिकां चैव निरुक्तं चैव तत्त्वतः  ३
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः
प्रत्युवाच पुनर्वाक्यं रसभावविकल्पनम्  ४
अहं वः कथयिष्यामि निखिलेन तपोधनाः

संग्रहं कारिकां चैव निरुक्तं च यथाक्रमम्  ५
न शक्यमत्य नाटयस्य गन्तुमन्तं कथञ्चन
कस्माद्बहुत्वाज्ज्ञानानां शिल्पानां वाप्यनन्ततः  ६
एकस्यापि न वै शक्यस्त्वन्तो ज्ञानार्णवस्य हि
गन्तुं किं पुनरन्येषां ज्ञानानामर्थतत्त्वतः  ७
किन्त्वल्पसूत्रग्रन्थार्थमनुमानप्रसाधकम्
नाटयस्यास्य प्रवक्ष्यामि रसभावादिसङ्ग्रहम्  ८
विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः
निबन्धो यः समासेन सङ्ग्रहं तं विदुर्बुधाः  ९
रसा भावा ह्यभिनयाः धर्मो वृत्तिप्रवृत्तयः
सिद्धिः स्वरास्तथातोद्यं गानं रङ्गश्च सङ्ग्रहः  १०
अल्पाभिधानेनार्थो यः समासेनोच्यते बुधैः
सूत्रतः साऽनुमन्तव्या कारिकार्थप्रदर्शिनी  ११
नानानामाश्रयोत्पन्नं निघण्टुनिगमान्वितम्
धात्वर्थहेतुसंयुक्तं नानासिद्धान्तसाधितम्  १२
स्थापितोऽर्थो भवेद्यत्र समासेनार्थसूचकः
धात्वर्थवचनेनेह निरुक्तं तत्प्रचक्षते  १३
सङ्ग्रहो यो मया प्रोक्तः समासेन द्विजोत्तमाः
विस्तरं तस्य वक्ष्यामि सनिरुक्तं सकारिकम्  १४
शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाटये रसाः स्मृताः  १५
एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना
पुनश्च भावान्वक्ष्यामि स्थायिसञ्चारिसत्त्वजान्  १६
रतिर्हासश्च शोकश्च क्रोथोत्साहौ भयं तथा
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः  १७
निर्वेदग्लानिशङ्काख्यास्तथासूया मदः श्रमः

आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः १८
व्रीडा चपलता हर्ष आवेगो जडता तथा
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च १९
सुप्त विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च २०
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः २१
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः २२
आङ्गिको वाचिकश्चैव ह्याहार्यः सात्त्विकस्तथा
चत्वारोऽभिनया ह्येते विज्ञेया नाट्यसंश्रयाः २३
लोकधर्मी नाट्यधर्मी धर्मीति द्विविधः स्मृतः
भारती सात्वती चैव कैशिक्यारभटी तथा २४
चतस्रो वृत्तयो ह्येता यासु नाट्यं प्रतिष्ठितम्
आवन्ती दाक्षिणात्या च तथा चैवौढ्रमागधी २५
पाञ्चालमध्यमा चेति विज्ञेयास्तु प्रवृत्तयः
दैविकी मानुषी चैव सिद्धिः स्याद्द्विविधैव तु २६
शारीराश्चैव वैणाश्च सप्त षड्जादयः स्वराः
निषादर्षभगान्धारमध्यपञ्चमधैवताः
ततं चैवावनद्धं च घनं सुषिरमेव च २७
चतुर्विधं च विज्ञेयमातोद्यं लक्षणान्वितम्
ततं तन्त्रीगतं ज्ञेयमवनद्धं तु पौष्करम् २८
घनस्तु तालो विज्ञेयः सुषिरो वंश एव च
प्रवेशाक्षेपनिष्क्रामप्रासादिकमथान्तरम् २९
गानं पञ्चविधं ज्ञेयं ध्रुवायोगसमन्वितम्
चतुरश्रो विकृष्टश्च रङ्गस्त्र्यश्रश्च कीर्तितः ३०

एवमेषोऽल्पसूत्रार्थो निर्दिष्टो नाट्यसंग्रहः
अतः परं प्रवक्ष्यामि सूत्रग्रन्थविकल्पनम् ३१
तत्र रसानेव तावदादावभिव्याख्यास्यामः
न हि रसादृते कश्चिदर्थः प्रवर्तते
तत्र विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः
कोदृष्टान्तः । अत्राह--यथा हि
नानाव्यञ्जनौषद्रिव्यसंयोगाद्रसनिष्पत्तिः
तथानानाभावोपगमाद्रसनिष्पत्तिः । यथा हि--
गुणादिभिर्द्रव्यैर्व्यञ्जनैरौषधिभिश्च षाडवादयो रसा निर्वर्त्यन्ते तथा
नानाभावोपगता अपि स्थायिनो भावा रसत्वमाप्नुवन्तीति ।
अत्राह--रस इति कः पदार्थः । उच्यते--आस्वाद्यत्वात् ।
कथमास्वाद्यते रसः । यथा हि नानाव्यञ्जनसंस्कृतमन्नं भुञ्जाना
रसानास्वादयन्ति सुमनसः पुरुषा हर्षादींश्चाधिगच्छन्ति तथा
नानाभावाभिनयव्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावानास्वा-
दयन्ति सुमनसः प्रेक्षकाः हर्षादींश्चाधिगच्छन्ति । तस्मान्नाट्यरसा
इत्यभिव्याख्याताः । अत्रानुवंश्यौ श्लोकौ भवतः--
यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम्
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः ३२
भावाभिनयसंबद्धान्स्थायिभावांस्तथा बुधाः
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः ३३
अत्राह--किं रसेभ्यो भावानामभिनिर्वृत्तिरुताहो भावेभ्यो रसाना-
मिति । केषाञ्चिन्मतं परस्परसम्बन्धादेशामभिनिर्वृत्तिरिति । तन्न
। कस्मात् । दृश्यते हि भावेभ्यो रसानामभिनिर्वृत्तिर्न तु रसेभ्यो
भावानामभिनिर्वृत्तिरिति ।
भवन्ति चात्र श्लोकाः--
नानाभिनयसम्बद्धान्भावयन्ति रसानिमान्

यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ३४
नानाद्रव्यैर्बहुविधैर्व्यञ्जनं भाव्यते यथा
एवं भावा भावयन्ति रसानभिनयैः सह ३५
न भावहीनोऽस्ति रसो न भावो रसवर्जितः
परस्परकृता सिद्धिस्तयोरभिनये भवेत् ३६
व्यञ्जनौषधिसंयोगो यथाऽन्नं स्वादुतां नयेत्
एवं भावा रसाश्चैव भावयन्ति परस्परम् ३७
यथा बीजाद्भवेद्वृक्षो वृक्षात्पुष्पं फलं यथा
तथा मूलं रसाः सर्वे तेभ्यो भावा व्यवस्थिताः ३८
तदेषां रसानामुत्पत्तिवर्णदैवतनिदर्शनान्यभिव्याख्यास्यामः ।
तेषामुत्पत्तिहेतवश्चत्वारो रसाः । तद्यथा--
शृङ्गारो रौद्रौ वीरो बीभत्स इति । अत्र--
शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणो रसः ।
वीरात्त्वैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः ३९
शृङ्गारानुकृतिर्या तु स हास्यस्तु प्रकीर्तितः
रौद्रस्यैव च यत्कर्म स ज्ञेयः करुणो रसः ४०
वीरस्यापि च यत्कर्म सोऽद्भुतः परिकीर्तितः
बीभत्सदर्शनं यच्च ज्ञेयः स तु भयानकः ४१
अथ वर्णाः--
श्यामो भवति शृङ्गारः सितो हास्यः प्रकीर्तितः
कपोतः करुणश्चैव रक्तो रौद्रः प्रकीर्तितः ४२
गौरो वीरस्तु विज्ञेयः कृष्णश्चैव भयानकः
नीलवर्णस्तु बीभत्सः पीतश्चैवाद्भुतः स्मृतः ४३
अथ दैवतानि
शृङ्गारो विष्णुदेवत्यो हास्यः प्रमथदैवतः
रौद्रो रुद्राधिदैवत्यः करुणो यमदैवतः ४४

बीभत्सस्य महाकालः कालदेवो भयानकः
वीरो महेन्द्रदेवः स्यादद्भुतो ब्रह्मदैवतः ४५
एवमेतेषां रसानामुत्पत्तिवर्णदैवतान्यभिव्याख्यातानि ।
इदानीमनुभावविभावव्यभिचारिसंयुक्तानां लक्षणनिदर्शनान्यभि-
व्याख्यास्यामः । स्थायिभावांश्च रसत्वमुपनेष्यामः । तत्र शृङ्गारो
नाम रतिस्थायिभावप्रभवः । उज्ज्वलवेषात्मकः । यत्किञ्चि-
ल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं च तच्छृङ्गारेणोपमीयते ।
यस्तावदुज्ज्वलवेषः स शृङ्गारवानित्युच्यते । यथा च गोत्रकुला-
चारोत्पन्नान्याप्तोपदेशसिद्धानि पुंसां नामानि भवन्ति तथैवैषां रसानां
भावानां च नाट्याश्रितानां चार्थानामाचारोत्पन्नान्याप्तोपदेशसिद्धानि
नामानि । एवमेष आचारसिद्धो हृद्योज्ज्वलवेषात्मकत्वाच्छृङ्गारो
रसः । स च स्त्रीपुरुषहेतुक उत्तमयुवप्रकृतिः । तस्य द्वे
अधिष्ठाने सम्भोगो विप्रलम्भश्च । तत्र सम्भोगस्तावत्
ऋतुमाल्यानुलेपनालङ्कारेष्टाजनविषयवरभवनोपभोगोपवनगमना-
नुभवनश्रवणदर्शनक्रीडालीलादिभिर्विभावैरुत्पद्यते ।
तस्य
नयनचातुर्यभ्रूक्षेपकटाक्षसञ्चारललितमधुराङ्गहारवाक्यादिभिरनुभा-
वैरभिनयःप्रयोक्तव्यः । व्यभिचारिणश्चास्यालस्यालस्यौग्र्यजु-
गुप्सावर्ज्याः । विप्रलम्भकृतस्तु निर्वेदग्लानिशङ्कासूयाश्रमचि-
न्तौत्सुक्यनिद्रास्वप्नविबोधव्याध्युन्मादापस्मारजाड्यमरणादिभिर-
नुभावैरभिनेतव्यः ।
अत्राह--यद्ययं रतिप्रभवः शृङ्गारः कथमस्य करुणाश्रयिणो भावा
भवन्ति । अत्रोच्यते--पूर्वमेवाभिहितं सम्भोगविप्रलम्भकृतः
शृङ्गार इति । वैशिकशास्त्रकारैश्च दशावस्थोऽभिहितः । ताश्च
सामान्याभिनये वक्ष्यामः । करुणस्तु शापक्लेशविनिपतितेष्ट-
जनविभवनाशवधबन्धसमुत्थो निरपेक्षभावः । औत्सुक्यचिन्ता-

समुत्थः सापेक्षभावो विप्रलम्भकृतः । एवमन्यः करुणोऽन्यश्च विप्रलम्भ इति । एवमेष सर्वभावसंयुक्तः शृङ्गारो भवति ।

सुखप्रायेषु सम्पन्न ऋृतुमाल्यादिसेवकः
पुरुषः प्रमदायुक्तः शृङ्गार इति संज्ञितः ४६

अपि चात्र सूत्रार्थानुविद्धे आर्ये भवतः

ऋृतुमाल्याङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति ४७
नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमोदैश्च
मधुरैश्चाङ्गविहारैस्तस्याभिनयः प्रयोक्तव्यः ४८

अथ हास्यो नाम हासस्थायिभावात्मकः । स च विकृतपरवेषालङ्कारधाष्टर्यलौल्यकुहकासत्प्रलापव्यङ्गदर्शनदोषो-दाहरणादिभिर्विभावैरुत्पद्यते तस्योष्ठनासाकपोलस्पन्दनदृष्टि व्याकोशाकुञ्चनस्वेदास्यरागपार्श्वग्रहणादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

व्यभिचारिणश्चास्यावहित्थालस्यतन्द्रानिद्रास्वप्नप्रबोधासूयादयः । द्विविधश्चायमात्मस्थः परस्थश्च । यदा स्वयं हसति तदाऽऽत्मस्थः । यदा तु परं हासयति तदा परस्थः ।

अत्रानुवंश्ये आर्ये भवतः ।

विपरीतालङ्कारैर्विकृताचाराभिधानवेषैश्च
विकृतैरर्थविशेषैर्हसतीति रसः स्मृतो हास्यः ४९
विकृताचारैर्वाक्यैरङ्गविकारैश्च विकृतवेषैश्च
हासयति जनं यस्मात्तस्माज्ज्ञेयो रसो हास्यः ५०
स्त्रीनीचप्रकृतावेष भूयिष्ठं दृश्यते रसः
षड्भेदाश्चास्य विज्ञेयास्तांश्च वक्ष्याम्यहं पुनः ५१
स्मितमथ हसितं विहसितमुपहसितं चापहसितमतिहसितम्
द्वौ द्वौ भेदौ स्यातामुत्तममध्याधमप्रकृतौ ५२

तत्र
स्मितहसिते ज्येष्ठानां मध्यानां विहसितोपहसिते च
अधमानामपहसितं ह्यतिहसितं चापि विज्ञेयम् ५३
अत्र श्लोकाः--
ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ५४
उत्फुल्लाननेत्रं तु गण्डैर्विकसितैरथ
किञ्चिल्लक्षितदन्तं च हसितं तद्विधीयते ५५
अथ मध्यमानाम्--
आकुञ्चिताक्षिगण्डं यत्सस्वनं मधुरं तथा
कालागतं सास्यरागं तद्वै विहसितं भवेत् ५६
उत्फुल्लनासिकं यत्तु जिह्मदृष्टिनिरीक्षितम्
निकुञ्चिताङ्गकरस्तच्चोपहसितं भवेत् ५७
अथाधमानाम् --
अस्थानहसितं यत्तु साश्रुनेत्रं तथैव च
उत्कम्पितांसकशिरस्तच्चापहसितं भवेत् ५८
संरब्धसाश्रुनेत्रं च विकृष्टस्वर मुद्धतम्
करोपगूढपार्श्वं च तच्चातिहसितं भवेत् ५९
हास्यस्थानानि यानि स्युः कार्योत्पन्नानि नाटाके
उत्तमाधममध्यानामेवं तानि प्रयोजयेत् ६०
इत्येष स्वसमुत्थस्तथा परसमुत्थश्च विज्ञेयः
द्विविधस्त्रिप्रकृतिगतस्त्र्यवस्थभावो रसो हास्यः ६१
अथ करुणो नाम शोकस्थायिभावप्रभवः । स च
शापक्लेशविनिपतितेष्टजनविप्रयोगविभवनाशवधबन्धविद्रवोप-
घातव्यसनसंयोगादिभिर्विभावैः समुपजायते । तस्याश्रुपातपरिदे-
वनमुखशोषणवैवर्ण्यस्त्रस्तगात्रतानिश्श्वासस्मृतिलोपादिभिरनुभा-

वैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्य निर्वेदग्लानिचिन्तौ-
त्सुक्यावेगभ्रममोह श्रमभयविषाददैन्यव्याधिजडतोन्मादापस्मार
त्रासालस्यमरणस्तम्भवेपथुवैवर्ण्याश्रुस्वरभेदादयः ।
अत्रार्ये भवतः--
इष्टवधदर्शनाद्वा विप्रियवचनस्य संश्रवाद्वापि
एभिर्भावविशेषैः करुणरसो नाम संभवति ६२
सस्वनरुदितैर्मोहागमैश्च परिदेवितैर्विलपितैश्च
अभिनेयः करुणरसो देहायासाभिघातैश्च ६३
अथ रौद्रो नाम क्रोधस्थायिभावात्मको रक्षोदानवोद्धतमनुष्यप्रकृ-
तिः संग्रामहेतुकः । स च क्रोधाघर्षणाधिक्षेपानृतवचनोपघात-
वाक्पारुष्याभिद्रोहमात्सर्यादिभिर्विभावैरुत्पद्यते । तस्य च ताड-
नपाटनपीडनच्छेदनभेदनप्रहरणाहरणशस्त्रसम्पातसम्प्रहाररुधिरा-
कर्षणाद्यानि कर्माणि । पुनश्च रक्तनयनभ्रुकुटीकरणदन्तोष्ठपीडन-
गण्डस्फुरणहस्ताग्रनिष्पेषादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।
भावाश्चास्यासम्मोहोत्साहावेगामर्षचपलतौग्र्यंगर्वस्वेदवेपथुरोमा-
ञ्चगद्गदादयः ।
अत्राह--यदभिहितं रक्षोदानवादीनां रौद्रो रसः ।
किमन्येषां नास्ति ।
उच्यते--अस्तन्येषामपि रौद्रो रसः । किन्त्वधिकारोऽत्र गृह्यते ।
ते हि स्वभावत एव रौद्राः । कस्मात् बहुबाहवो बहुमुखाः
प्रोद्धूतविकीर्णपिङ्गलशिरोजाः रक्तोद्वृत्तविलोचना भीमासितरूपि-
णश्चैव । यच्च किञ्चित्समारभन्ते स्वभावचेष्टितं वागङ्गादिकं तत्सर्वं
रौद्रमेवैषाम् । तेषां चानुकारिणो ये पुरुषास्तेषामपि सङ्ग्रामसम्प्र-
हारकृतो रौद्रो रसोऽनुमन्तव्यः ।
अत्रानुवंश्ये आर्ये भवतः--
युद्धप्रहारघातनविकृतच्छेदनविदारणैश्चैव

सङ्ग्रामसम्भ्रमाद्यैरेभिः सञ्जायते रौद्रः ६४
नानाप्रहरणमोक्षैः शिरःकबन्धभुजकर्तनैश्चैव
एभिश्चार्थविशेषैरस्याभिनयः प्रयोक्तव्यः ६५
इति रौद्ररसो दृष्टो रौद्रवागङ्गचेष्टितः
शस्त्रप्रहारभूयिष्ठ उग्रकर्मक्रियात्मकः ६६
अथ वीरो नामोत्तमप्रकृतिरुत्साहात्मकः ।
स चासंमोहाध्यवसायनयविनय-
बलपराक्रमशक्तिप्रतापप्रभावादिभिर्विभावैरुत्पद्यते ।
तस्य स्थैर्यधैर्यशौर्यत्याग-
वैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।
भावाश्चास्य धृतिमतिगर्वावेगौ-
ग्र्यामर्षस्मृतिरोमाञ्चादयः ।
अत्रार्ये रसविचारमुखे--
उत्साहा ध्यवसायादविषादित्वादविस्मयामोहात्
विविधादर्थविशेषाद्वीररसो नाम सम्भवति ६७
स्थितिधैर्यवीर्यगर्वैरुत्साहपराक्रमप्रभावैश्च
वाक्यैश्चाक्षेपकृतैर्वीररसः सम्यगभिनेयः ६८
अथ भयानको नाम भयस्थायिभावात्मकः । स च
विकृतरवसत्त्वदर्शनशिवोलूकत्रासोद्वेगशून्यागारारण्यगमनस्वजन-
वधबन्धदर्शनश्रुतिकथादिभिर्विभावैरुत्पद्यते । तस्य प्रवेपितकर-
चरणनयनचपलपुलकमुखवैवर्ण्यस्वरभेदादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।
भावाश्चास्य स्तम्भस्वेदगद्गदरोमाञ्चवेपथुस्वरभेदवैवर्ण्यशङ्कामोह-
दैन्यावेगचापलजडतात्रासापस्मारमरणादयः ।
अत्रार्याः--
विकृतरवसत्त्वदर्शनसंग्रामारण्यशून्यगृहगमनात्

गुरुनृपयोरपराधात्कृतकश्च भयानको ज्ञेयः ६९
गात्रमुखदृष्टिभेदैरूरुस्तम्भाभिवीक्षणोद्वेगैः
सन्नमुखशोषहृदयस्पन्दनरोमोद्गमैश्च भयम् ७०
एतत्स्वभावजं स्यात्सत्त्वसमुत्थं तथैव कर्तव्यम्
पुनरेभिरेव भावैः कृतकं मृदुचेष्टितैः कार्यम् ७१
करचरणवेपथुस्तम्भगात्रहृदयप्रकम्पेन
शुष्कोष्ठतालुकण्ठैर्भयानको नित्यमभिनेयः ७२
अथ बीभत्सो नाम जुगुप्सास्थायिभावात्मकः ।
सचाहृद्याप्रियाचोष्यानिष्टश्रवणदर्शनकीर्तनादिभिर्विभावैरुत्पद्यते ।
तस्य सर्वाङ्गसंहारमुखविकूणनोल्लेखननिष्ठीवनोद्वेजनादिभिर-
नुभावैभिनयः प्रयोक्तव्यः । भावाश्चास्यापस्मारोद्वेगावेगमोहव्या-
धिमरणादयः । अत्रानुवंश्ये आर्ये भवतः--
अनभिमतदर्शनेन च गन्धरसस्पर्शशब्ददोषैश्च
उद्वेजनैश्च बहुभिर्बीभत्सरसः समुद्भवति ७३
मुखनेत्रविकूणनया नासाप्रच्छादनावनमितास्यैः
अव्यक्तपादपतनैर्बीभत्सः सम्यगभिनेयः ७४
अथाद्भुतो नाम विस्मयस्थायिभावात्मकः । स च
दिव्यजनदर्शनेप्सितमनो-
रथवाप्त्युपवनदेवकुलादिगमनसभाविमानमायेन्द्रजालसम्भावना-
दिभिर्विभावैरुत्पद्यते । तस्य नयनविस्तारानिमेषप्रेक्षणरोमाञ्चा-
श्रुस्वेदहर्षसाधुवाददानप्रबन्धहाहाकारबाहुवदनचेलाङ्गुलिभ्रमणा-
दिभिरनुभावैरभिनयः प्रयोक्तव्यः । भावाश्चास्य स्तम्भाश्रुस्वेद-
गद्गदरोमाञ्चावेगसम्भ्रमजडताप्रलयादयः । अत्रानुवंश्ये आर्ये
भवतः --
यत्त्वतिशयार्थयुक्तं वाक्यं शिल्पं च कर्मरूपं वा
तत्सर्वमद्भुतरसे विभावरूपं हि विज्ञेयम् ७५

स्पर्शग्रहोल्लुकसनैर्हाहाकारैश्च साधुवादैश्च
वेपथुगद्गद्वचनैः स्वेदाद्यैरभिनयस्तस्य ७६
शृङ्गारं त्रिविधं विद्याद्वाङ्नैपथ्यक्रियात्मकम्
अङ्गनैपथ्यवाक्यैश्च हास्यरौद्रौ त्रिधा स्मृतौ ७७
धर्मोपघातजश्चैव तथार्थापचयोद्भवः
तथा शोककृतश्चैव करुणस्त्रिविधः स्मृतः ७८
दानवीरं धर्मवीरं युद्धवीरं तथैव च
रसवीरमपि प्राह ब्रह्मा त्रिविधमेव हि ७९
व्याजाच्चैवापराधाच्च वित्रासितकमेव च
पुनर्भयानकश्चैव विद्यात् त्रिविधमेव हि ८०
बीभत्सः क्षोभजः शुद्ध उद्वेगी स्यात् द्वितीयकः
विष्ठाकृमिभिरुद्वेगी क्षोभजो रुधिरादिजः ८१
दिव्यश्चानन्दजश्चैव द्विधा ख्यातोऽद्भुतो रसः
दिव्यदर्शनजो दिव्यो हर्षादानन्दजः स्मृतः ८२
अथ शान्तो नाम शमस्थायिभावात्मकौ मोक्षप्रवर्तकः ।
स तु तत्त्वज्ञानवैराग्याशयशुद्ध्यादिभिर्विभावैः समुत्पद्यते ।
तस्य
यमनियमाध्यात्मध्यानधारणोपासनसर्वभूतदयालिङ्गग्रहणादिभिर-
नुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्य निर्वेदस्मृतिधृति-
सर्वाश्रमशौचस्तम्भरोमाञ्चादयः । अत्रार्याः श्लोकाश्च भवन्ति--
मोक्षाध्यात्मसमुत्थस्तत्त्वज्ञानार्थहेतुसंयुक्तः
नैःश्रेयसोपदिष्टः शान्तरसो नाम सम्भवति
बुद्धीन्द्रियकर्मेन्द्रियसंरोधाध्यात्मसंस्थितोपेतः
सर्वप्राणिसुखहितः शान्तरसो नाम विज्ञेयः
न यत्र दुखं न सुखं न द्वेषो नापि मत्सरः
समः सर्वेषु भूतेषु स शान्तः प्रथितो रसः

भावाः विकारा रत्याद्याः शान्तस्तु प्रकृतिर्मतः ।
विकारः प्रकृतेर्जातः पुनस्तत्रैव लीयते
स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्तते
पुनर्निमित्तापाये च शान्त एवोपलीयते
एवं नवरसा दृष्ट नाट्यज्ञैर्लक्षणान्विताः
एवमेते रसा ज्ञेयास्त्वष्टौ लक्षणलक्षिताः
अत ऊर्ध्वं प्रवक्ष्यामि भावानामपि लक्षणम् ८३

इति भारतीये नाट्यशास्त्रे रसाध्यायः षष्ठः

## सप्तमोऽध्यायः

भावानिदानीं व्याख्यास्यामः । अत्राह--भावा इति कस्मात् ।
किं भवन्तीति भावाः किं वा भावयन्तीति भावाः । उच्यते--
वागङ्गसत्त्वोपेतान्काव्यार्थान्भावयन्तीति भावा इति ।
भू इति करणे धातुस्तथा च भावितं कृतमित्यनर्थान्तरम् ।
लोकेऽपि च प्रसिद्धम् । अहो ह्यनेन गन्धेन रसेन वा सर्वमेव
भावितमिति ।
तच्च व्याप्त्यर्थम् । श्लोकाश्चात्र--
विभावेनाहृतो योऽर्थो ह्यनुभावैस्तु गम्यते
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः १
वागङ्गमुखरागेण सत्त्वेनाभिनयेन च
कवेरन्तर्गतं भावं भावयन्भाव उच्यते २
नानाभिनयसंबद्धान्भावयन्ति रसानिमान्
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ३
अथ विभाव इति कस्मात् । उच्यते--विभावो विज्ञानार्थः ।
विभावः
कारणं निमित्तं हेतुरिति पर्यायाः । विभाव्यन्तेऽनेन

वागङ्गसत्त्वाभिनया
इत्यतो विभावः । यथा विभावितं विज्ञातमित्यनर्थान्तरम् ।
अत्र श्लोकः--
बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः
अनेन यस्मात्तेनायं विभाव इति संज्ञितः ४
अथानुभाव इति कस्मात् । उच्यते--
अनुभाव्यतेऽनेन वागङ्गसत्त्वकृतोऽभिनय इति ।
अत्र श्लोकः--
वागङ्गाभिनयेनेह यतस्त्वर्थोऽनुभाव्यते
शाखाङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततः स्मृतः ५
एवं ते विभावानुभावसंयुक्ता भावा इति व्याख्याताः । अतो ह्येषां
भावानां सिद्धिर्भवति । तस्माडेषां भावानां विभावानुभावसंयु-
क्तानां लक्षणनिदर्शनान्यभिव्याख्यास्यामः । तत्र विभावानुभावौ
लोकप्रसिद्धौ । लोकस्वभावानुगतत्वाच्च तयोर्लक्षणं नोच्यते
ऽतिप्रसङ्गनिवृत्त्यर्थम् । भवति चात्र श्लोकः--
लोकस्वभावसंसिद्धा लोकयात्रानुगामिनः
अनुभावा विभावाश्च ज्ञेयास्त्वभिनये बुधैः ६
तत्राष्टौ भावाः स्थायिनः । त्रयस्त्रिंशद्व्यभिचरिणः । अष्टौ
सात्विका इति भेदाः । एवमेते काव्यरसाभिव्यक्तिहेतव
एकोनपञ्चा-
शद्भावाः प्रत्यवगन्तव्याः ।
एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते ।
अत्र श्लोकः--
योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः
शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना ७
अत्राह--यदि

काव्यार्थसंश्रितैर्विभावानुभावव्यञ्जितैरेकोनपञ्चाशद्भावैः
सामान्यगुणयोगेनाभिनिष्पद्यन्ते रसास्तत्कथं स्थायिन एव भावा
रसत्वमाप्नुवन्ति । उच्यते--यथा हि
समानलक्षणास्तुल्यपाणिपादोदरशरीराः समानाङ्गप्रत्यङ्गा अपि
पुरुषाः कुलशीलविद्याकर्मशिल्पविचक्षणत्वाद्राजत्वमाप्नुवन्ति
तत्रैव चान्येऽल्पबुद्धयस्तेषामेवानुचरा भवन्ति तथा विभावा-
नुभावव्यभिचारिणः स्थायिभावानुपाश्रिता भवन्ति ।
बह्वाश्रयत्वात्स्वामिभूताः स्थायिनो भावाः ।
तद्वत्स्थानीयपुरुषगुणभूता अन्ये भावास्तान्गुणतया श्रयन्ते ।
स्थायिभावा रसत्वमाप्नुवन्ति । परिजनभूता व्यभिचारिणो भावाः।
अत्राह--को दृष्टान्त इति ।
यथा नरेन्द्रो बहुजनपरिवारोऽपि स एव नाम लभते नान्यः सुमहा-
नपि पुरुषः तथा विभावानुभावव्यभिचारिपरिवृतः स्थायी भावो
रसनाम लभते ।
भवति चात्र श्लोकः--
यथा नराणां नृपतिः शिष्याणां च यथा गुरुः
एवं हि सर्वभावानां भावः स्थायी महानिह ८
लक्षणं खलु पूर्वमभिहितमेषां रससंज्ञकानाम् ।
इदानीं भावसामान्यलक्षणमभिधास्यामः ।
तत्र स्थायिभावान्वक्ष्यामः--
रतिर्नाम प्रमोदात्मिका ऋतुमाल्यानुलेपनाभरणभोजनवर-
भवनानुभवनाप्रातिकूल्यादिभिर्विभावैः समुत्पद्यते ।
तामभिनयेत्स्मितवदनमधुरकथनभ्रूक्षेपकटाक्षादिभिरनुभावैः ।
अत्र श्लोकः--
इष्टार्थविषयप्राप्त्या रतिरित्युपजायते
सौम्यत्वादभिनेया सा वाङ्माधुर्याङ्गचेष्टितैः ९

हासो नाम--
परचेष्टानुकरणकुहकासम्बद्धप्रलापपौरोभाग्यमौर्ख्यादिभिर्विभावैः
समुत्पद्यते । तमभिनयेत्पूर्वोक्तैर्हसितादिभिरनुभावैः ।
भवति चात्र श्लोकः--
परचेष्टानुकरणाद्धासः समुपजायते
स्मितहासातिहंसितैरभिनेयः स पण्डितैः १०
शोको नाम--
इष्टजनवियोगविभवनाशवधबन्धदुःखानुभवनादिभिर्विभावैः
समुत्पद्यते ।
तस्यास्रपातपरिदेवितविलपितवैवर्ण्यस्वरभेदस्रस्तगात्रताभूमिपत-
नसस्वनरुदिताक्रन्दितदीर्घनिःश्वसितजडतोन्मादमोहमरणादिभिर-
नुभावैरभिनयः प्रयोक्तव्यः ।
रुदिमत्र त्रिविधम्--आनन्दजमार्तिजमीर्ष्यासमुद्भवं चेति ।
भवन्ति चात्रार्याः--
आनन्देर्ष्यार्तिकृतं त्रिविधं रुदितं सदा बुधैर्ज्ञेयम्
तस्य त्वभिनययोगान्विभावगतितः प्रवक्ष्यामि
हर्षोत्फुल्लकपोलं सानुस्मरणादपाङ्गविसृतास्रम्
रोमाञ्चगात्रमनिभृतमानन्दसमुद्भवं भवति ११
पर्याप्तविमुक्तास्रं सस्वनमस्वस्थगात्रगतिचेष्टम्
भूमिनिपातनिवर्तितविलपितमित्यार्तिजं भवति १२
प्रस्फुरितौष्ठकपोलं सशिरःकम्पं तथा सनिःश्वासम्
भ्रकुटीकटाक्षकुटिलं स्त्रीणामीर्ष्याकृतं भवति १३
स्त्रीनीचप्रकृतिष्वेष शोको व्यसनसम्भवः
धैर्येणोत्तममध्यानां नीचानां रुदितेन च १४
क्रोधो नाम--अघर्षणाक्रुष्टकलहविवादप्रतिकूलादिभिर्विभावैः
समुत्पद्यते ।

अस्य
विकृष्टनासापुटोद्वृत्तनयनसन्दष्टोष्ठपुटगण्डस्फुरणादिभिरनुभावैरभि-
नयः प्रयोक्तव्यः ।
रिपुजो गुरुजश्चैव प्रणयिप्रभवस्तथा
भृत्यजः कृतकश्चेति क्रोधः पञ्चविधः स्मृतः १५
अत्रार्या भवन्ति--
भ्रुकुटीकुटिलोत्कटमुखः सन्दष्टोष्ठः स्पृशन्करेण करम्
क्रुद्धः स्वभुजप्रेक्षी शत्रौ निर्यन्त्रणं रुष्येत् १६
किञ्चिदवाङ्मुखदृष्टिः सास्रस्वेदापमार्जनपरश्च
अव्यक्तोल्बणचेष्टो गुरौ विनययन्त्रितो रुष्येत् १७
अल्पतरप्रविचारो विकिरन्नश्रूण्यपाङ्गविक्षेपैः
सभ्रुकुटीस्फुरितोष्ठः प्रणयोपगतां प्रियां रुष्येत् १८
अथ परिजने तु रोषस्तर्जननिर्भर्त्सनाक्षिविस्तारैः
विप्रेक्षणैश्च विविधैरभिनेयः क्रूरतारहितः १९
कारणमवेक्षमाणः प्रायेणायासलिङ्गसंयुक्तः
वीररसान्तरचारी कार्यः कृतको भवति कोपः २०
उत्साहो नाम--उत्तमप्रकृतिः । स
चाविषादशक्तिधैर्यशौर्यादिभिर्विभावैरुत्पद्यते ।
तस्य धैर्यात्यागवैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।
अत्र श्लोकः--
असम्मोहादिभिर्व्यक्तो व्यवसायनयात्मकः
उत्साहजत्वभिनेयः स्यादप्रमादोत्थितादिभिः २१
भयं नाम--स्त्रीनीचप्रकृतिकम् ।
गुरुराजापराधश्वापदशून्यागाराटवीपर्वतगहनगजाहिदर्शननिर्भर्त्सन-
कान्तारदुर्दिननिशान्धकारोलूकनक्तञ्चरारावश्रवणादिभिर्विभावैः
समुत्पद्यते । तस्य प्रकम्पितकचरणहृदयकम्पनस्तम्भमुखशोष-

जिह्वापरिलेहनस्वेदवेपथुत्रासपरित्राणान्वेषणधावनोत्क्रुष्टादिभिरनु-
भावैरभिनयः प्रयोक्तव्यः ।
अत्र श्लोकाः--
गुरुराजापराधेन रौद्राणां चापि दर्शनात्
श्रवणादपि घोराणां भयं मोहेन जायते २२
गात्रकम्पनवित्रासैर्वक्त्रशोषणसम्भ्रमैः
विस्फारितेक्षणैः कार्यमभिनेयक्रियागुणैः २३
सत्त्ववित्रासनोद्भूतं भयमुत्पद्यते नृणाम्
स्रस्ताङ्गाक्षिनिमेषैस्तदभिनेयं तु नर्तकैः २४
आत्रार्या भवति--
करचरणहृदयकम्पैर्मुखशोषणवदनलेहनस्तम्भैः
सम्भ्रान्तवदनवेपथुसन्त्रासकृतैरभिनयोऽस्य २५
जुगुप्सा नाम--स्त्रीनीचप्रकृतिका ।
सा चाहृद्यदर्शनश्रवणादिभिर्विभावैः
समुत्पद्यते । तस्याः
सर्वाङ्गसङ्कोचनिष्ठीवनमुखविकूणनहृल्लेखादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।
भवति चात्र श्लोकः--
नासाप्रच्छादनेनेह गात्रसङ्कोचनेन च
उद्वेजनैः सहृल्लेखैर्जुगुप्सामभिनिर्दिशेत् २६
विस्मयो नाम--
मायेन्द्रजालमानुषकर्मातिशयचित्रपुस्तशिल्पविद्यातिशयादिभिर्वि-
भावैः समुत्पद्यते । तस्य
नयनविस्तारानिमेषप्रेक्षितभ्रूक्षेपरोमहर्षणशिरःकम्पसाधुवादादिभि-
रनुभावैरभिनयः प्रयोक्तव्यः । भवति चात्र श्लोकः--
कर्मातिशयनिर्वृत्तो विस्मयो हर्षसम्भवः

सिद्धिस्थाने त्वसौ साध्यः प्रहर्षपुलकादिभिः २७
एवमेते स्थायिनो भावा रससंज्ञाः प्रत्यवगन्तव्याः ।
व्यभिचारिण इदानीं व्याख्यास्यामः । अत्राह--व्यभिचारिण इति
उच्यते--वि अभि इत्येतावुपसर्गौ । चर इति गत्यर्थो धातुः ।
विविधमाभिमुख्येन रसेषु चरन्तीति व्यभिचारिणः ।
वागङ्गसत्त्वोपेताः प्रयोगे रसान्नयन्तीति व्यभिचारिणः । अत्राह--
कथं नयन्तीति । उच्यते--लोकसिद्धान्त एषः-
यथा सूर्य इदं दिनं नक्षत्रं वा नयतीति । न च तेन बाहुभ्यां
स्कन्धेन वा नीयते ।
किं तु लोकप्रसिद्धमेतत् । यथेदं सूर्यो नक्षत्रं दिनं वा नयतीति ।
एवमेते
व्यभिचारिण इत्यवगतन्तः ।
तानिह सङ्ग्रहाभिहितांस्त्रयस्त्रिंशद्व्यभिचारिणो
भावान् वर्णयिष्यामः । तत्र निर्वेदो नाम--
दारिद्र्यव्याध्यवमानाधिक्षेपाक्रुष्टक्रोधताडनेष्टजनवियोगतत्त्वज्ञा-
नादिभिर्विभावैः समुत्पद्यते स्त्रीनीचकुसत्त्वानाम् । रुदितनिःश्व-
सिच्तोछ्वसितसम्प्रधारणादिभिरनुभावैस्तमभिनयेत् ।
अत्र श्लोकः--
दारिद्र्येष्टवियोगाद्यैः निर्वेदो नाम जायते
सम्प्रधारणनिःश्वासैस्तस्य त्वभिनयो भवेत् २८
अत्रानुवंश्ये आर्ये भवतः--
इष्जनविप्रयोगाद्दारिद्र्याद्व्याधितस्तथा दुःखात्
ऋद्धिं परस्य दृष्ट्वा निर्वेदो नाम सम्भवति २९
बाष्पपरिप्लुतनयनः पुनश्च निःश्वासदीनमुखनेत्रः
योगीव ध्यानपरो भवति हि निर्वेदवान्पुरुषः ३०
ग्लानिर्नाम--

वान्तविरिक्तव्याधितपोनियमोपवासमनस्तापातिशयमदन-
मद्यसेवनातिव्यायामाध्वगमनक्षुत्पिपासानिद्राच्छेदादिभिर्विभावैः
समुत्पद्यते ।
तस्याः क्षामवाक्यनयनकपोलोदरमन्दपदोत्क्षेपणवेपना-
नुत्साहतनुगात्रवैवर्ण्यस्वरभेदादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।
अत्रार्ये भवतः--
वान्तविरिक्तव्याधिषु तपसा जरसा च जायते ग्लानिः
कार्श्येन साभिनेया मन्दभ्रमणेन कम्पेन ३१
गदितैः क्षामक्षमैर्नेत्रविकारैश्च दीनसञ्चारैः
श्लथभावेनाङ्गानां मुहुर्मुहुर्निर्दिशेद्ग्लानिम् ३२
शङ्का नाम--सन्देहात्मिका स्त्रीनीचप्रभवा ।
चौर्याभिग्रहणनृपापराधपाप-
कर्मकरणादिभिर्विभावैः समुत्पद्यते । तस्या
मुहुर्मुहुरवलोकनावकुण्ठनमुखशोषणजिह्वापरिलेहनमुखवैवर्ण्य-
स्वरभेदवेपथुशुष्कोष्ठकण्ठायाससाधर्म्यादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।
चौर्यादिजनिता शङ्का प्रायः कार्या भयानके
प्रियव्यलीकजनिता तथा शृङ्गारिणी मता ३३
अत्राकारसंवरणमपि केचिदिच्छन्ति । तच्च
कुशलैरुपादिभिरिङ्गितैश्चोपलक्ष्यम् ।
अत्रार्ये भवतः--
द्विविधा शङ्का कार्या ह्यात्मसमुत्था च परसमुत्था च
या तत्रात्मसमुत्था सा ज्ञेया दृष्टिचेष्टाभिः ३४
किञ्चित्प्रवेपिताङ्गस्त्वधो मुखो वीक्षते च पार्श्वानि
गुरुसज्जमानजिह्वः श्यामास्यः शङ्कितः पुरुषः ३५
असूया नाम--

नानापराधद्वेषपरैश्वर्यसौभाग्यमेधाविद्यालीलादिभिर्विभावैः
समुत्पद्यते । तस्याश्च परिषदि दोषप्रख्यापनगुणोपघातेर्ष्या-
चक्षुःप्रदानाधोमुखभ्रुकुटीक्रियावज्ञानकुत्सनादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।
अत्रार्ये भवतः
प्रसौभाग्येश्वरतामेधालीलासमुच्छ्रयान्दृष्ट्वा
उत्पद्यते ह्यसूया कृतापराधो भवेद्यश्च ३६
भ्रुकुटिकुटिलोत्कटमुखैः सेर्ष्याक्रोधपरिवृत्तनेत्रैश्च
गुणनाशनविद्वेषैस्तत्राभिनयः प्रयोक्तव्यः ३७
मदो नाम--मद्योपयोगादुत्पद्यते । स च त्रिविधः पञ्चविधभावश्च।
अत्रार्या भवन्ति--
ज्ञेयस्तु मदस्त्रिविधस्तरुणो मध्यस्तथावकृष्टश्च
करणं पञ्चविधं स्यात्तस्याभिनयः प्रयोक्तव्यः ३८
कश्चिन्मत्तो गायति रोदिति कश्चित्तथा हसति कश्चित्
परुषवचनाभिधायी कश्चित्कश्चित्तथा स्वपिति ३९
उत्तमसत्त्वः शेते हसति च गायति च मध्यमप्रकृतिः
परुषवचनाभिधायी रोदित्यपि चाधमप्रकृतिः ४०
स्मितवचनमधुररागो हृष्टतनुः किञ्चिदाकुलितवाक्यः
सुकुमाराविद्धगतिस्तरुणमदस्तूत्तमप्रकृतिः ४१
स्खलिताघूर्णितनयनः स्रस्तव्याकुलितबाहुविक्षेपः
कुटिलव्याविद्धगतिर्मध्यमदो मध्यमप्रकृतिः ४२
नष्टस्मृतिर्हतगतिश्छर्दितहिक्काकफैः सुबीभत्सः
रुगुसज्जमानजिह्वो निष्ठीवति चाधमप्रकृतिः ४३
रङ्गे पिबतः कार्या मदवृद्धिर्नाट्ययोगमासाद्य
कार्यो मदक्षयो वै यः खलु पीत्वा प्रविष्टः स्यात् ४४
सन्त्रासाच्छोकाद्वा भयात्प्रहर्षाच्च कारणोपगतात्

उत्क्रम्यापि हि कार्यो मदप्रणाशः क्रमात्तज्ज्ञैः ४५
एभिर्भावविशेषैर्मदो द्रुतं सम्प्रणाशमुपयाति
अभ्युदयसुखैर्वाक्यैर्यथैवं शोकः क्षयं याति ४६
श्रमो नाम--अध्वव्यायामसेवनादिभिर्विभावैः समुत्पद्यते ।
तस्य गात्रपरिमर्दनसंवाहननिःश्वासितविजृम्भितमन्दपदोत्प्रेक्षणन-
यनवदनविकूणनसीत्करादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।
अत्रार्या--
नृत्ताध्वव्यायामान्नरस्य सञ्जायते श्रमो नाम
निःश्वासखेदगमनैस्तस्याभिनयः प्रयोक्तव्यः ४७
आलस्यं नाम--खेदव्याधिगर्भस्वभावश्रमसौहित्यादिभिर्विभावैः
समुत्पद्यते स्त्रीनीचानाम् ।
तदभिनयेत्सर्वकर्मानभिलापपशयनासननिद्रातन्द्रीसेवनादिभिरनु-
भावैः । अत्रार्या--
आलस्यं त्वभिनेयं खेदोपगतं स्वभावजं चापि
आहारवर्जितानामारम्भाणामनारम्भात् ४८
दैन्यं नाम--दौर्गत्यमनस्तापादिभिर्विभावैः समुत्पद्यते ।
तस्याधृतिशिरोरोगगात्रगौरवान्यमनस्कतामृजापरिवर्जनादिभिर-
नुभावैरभिनयः प्रयोक्तव्यः ।
अत्रार्या--
चिन्तौत्सुक्यसमुत्था दुःखाद्या भवति दीनता पुंसाम्
सर्वमृजापरिहारैर्विविधोऽभिनयो भवेत्तस्य ४९
चिन्ता नाम--ऐश्वर्यभ्रंशेष्टद्रव्यापहारदारिद्र्यादिभावैरुत्पद्यते ।
तामभिनयेन्निःश्वसितोच्छ्वसितसन्तापध्यानाधोमुखचिन्तनतनुका-
र्श्यादिभिरनुभावैः ।
अत्रार्ये भवतः--
ऐश्वर्यभ्रंशेष्टद्रव्यक्षयजा बहुप्रकारा तु

हृदयवितर्कोपगता नृणां चिन्ता समुद्भवति ५०
सोच्छ्वासैर्निःश्वसितैः सन्तापैश्चैव हृदयशून्यतया
अभिनेतव्या चिन्ता मृजाविहीनैरधृत्या च ५१
मोहो नाम--
दैवोपघातव्यसनाभिघातव्याधिभयावेगपूर्ववैरानुस्मरणादिभिर्विभा-
वैः समुत्पद्यते ।
तस्य निश्चैतन्यभ्रमणपतनाघूर्णनादर्शनादिभिरनुभावैरभिनयः
प्रयोक्तव्यः ।
अत्र श्लोकस्तावदार्या च--
अस्थाने तस्करान्दृष्ट्वा त्रासनैर्विविधैरपि
तत्प्रतीकारशून्यस्य मोहः समुपजायते ५२
व्यसनाभिघातभयपूर्ववैरसंस्मरणरोगजो मोहः
सर्वेन्द्रियसम्मोहात्तस्याभिनयः प्रयोक्तव्यः ५३
स्मृतिर्नाम--सुखदुःखकृतानां भावानामनुस्मरणम् । सा चा
स्वास्थ्यजघन्यरात्रिनिद्राच्छेदसमानदर्शनोदाहरणचिन्ताभ्यासादि-
भिर्विभावैः समुत्पद्यते ॥
तामभिनयेच्छिरःकम्पनावलोकनभ्रू समुन्नमनादिभिरनुभावैः ।
अत्रार्ये भवतः--
सुखदुःखमतिक्रान्तं तथा मतिविभावितं यथावृत्तम्
चिरविस्मृतं स्मरति यः स्मृतिमानिति वेदितव्योऽसौ ५४
स्वास्थ्याभ्याससमुत्था श्रुतिदर्शनसम्भवा स्मृतिर्निपुणैः
शिरउद्वाहनकम्पैर्भ्रूक्षेपैश्चाभिनेतव्या ५५
धृतिर्नाम--
शौर्यविज्ञानश्रुतिविभवशौचाचारगुरुभक्त्यधिकमनोरथार्थलाभक्री-
डादिभिर्विभावैः समुत्पद्यते । तामभिनयेत्प्राप्तानां
विषयाणामुपभोगादप्राप्तातीतोपहतविनष्टानामननुशोचनादिभिर-

नुभावैः । अत्रार्ये भवतः--
विज्ञानशौचविभवश्रुतिशक्तिसमुद्भवा धृतिः सद्भिः
भयशोकविषादाद्यैरहिता तु सदा प्रयोक्तव्या ५६
प्राप्तानामुपभोगः शब्दरसस्पर्शरूपगन्धानाम्
अप्राप्तैश्च न शोको यस्यां हि भवेद्धृतिः सातु ५७
व्रीडा नाम--अकार्यकरणात्मिका । सा च
गुरुव्यतिक्रमणावज्ञानप्रतिज्ञातानिर्वहणपश्चात्तापादिभिर्विभावैः
समुत्पद्यते । तां निमूढवचनाधोमुखविचिन्तनोर्वीलेखनवस्त्राङ्गु-
लीयकस्पर्शननखनिकृन्तनादिभिरनुभावैरभिनयेत् ।
अत्रार्ये भवतः--
किञ्चिदकार्यं कुर्वन्नेवं यो दृश्यते शुचिभिरन्यैः
पश्चात्तापेन युतो व्रीडित इति वेदितव्योऽसौ ५८
लज्जानिगूढवदनो भूमिं विलिखन्नखांश्च विनिकृन्तन्
वस्त्राङ्गुलीयकानां संस्पर्शं व्रीडितः कुर्यात् ५९
चपलता नाम--रागद्वेषमात्सर्यामर्षेर्ष्याप्रतिकूलादिभिर्विभावैः
समुत्पद्यते ।
तस्याश्च वाक्पारुष्यनिर्भर्त्सनवधबन्धसम्प्रहारताडनादिभिरनुभावैर-
भिनयः प्रयोक्तव्यः ।
अत्रार्या भवति--
अविमृश्य तु यः कार्यं पुरुषो वधताडनं समारभते
अविनिश्चितकारित्वात्स तु खलु चपलो बुधैर्ज्ञेयः ६०
हर्षो नाम--मनोरथलाभेष्टजनसमागमनमनःपरितोषदेवगुरुराजभ-
र्तृप्रसादभोजनाच्छादनलाभोपभोगादिर्विभावैः समुत्पद्यते ।
तमभिनयेन्नयनवदनप्रसादप्रियभाषणालिङ्गनकण्टकितपुलकिता-
स्रस्वेदादिभिरनुभावैः ।
अत्रार्ये भवतः--

अप्राप्ये प्राप्ये वा लब्धेऽर्थे प्रियसमागमे वाऽपि
हृदयमनोरथलाभे हर्षः सञ्जायते पुंसाम् ६१
नयनवदनप्रसादप्रियभाषालिङ्गनैश्च रोमाञ्चैः
ललितैश्चाङ्गविहारैः स्वेदाद्यैरभिनयस्तस्य ६२
आवेगो नाम--
उत्पातवातवर्षाग्निकुञ्जरोद्भ्रमणप्रियाप्रियश्रवणव्यसनाभिघातादिभिर्विभावैः समुत्पद्यते । तत्रोत्पातकृतो नाम विद्युदुल्कानिर्घातप्रपतनचन्द्रसूर्योपरागकेतुदर्शनकृतः ।
तमभिनयेत्सर्वाङ्गस्रस्ततावैमनस्यमुखवैवर्ण्यविषादविस्मयादिभिः। वातकृतं पुनरवकुण्ठनाक्षिपरिमार्जनवस्त्रसङ्ग्रहनत्वरितगमनादिभिः । वर्षकृतं पुनः सर्वाङ्गसम्पिण्डनप्रधावनच्छन्नाश्रयमार्गणादिभिः । अग्निकृतं तु धूमाकुलनेत्रताऽङ्गसङ्कोचनविधूननातिक्रान्तापक्रान्तादिभिः । कुञ्जरोद्भ्रमणकृतं नाम त्वरितापसर्पणचञ्चलगमनभयस्तम्भवेपथुपश्चादवलोकनविस्मयादिभिः । प्रियश्रवणकृतं नामाभ्युत्थानालिङ्गनवस्त्राभरणप्रदानाश्रुपुलकितादिभिः । अप्रियश्रवणकृतं नाम भूमिपतनविषमविवर्तनपरिधावनविलापनाक्रन्दनादिभिः । व्यसनाभिघातजं तु सहसापसर्पणशस्त्रचर्मवर्मधारणगजतुरगरथारोहणसम्प्रधारणादिभिः । एवमष्टविकल्पोऽयमावेगः सम्भ्रमात्मकः
स्थैर्येणोत्तममध्यानां नीचानां चापसर्पणैः ६३
अत्रार्ये भवतः--
अप्रियनिवेदनाद्वा सहसा ह्यवधारितारिवचनस्य
शस्त्राक्षेपात् त्रासादावेगो नाम सम्भवति ६४
अप्रियनिवेदनाद्यो विषादभावाश्रयोऽनुभावोऽस्य
सहसारिदर्शनाच्चेत्प्रहरणपरिघट्टनैः कार्यः ६५
जडता नाम--सर्वकार्याप्रतिपत्तिः ।

इष्टानिष्टश्रवणदर्शनव्याध्यादिभिर्विभावैः
समुत्पद्यते ।
तामभिनयेदकथनाविभाषणतूष्णीम्भावाप्रतिभाऽनिमेषनिरीक्षणपर-
वशत्वादिभिरनुभावैः । अत्रार्या भवति--
इष्टं वाऽनिष्टं वा सुखदुःखे वा न वेत्ति यो मोहात्
तूष्णीकः परवशगो भवति स जडसंज्ञितः पुरुषः ६६
गर्वो नाम--ऐश्वर्यकुलरूपयौवनविद्याबलधनलाभादिभिर्विभावैः
समुत्पद्यते । तस्यासूयावज्ञाधर्षणानुत्तरदानासम्भाषणाङ्गावलो-
कनविभ्रमापहसनवाक्पारुष्यगुरुव्यतिक्रमणाधिक्षेपवचनविच्छेदा-
दिभिरनुभावैरभिनयः प्रयोक्तव्यः ।
अत्रार्या भवति--
विद्यावाप्ते रूपादैश्वर्यादथ घनागमाद्वापि
गर्वः खलु नीचानां दृष्टयङ्गविचारणैः कार्यः ६७
विषादो नाम--कार्यानिस्तरणदैवव्यापत्तिसमुत्थः ।
तमभिनयेत्सहायान्वेषणोपायचिन्तनोत्साहविघातवैमनस्यनिःश्वसि-
तादिभिरनुभावैरुत्तममध्यमानाम् । अधमानां तु
विपरिधावनालोकनमुखशोषणसृक्वपरिलेहनानिद्रानिःश्वसितध्या-
नादिभिरनुभावैः ।
आत्रार्याश्लोकौ--
कार्यानिस्तरणाद्वा चौर्याभिग्रहणराजदोषाद्वा
दैवादर्थविपत्तेर्भवति विषादः सदा पुंसाम् ६८
वैचित्र्योपायचिन्ताभ्यां कार्य उत्तममध्ययोः
निद्रानिःश्वसितध्यानैरधमानां तु योजयेत् ६९
औत्सुक्यं नाम--इष्टजनवियोगानुस्मरणोद्यानदर्शनादिभिर्विभावैः
समुत्पद्यते । तस्य
दीर्घनिःश्वसिताधोमुखविचिन्तननिद्रातन्द्रीशयनाभिलाषादिभिरनु-

भावैरभिनयः प्रयोक्तव्यः ।
अत्रार्या भवति--
इष्टजनस्य वियोगादौत्सुक्यं जायते ह्यनुस्मृत्या
चिन्तानिन्द्रातन्द्रीगात्रगुरुत्वैरनभियोऽस्य ७०
निद्रा नाम--
दौर्बल्यश्रमक्लममदालस्यचिन्ताऽत्याहारस्वभावादिभिर्विभावैः
समुत्पद्यते । तामभिनयेद्वदनगौरवशरीरावलोकननेत्रघूर्णनगात्रवि-
जृम्भणमान्द्योच्छ्वसितसन्नगात्रताऽक्षिनिमीलनादिभिरनुभावैः ।
अत्रार्ये भवतः--
आलस्याद्दौर्बल्यात्क्लमाच्छ्रमाच्चिन्तनात्स्वभावाच्च
रात्रौ जागरणादपि निद्रा पुरुषस्य सम्भवति ७१
तां मुखगौरवगात्रप्रतिलोलननयनमीलनजडत्वैः
जृम्भणगात्रविमर्दैरनुभावैरभिनयेत्प्राज्ञः ७२
अपस्मारो नाम--देवयक्ष
नागब्रह्मराक्षसभूतप्रेतपिशाचग्रहणानुस्मरणोच्छिष्टशून्यागारसेवना-
शुचिकालान्तरापरिपतनव्याध्यादिभिर्विभावैः समुत्पद्यते । तस्य
स्फुरितनिःश्वसितोत्कम्पितधावनपतनस्वेदस्तम्भनवदनफेनजिह्वाप-
रिलेहनादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।
अत्रार्ये भवतः--
भूतपिशाचग्रहणानुस्मरणोच्छिष्टशून्यगृहगमनात्
कालान्तरातिपातादशुचेश्च भवत्यपस्मारः ७३
सहसा भूमौ पतनं प्रवेपनं वदनफेनमोक्षश्च
निःसंज्ञस्योत्थानं रूपाण्येतान्यपस्मारे ७४
सुप्तं नाम--
निद्राभिभवविषयोपगमनमोहनक्षितितलशयनप्रसारणानुकर्षणादि-
भिर्विभावैः समुत्पद्यते निद्रासमुत्थम् । तदुच्छ्वसितसन्नगात्राक्षि-

निमीलनसर्वेन्द्रियसम्मोहनोत्स्वप्नायितादिभिरनुभावैरभिनयेत् ।
अत्रार्ये भवतः--
निद्राभिभवेन्द्रियोपरमणमोहनैर्भवेत्सुप्तम्
अक्षिनिमीलोच्छ्वसनैः स्वप्नायितजल्पितैः कार्यः ७५
सोच्छ्वासैर्निःश्वासैर्मन्दाक्षिनिमीलनेन निश्चेष्टः
सर्वेन्द्रियसम्मोहात्सुप्तं स्वप्नैश्च युञ्जीत ७६
विबोधो नाम--
आहारपरिणामनिद्राच्छेदस्वप्नान्ततीव्रशब्दस्पर्शश्रवणादिभिर्विभावैः समुत्पद्यते । तमभिनयेज्जृम्भणाक्षिपरिमर्दनशयनमोक्षणादिभिरनु-भावैः ।
अत्रार्या भवति--
आहारविपरिणामाच्छब्दस्पर्शादिभिश्च सम्भूतः
प्रतिबोधस्त्वभिनेयो जृम्भणवदनाक्षिपरिमर्दैः ७७
अमर्षो नाम--विद्यैश्वर्यशौर्यबलाधिकैरधिक्षिप्तस्यावमानितस्य वा समुत्पद्यते । तमभिनयेच्छिरःकम्पनप्रस्वेदनाधोमुखचिन्तनध्याना-ध्यवसायोपायसहाया-
न्वेषणादिभिरनुभावैः
अत्र श्लोकौ--
आक्षिप्तानां सभामध्ये विद्याशौर्यबलाधिकैः
नृणामुत्साहसयोगादमर्षो नाम जायते ७८
उत्साहाध्यवसायाभ्यामधोमुखविचिन्तनैः
शिरःप्रकम्पस्वेदाद्यैस्तं प्रयुञ्जीत पण्डितः ७९
अवहित्थं नाम--आकारप्रच्छादनात्मकम् । तच्च लज्जाभयापजयगौरव-
जैह्म्यादिभिर्विभावैः समुत्पद्यते । तस्यान्यथाकथनावलोकितक-थाभङ्गकृतकधैर्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्र श्लोको भवति
धाष्ट्र्यजैह्म्यादिसम्भूतमवहित्थं भयात्मकम्
तच्चागणनया कार्यं नातीवोत्तरभाषणात् ८०
उग्रता नाम--चौर्याभिग्रहणनृपापराधासत्प्रलापादिभिर्विभावैः
समुत्पद्यते । तां च वधबन्धनताडननिर्भर्त्सनादिभिरनुभावैरभि-
नयेत् ।
अत्रार्या भवति--
चौर्याभिग्रहणशान्नृपापराधादथोग्रता भवति
वधबन्धताडनादिभिरनुभावैरभिनयस्तस्याः ८१
मतिर्नाम--नानाशास्त्रविचिन्तनोहापोहादिभिर्विभावैः समुत्पद्यते ।
तामभिनयेच्छिष्योपदेशार्थविकल्पनसंशयच्छेदादिभिरनुभावैः ।
भवति चात्र श्लोकः--
नानाशास्त्रार्थबोधेन मतिः संजायते नृणाम्
शिष्योपदेशार्थकृतस्तस्यास्त्वभिनयो भवेत् ८२
व्याधिर्नाम--वातपित्तकफसन्निपातप्रभवः । तस्याः ज्वरादयो
विशेषाः ।
ज्वरस्तु द्विविधः सशीतः सदाहश्च । तत्र सशीतो नाम--
प्रवेपितसर्वाङ्गोत्कम्पननिकुञ्चनाग्न्यभिलाषरोमाञ्चहनुवलननासा-
विकूणनमुखशोषणपरिदेवितादिभिरनुभावैरभिनेयः । सदाहो
नाम--विक्षिप्ताङ्गकरचरणभूम्यभिलाषानुलेपन-
शीताभिलाषपरिदेवनमुखशोषोत्क्रुष्टादिभिरनुभावैः । ये चान्ये
व्याधयस्तेऽपि
खलु मुखविकूणनगात्रस्तम्भस्रस्ताक्षिनिःश्वसनस्तनितोत्क्रुष्टवपना-
दिभिरनुभावैरभिनेयाः । अत्र श्लोको भवति--
समासतस्तु व्याधीनां कर्तव्योऽभिनयो बुधैः
स्रस्ताङ्गगात्रविक्षेपैस्तथा मुखविकूणनैः ८३

उन्मादो नाम--इष्टजनवियोगविभवनाशाभिघातवातपित्तश्लेष्म-
प्रकोपादिभिर्विभावैरुत्पद्यते ।
तमनिमित्तहसितरुदितोत्क्रुष्टासम्बद्धप्रलापशयितोपविष्टोत्थितप्रधा-
वितनृत्तगीतपठितभस्मपांस्ववधूलनतृणनिर्माल्यकुचेलचीरघटक-
पालशरावाभरणधारणोपभोगैरनेकैश्चानवस्थितैश्चेष्टानुकरणादिभिरनु-
भावैरभिनयेत् । अत्रार्ये भवतः--
इष्टजनविभवनाशादभिघाताद्वातपित्तकफकोपात्
विविधाच्चित्तविकारादुन्मादो नाम सम्भवति ८४
अनिमित्तरुदितहसितोपविष्टगीतप्रधावितोत्क्रुष्टैः
अन्यैश्च विकारकृतैरुन्मादं सम्प्रयुञ्जीत ८५
मरणं नाम--व्याधिजमभिघातजञ्च । तत्र यदान्त्रयकृच्छलदोष-
वैषम्यगण्डपिटकज्वरविषूचिकादिभिरुत्पद्यते तद्व्याधिप्रभवम् ।
अभिघातजन्तु शस्त्राहिदंशविषपानश्वापदगजतुरगरथपशुयानपात-
विनाशप्रभवम् । एतयोरभिनयविशेषान्वक्ष्यामः--तत्र व्याधिजं
विषण्णगात्राव्यायताङ्गविचेष्टितनिमीलितनयनहिक्वाश्वासोपेतान-
वेक्षितपरिजनाव्यक्ताक्षरकथनादिभिरनुभावैरभिनयेत् ।
अत्र श्लोको भवति--
व्याधीनामेकभावो हि मरणाभिनयः स्मृतः
विषण्णगात्रैर्निश्चेष्टैरिन्द्रियैश्च विवर्जितः ८६
अभिघातजे तु नानाप्रकारा अभिनयविशेषाः
शस्त्रक्षताहिदष्टविषपीत-
गजादिपतितश्वापदहताः । यथा तत्र शस्त्रक्षते तावत्सहसा भूमि-
पतनवेपनस्फुरणादिभिरभिनयः प्रयोक्तव्यः ।
अहिदष्टविषपीतयोर्विषवेगो यथा--कार्श्यवेपथुविदाहहिक्काफेन-
स्कन्धभङ्गजडतामरणानीत्यष्टौ विषवेगाः
अत्र श्लोकौ भवतः--

कार्श्यं तु प्रथमे वेगे द्वितीये वेपथुर्भवेत्
दाहं तृतीये हिक्कां च चतुर्थे सम्प्रयोजयेत्  ८७
फेनञ्च पञ्चमे कुर्यात्षष्ठे स्कन्धस्य भञ्जनम्
जडतां सप्तमे कुर्यादष्टमे मरणं भवेत्  ८८
अत्रार्या भवति--
श्वापदगजतुरगरथोद्भवं तु पशुयानपतनजं वाऽपि
शस्त्रक्षतवत्कुर्यादनवेक्षितगात्रसञ्चारम्  ८९
इत्येवं मरणं ज्ञेयं नानावस्थान्तरात्मकम्
प्रयोक्तव्यं बुधैः सम्यग्यथा भावाङ्गचेष्टितैः  ९०
त्रासो नाम--
विद्युदुल्काशनिपातनिर्घाताम्बुधरमहासत्त्वपशुरवादिभिर्विभावै-रुत्पद्यते । तमभिनयेत्संक्षिप्ताङ्गोत्कम्पनवेपथुस्तम्भरोमाञ्चगद्गद-प्रलापादिभिरनुभावैः ।
अत्र श्लोको भवति--
महाभैरवनादाद्यैस्त्रासः समुपजायते
स्त्रस्ताङ्गाक्षिनिमेषैश्च तस्य त्वभिनयो भवेत्  ९१
वितर्को नाम--सन्देहविमर्शविप्रतिपत्त्यादिभिर्विभावैरुत्पद्यते । तमभिनयेद्विविधविचारितप्रश्नसम्प्रधारणमन्त्रसंगूहनादिभिरनुभावैः । अत्र श्लोको भवति--
विचारणादिसम्भूतः सन्देहातिशयात्मकः
वितर्कः सोऽभिनेयस्तु शिरोभ्रूक्षेपकम्पनैः  ९२
एवमेते त्रयस्त्रिंशद्व्यभिचारिणो भावा देशकालावस्थानुरूप्येणात्मगतपरगतमध्यस्था उत्तममध्यमाधमैः स्त्रीपुंसैः स्वप्रयोगवशादुपपाद्या इति ।
त्रयस्त्रिंशदिमे भावा विज्ञेया व्यभिचारिणः
सात्त्विकांस्तु पुनर्भावान्प्रवक्ष्याम्यनुपूर्वशः  ९३

अत्राह--किमन्ये भावाः सत्त्वेन विनाऽभिनीयन्ते यस्मादुच्यन्ते एते सात्त्विका इति ।
अत्रोच्यते--इह हि सत्त्वं नाम मनःप्रभवम् ।
तच्च समाहितमनस्त्वादुच्यते । मनसः समाधौ सत्त्वनिष्पत्तिर्भवति । तस्य च योऽसौ स्वभावो रोमाञ्चाश्रुवैवर्ण्यादिलक्षणो यथाभा-वोपगतः स न शक्योऽन्यमनसा कर्तुमिति । लोकस्वभावानु-करणत्वाच्च नाटयस्य सत्त्वमीप्सितम् । को दृष्टान्तः--इह हि नाटयधर्मिप्रवृत्ताः सुखदुःखकृता भावास्तथा सत्त्वविशुद्धाः कार्याः यथा सरूपा भवन्ति ।
तत्र दुःखं नाम रोदनात्मकं तत्कथमदुःखितेन सुखं च प्रहर्षात्मकमसुखितेन वाभिनेयम् । एतदेवास्य सत्त्वं यत् दुःखितेन सुखितेन वाऽश्रुरोमाञ्चौ दर्शयितव्यौ इति कृत्वा सात्त्विका भावा इत्यभिव्याख्याताः ।
त इमे--
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदोऽथ वेपथुः
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ९४
अत्रार्याः । तत्र--
क्रोधभयहर्षलज्जादुःखश्रमरोगतापघातेभ्यः
व्यायामक्लमधर्मैः स्वेदः सम्पीडनाच्चैव ९५
हर्षभयशोकविस्मयविषादरोषादिसम्भवः स्तम्भः
शीताभयहर्षरोषस्पर्शजरारोगजः कम्पः ९६
आनन्दामर्षाभ्यां धूमाञ्जनजृम्भणाद्भयाच्छोकात्
अनिमेषप्रेक्षणतः शीताद्रोगाद्भवेदश्रु ९७
शीतक्रोधभयश्रमरोगक्लमतापजं च वैवर्ण्यम्
स्पर्शभयशीतहर्षात् क्रोधाद्रोगाच्च रोमाञ्चः ९८
स्वरभेदोभयहर्षक्रोधजरारौक्ष्यरोगमदजनितः

श्रममूर्छामदनिद्राभिघातमोहादिभिः प्रलयः ९९
एवमेते बधैर्ज्ञेया भावा ह्यष्टौ तु सात्त्विकाः
कर्म चैषां प्रवक्ष्यामि रसभावानुभावकम् १००
निःसंज्ञो निष्प्रकम्पश्च स्थितः शून्यजडाकृतिः
स्कन्नगात्रतया चैव स्तम्भं त्वभिनयेद्बुधः १०१
व्यजनग्रहणाच्चापि स्वेदापनयनेन च
स्वेदस्याभिनयो योज्यस्तथा वाताभिलाषतः १०२
मुहुः कण्टकितत्वेन तथोल्लुकसनेन च
पुलकेन च रोमाञ्च गात्रस्पर्शेन दर्शयेत् १०३
स्वरभेदोऽभिनेतव्यो भिन्नगद्गदनिस्वनैः
वेपनात्स्फुरणात्कम्पाद्वेपथुं सम्प्रदर्शयेत् १०४
मुखवर्णपरावृत्त्या नाडीपीडनयोगतः
वैवर्ण्यमभिनेतव्यं प्रयत्नात्तद्धि दुष्करम् १०५
बाष्पाम्बुप्लुतनेत्रत्वान्नेत्रसम्मार्जनेन च
मुहुरश्रुकणापातैरास्त्रं त्वभिनयेबुधः १०६
निश्चेष्टो निष्प्रकम्पत्वादव्यक्तश्वसितादपि
महीनिपातनाच्चापि प्रलयाभिनयो भवेत् १०७
एकोनपञ्चाशदिमे यथाव-
द्भावास्त्र्यवस्था गदिता मयेह
भूयश्च ये यत्र रसे नियोज्या-
स्तान् श्रोतुमर्हन्ति च विप्रमुख्याः १०८
अत्र श्लोकाः--
शङ्काव्याधिस्तथाग्लानिशिचिन्तासूया भयं तथा
विस्मयश्च वितर्कश्च स्तम्भश्चपलता तथा ॥
रोमाञ्चहर्षौ निद्रा च तथोन्मादमदावपि
स्वेदश्चैवावहित्थं च प्रलयो वेपथुस्तथा ॥

विषादश्रमनिर्वेदा गर्वावेगौ धृतिः स्मृतिः
मतिर्मोहो विबोधश्च सुप्तमौत्सुक्यवर्जिते
क्रोधामर्षौ च हासश्च शोकोऽपस्मार एव च
दैन्यं च मरणं चैव रतिरुत्साहसंयुता
त्रासवैवर्ण्यरुदितैः स्वरभेदः शमोऽपि च
जडता च तथा षट् च चत्वारिंशत्प्रकीर्तिताः ॥
आलस्यौग्र्यजुगुप्साख्यैरेवं भावैस्तु वर्जिताः
उद्भावयन्ति शृङ्गारं सर्वे भावाः स्वसंज्ञया १०९
यथाऽवसरमेते हि स्थायिसञ्चारिसत्त्वजाः
उद्दीपयन्ति शृङ्गारं रसमासाद्य संज्ञितम् ॥
ग्लानिः शङ्का ह्यसूया च श्रमश्चपलता तथा
सुप्तं निद्राबहित्थं च हास्ये भावाः प्रकीर्तिताः ११०
निर्वेदश्चैव चिन्ता च दैन्यं ग्लान्यास्रमेव च
जडता मरणं चैव व्याधिश्च करुणे स्मृताः १११
गर्वोऽसूया मदोत्साहावावेगोऽमर्ष एव च
क्रोधश्चपलतौग्र्यं च विज्ञेया रौद्रसम्भवाः ११२
असम्मोहस्तथोत्साह आवेगो हर्ष एव च
मतिश्चैव तथोग्रत्वममर्षो मद एव च ११३
रोमाञ्चः स्वरमेदश्च क्रोधोऽसूया धृतिस्तथा
गर्वश्चैव वितर्कश्च वीरे भावा भवन्ति हि ११४
स्वेदश्च वेपथुश्चैव रोमाञ्चो गद्गदस्तथा
त्रासश्च मरणञ्चैव वैवर्ण्यं च भयानके ११५
अपस्मारस्तथोन्मादो विषादो मद एव च
मृत्युर्व्याधिर्भयं चैव भावा बीभत्ससंश्रयाः ११६
स्तम्भः स्वेदश्च मोहश्च रोमाञ्चो विस्मयस्तथा
आवेगो जडता हर्षो मूर्च्छा चैवाद्भुताश्रयाः ११७

ये त्वेते सात्त्विका भावा नानाभिनयसंश्रिताः
रसेष्वेतेषु सर्वे ते ज्ञेया नाट्यप्रयोक्तृभिः  ११८
न ह्येकरसजं काव्यं किञ्चिदस्ति प्रयोगतः
भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव च  ११९
बहूनां समवेतानां रूपं यस्य भवेद्बहु
स मन्तव्यो रसः स्थायी शेषाः संचारिणो मताः
दीपयन्तः प्रवर्तन्ते ये पुनः स्थायिनं रसम्
ते तु संचारिणो ज्ञेयास्ते हि स्थायित्वमागताः  ॥
विभावानुभावयुतो ह्यङ्गवस्तुसमाश्रयः
संचारिभिस्तु संयुक्तः स्थाय्येव तु रसो भवेत्  ॥
स्थायी सत्त्वातिरेकेण प्रयोक्तव्यः प्रयोक्तृभिः
सञ्चार्याकारमात्रेण स्थायी यस्मादवस्थितः  ॥
ये त्वेते सात्त्विका भावा नानाभिनययोजिताः
रसेष्वेतेषु सर्वेषु ते ज्ञेया नाट्यकोविदैः
न ह्येकरसजं काव्यं नैकभावैकवृत्तिकम्
विमर्दे रागमायाति प्रयुक्तं हि प्रयत्नतः  ॥
भावा वाऽपि रसा वाऽपि प्रवृत्तिर्वृत्तिरेव वा
बीभत्साद्भुतशान्तानां त्रैविध्यं नात्र कथ्यते  ॥
षष्णां रसानां त्रैविध्यं नानाभावरसान्वितम्
सत्त्वप्रयोजितो ह्यर्थः प्रयोगोऽत्र विराजते  ॥
विदित्वा हि विराजन्ते लोके चित्रं हि दुर्लभम्
नानाभावार्थसंपन्नाः स्थायिसत्त्वाभिचारिणः
पुष्पावकीर्णाः कर्तव्याः काव्येषु हि रसा बुधैः  १२०
एवं रसाश्च भावाश्च त्र्यवस्था नाटाके स्मृताः
य एवमेताञ्जानाति स गच्छेत्सिद्धिमुत्तमाम्  १२१

इति श्रीभारतीये नाट्यशास्त्रे भावव्यञ्जको नाम सप्तमोऽध्यायः

## अष्टमोऽध्यायः

ऋषय ऊचुः
भावानां च रसानां च समुत्थानं यथाक्रमम्
त्वत्प्रसादाच्छ्रुतं सर्वमिच्छामो वेदितुं पुनः १
नाट्ये कतिविधः कार्यः तज्ज्ञैरभिनयक्रमः
कथं वाभिनयो ह्येष कतिभेदस्तु कीर्तितः २
सर्वमेतद्यथातत्त्वं कथयस्व महामुने
यो यथाभिनयो यस्मिन् योक्तव्यः सिद्धिमिच्छता ३
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः
प्रत्युवाच पुनर्वाक्यं चतुरोऽभिनयान् प्रति ४
अहं वः कथयिष्यामि निखिलेन तपोधनाः
यस्मादभिनयो ह्येष विधिवत् समुदाहृतः ५
अत्र श्लोकौ
अभिपूर्वस्तु णीञ् धातुराभिमुख्यार्थनिर्णये
यस्मात्पदार्थान्नयति तस्मादभिनयः स्मृतः ६
विभावयति यस्माच्च नानार्थान् हि प्रयोगतः
शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ७
चतुर्विधश्चैव भवेन्नाट्यस्माभिनयो द्विजाः
अनेकभेदवाहुयं नाट्यं ह्यस्मिन् प्रतिष्ठितम् ८
आङ्गिको वाचिकश्चैव ह्याहार्यः सात्त्विकस्तथा
ज्ञेयस्त्वभिनयो विप्राः चतुर्धा परिकल्पितः ९
सात्त्विकः पूर्वमुक्तस्तु भावैश्च सहितो मया
अङ्गाभिनयमेवादौ गदतो मे निबोधत १०
त्रिविधस्त्वाङ्गिको ज्ञेयः शारीरो मुखजस्तथा
तथा चेष्टाकृतश्चैव शाखाङ्गोपाङ्गसंयुतः ११
शिरोहस्तकटीवक्षः पार्श्वपादसमन्वितः

अङ्गप्रत्यङ्गसंयुक्तः षडङ्गो नाट्यसंग्रहः १२
तस्य शिरोहस्तोरःपार्श्वकटीपादतः षडङ्गानि
नेत्रभ्रूनासाधरकपोलचिवुकान्युपाङ्गानि १३
अस्य शाखा च नृत्तं च तथैवाङ्कुर एव च
वस्तून्यभिनयस्येह विज्ञेयानि प्रयोक्तृभिः १४
आङ्गिकस्तु भवेच्छाखा ह्यङ्कुरः सूचना भवेत्
अङ्गहारविनिष्पन्नं नृत्तं तु करणाश्रयम् १५
मुखजेऽभिनये विप्रा नानाभावरसाश्रये
शिरसः प्रथमं कर्म गदतो मे निबोधत १६
आकम्पितं कम्पितं च धूतं विधुतमेव च
परिवाहितमाधूतमवधूतं तथाञ्चितम् १७
निहञ्चितं परावृत्तमुत्क्षिप्तं चाप्यधोगतम्
लोलितं चैव विज्ञेयं त्रयोदशविधं शिरः १८
शनैराकम्पनादूर्ध्वमधश्चाकम्पितं भवेत्
द्रुतं तदेव बहुशः कम्पितं कम्पितं शिरः १९
ऋजुस्थितस्य चोर्ध्वाधः क्षेपादाकम्पितं भवेत्
बहुशश्चलितं यच्च तत्कम्पितमिहोच्यते २०
संज्ञोपदेशपृच्छासु स्वभावाभाषणे तथा
निर्देशा वाहने चैव भवेदाकम्पितं शिरः २१
रोषे वितर्के विज्ञाने प्रतिज्ञानेऽथ तर्जने
प्रश्नातिशयवाक्येषु शिरः कम्पितमिष्यते २२
शिरसो रेचनं यत्तु शनैस्तद्धुतमिष्यते
दुतमारेचनादेतद्विधुतं तु भवेच्छिरः २३
अनीप्सिते विषादे च विस्मये प्रत्ययं तथा
पार्श्वावलोकने शून्ये प्रतिषेधे धुतं शिरः २४
शीतग्रस्ते भयार्त्ते च त्रासिते ज्वरिते तथा

पीतमात्रे तथा मद्ये विधुतं तु भवेच्छिरः २५
पर्यायशः पार्श्वगतं शिरः स्यात्परिवाहितम्
आधूतमुच्यते तिर्यक् सकृदुद्वाहितं तु यत् २६
साधने विस्मये हर्षे स्मिते चामर्षिते तथा
विचारे विहृते चैव लीलायां परिवाहितम् २७
गर्वेच्छादर्शने चैव पार्श्वस्थोर्ध्वानिरीक्षणे
आधुतं तु शिरो ज्ञेयमात्मसम्भावनादिषु २८
यदधः सकृदाक्षिप्तमवधूतं तु तच्छिरः
सन्देशावाहनालापसंज्ञादिषु नदिष्यते २९
किञ्चित् पार्श्वनतग्रीवं शिरो विज्ञेयमञ्चितम्
व्याधिते मूर्च्छिते मत्ते चिन्तायां हनुधारणं ३०
उत्क्षिप्तांसावसक्तं यत्कुञ्चितभ्रूलतं शिरः
निहञ्चितं तु विज्ञेयं स्त्रीणामेतत्प्रयोजयेत् ३१
गर्वे माने विलासे च बिव्वोके किलकिञ्चिते
मोट्टायिते कुट्टमिते स्तम्भमाने निहञ्चितम् ३२
परावृत्तानुकरणात् परावृत्तमिहोच्यते
तत् स्यान्मुखापहरणे पृष्ठतः प्रेक्षणादिषु ३३
उत्क्षिप्तं चापि विज्ञेयमुन्मुखावस्थितं शिरः
प्रांशुदिव्यास्त्रयोगेषु स्यादुत्क्षिप्तं प्रयोगतः ३४
अधोमुखं स्थितं चापि बुधाः प्राहुरधोगतम्
लज्जायां च प्रणामे च दुःखे चाधोगतं शिरः ३५
सर्वतो भ्रमणाच्चैव शिरः स्यात् परिलोलितम्
मूर्च्छाव्याधिमदावेशग्रहनिद्रादिषु स्मृतम् ३६
ऋजुस्वभावसंस्थानं प्राकृतं तु स्वभावजम्
मंगल्याध्ययनध्यानस्वभावजयकर्मसु ३७
एभ्योऽन्ये बहवो भेदा लोकाभिनयसंश्रिताः

ते च लोकस्वभावेन प्रयोक्तव्याः प्रयोक्तृभिः ३८
त्रयोदशविधं ह्येतच्छिरःकर्म मयोदितम्
अतः परं प्रवक्ष्यामि दृष्टीनामिह लक्षणम् ३९
कान्ता भयानका हास्या करुणा चाद्भुता तथा
रौद्री वीरा च बीभत्सा विज्ञेया रसदृष्टयः ४०
स्निग्धा हृष्टा च दीना च क्रुद्धा दृप्ता भयान्विता
जुगुप्सिता विस्मिता च स्थायिभावेषु दृष्टयः ४१
शून्या च मलिना चैव श्रान्ता लज्जान्विता तथा
ग्लाना च शङ्किता चैव विषण्णा मुकुला तथा ४२
कुञ्चिता चाभितप्ता च जिह्मा सललिता तथा
वितर्कितार्धमुकुला विभ्रान्ता विप्लुता तथा ४३
आकेकरा विकोशा च त्रस्ता च मदिरा तथा
षट् त्रिंशद् दृष्टयो ह्येता तासु नाट्यं प्रतिष्ठितम् ४४
अस्य दृष्टिविधानस्य नानाभावरसाश्रयम्
लक्षणं सम्प्रवक्ष्यामि यथाकर्म प्रयोगतः ४५
हर्षप्रसादजनिता कान्तात्यर्थं समन्यथा
सभ्रूक्षेपकटाक्षा च शृंङ्गारे दृष्टिरिष्यते ४६
प्रोद्वृत्तनिष्टब्धपुटा स्फुरदुद्वृत्ततारका
दृष्टिर्भयानकात्यर्थं भीता ज्ञेया भयानके ४७
क्रमादाकुञ्चितपुटा विभ्रान्ताकुलतारका
हास्या दृष्टिस्तु कर्त्तव्या कुहकाभिनयं प्रति ४८
पतितोर्ध्वपुटा साश्रा मन्युमन्थरतारका
नासाग्रानुगता दृष्टिः करुणा करुणे रसे ४९
या त्वाकुञ्चितपक्ष्माग्रा साश्चर्योद्धत्ततारका
सौम्या विकसितान्ता च साद्भुता दृष्टिरद्भुते ५०
क्रूरा रूक्षारुणोद्वृत्तनिष्टब्धपुटतारका

भ्रुकुटीकुटिला दृष्टिः रोद्रे रौद्री रसा स्मृता ५१
दीप्ता विकसिता ज्ञुब्धा गम्भीरा समतारका
उत्फुल्लमध्या दृष्टिस्तु वीरा वीररसाश्रया ५२
निकुञ्चितपुटापाङ्गा घूर्णोपप्लुततारका
संश्लिष्टस्थिरपद्दमा च वीभत्सा दृष्टिरिष्यते ५३
नासाग्रसक्ता निमिषा तथाधोभागचारिणी
आकेकरपुटा शान्ते शान्ता दृष्टिर्भवेदसौ ५४
रसजा दृष्टो ह्येता विज्ञेया लन्नणान्विता
अतः परं प्रवन्दयामि स्थायिभावसमाश्रयाः ५५
व्याकोशमध्या मधुरा स्थिततारभिलाषिणी
सानन्दाश्रुप्लुता दृष्टिः स्निग्धेयं रतिभावजा ५६
चला हसितगर्भा च विशत्तारानिमेषिणी
किञ्चिदाकुञ्चिता दृष्टिः हृष्टा हासे प्रकीर्तिता ५७
अवस्नस्तोत्तरपुटा किञ्चित्संरब्धतारका
मन्दसञ्चारिणी दीना ता शोके दृष्टिरिष्यते ५८
रून्ना स्थिरोद्धत्तपुटा निष्टब्धोद्धत्ततारका
कुटिला भ्रुकुटिर्दृष्टिः क्रुद्धा क्रोधे विधीयते ५९
संस्थिते तारके यस्याः स्थिता विकसिता तथा
सत्त्वमुद्गिरती दृप्ता दृष्टिरुत्साहसम्भवा ६०
विस्फारितोभयपुटा भयकम्पिततारका
निष्क्रान्तमध्या दृष्टिस्तु भयभावे भयान्विता ६१
संकोचितपुटाध्यामा दृष्टिर्मीलिततारका
पद्दमोद्देशात् समुद्विग्ना जुगुप्सायां जुगुप्सिता ६२
भृशमुद्वृत्ततारा च नष्टोभयपुटान्विता
समा विकसिता दृष्टिर्विस्मिता विस्मये स्मृता ६३
स्थायिभावाश्रया ह्येता विज्ञेयाः दृष्टयो बुधैः

संचारिणीनां दृष्टीनां संप्रवक्ष्यामि लक्षणम्  ६४
समतारा समपुटा निष्कम्पा शून्यदर्शना
बाह्यार्थाग्राहिणी ध्यामा शून्या दृष्टिः प्रकीर्तिता  ६५
प्रस्पन्दमानपक्ष्माग्रा नात्यर्थमुकुलैः पुटैः
मलिनान्ता च मलिना दृष्टिर्विस्मिततारका  ६६
श्रमप्रम्लापितपुटा क्षामा कुञ्चितलोचना
सन्ना पतिततारा च श्रान्ता दृष्टिः प्रकीर्तिता  ६७
किञ्चिदञ्चितपक्ष्माग्रा पतितोर्ध्वपुटा ह्रिया
त्रपाधोगततारा च दृष्टिर्लज्जान्विता तु सा  ६८
म्लानभ्रुपुटपक्ष्मा या शिथिला मन्दचारिणी
क्रमप्रवृष्टतारा च ग्लाना दृष्टिस्तु सा स्मृता  ६९
किञ्चिच्चला स्थिरा किञ्चिदुद्गता तिर्यगायता
गूढा चकिततारा च शङ्किता दृष्टिरिष्यते  ७०
विषादविस्तीर्णपुटा पर्यस्तान्ता निमेषिणी
किञ्चिन्निष्टब्धतारा च कार्या दृष्टिर्विषादिनी  ७१
स्फुरदाश्लिष्टपक्ष्माग्रा मुकुलोर्ध्वपुटाञ्चिता
सुखोन्मीलिततारा च मुकुला दृष्टिरिष्यते  ७२
आनिकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा
संनिकुञ्चिततारा च कुञ्चिता दृष्टिरिष्यते  ७३
मन्दायमानतारा या पुटैः प्रचलितैस्तथा
सन्तापोपप्लुता दृष्टिरभितप्ता तु सव्यथा  ७४
लम्बिताकुञ्चितपुटा शनैस्तिर्यङ्गिनरीक्षिणी
निगूढा गुढतारा च जिह्मा दृष्टिरुदाहृता  ७५
मधुराकुञ्चितान्ता च सभ्रूक्षेपा च सस्मिता
सममन्थविकारा च दृष्टिः सा ललिता स्मृता  ७६
वितर्कोद्वर्तितपुटा तथैवोत्फुल्लतारका

अधोगतविचारा च दृष्टिरेषा वितर्किता ७७
अर्धव्याकोशपक्ष्मा च ह्लादार्धमुकुलैः पुटैः
स्मितार्धमुकुला दृष्टिः किञ्चिल्लुलिततारका ७८
अन्वस्थिततारा च विभ्रान्ताकुलदर्शना
विस्तीर्णोत्फुल्लमध्या च विभ्रान्ता दृष्टिरुच्यते ७९
पुटौ प्रस्फुरितौ यस्य निष्टब्धौ पतितौ पुनः
विप्लुतोद्वृत्ततारा च दृष्टिरेषा तु विप्लुता ८०
आकुञ्चितपुटापाङ्गा सङ्गतार्धनिमेषिणी
मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता ८१
विकोशितोभयपुटा प्रोत्फुल्ला चानिमेषिणी
अनवस्थितसंचारा विकोशा दृष्टिरुच्यते ८२
त्रासोद्वृत्तपुटा या तु तथोत्कम्पिततारका
सन्त्रासोत्फुल्लमध्या च त्रस्ता दृष्टिरुदाहृता ८३
आघूर्णमानमध्या या क्षामान्ताञ्चितलोचना
दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ८४
किञ्चिदाकुञ्चितपुटा ह्यनवस्थिततारका
तथा चलितपक्ष्मा च दृष्टिर्मध्यमदे भवेत् ८५
सनिमेषानिमेषा च किञ्चिद् दर्शिततारका
अधोभागचरी दृष्टिरधमे तु मदे स्मृता ८६
इत्येवं लक्षिता ह्येता षट्त्रिंशद् दृष्टयो मया
रसजा सहजाश्चासां विनियोगं निवोधत ८७
रसजास्तु रसेष्वेव स्थायिषु स्थायिदृष्टयः
शृणुत व्यभिचारिरायः सञ्चारिषु यथास्थिताः ८८
शून्या दृष्टिस्तु चिन्तायां स्तम्भे चापि प्रकीर्तिता
निर्वेदे चापि मलिना वैवर्ण्ये च विधीयते ८९
श्रान्ता श्रमार्ते स्वेदे च लज्जायां ललिता तथा

अपस्मारे तथा व्याधौ ग्लान्यां ग्लाना विधीयते ९०
शङ्कायां शङ्किता ज्ञेया विषादार्थे विषादिनी
निद्रास्वप्नसुखार्थेषु मुकला दृष्टिरिष्यते ९१
कुञ्चितासूयितानिष्टदुष्प्रेक्षाक्षिव्यथासु च
अभितप्ता च निर्वेदे ह्यभिघाताभितापयोः ९२
जिह्मा दृष्टिरसूयायां जडतालस्ययोस्तथा
धृतौ हर्षे सललिता स्मृतौ तर्के च तर्किता ९३
आह्लादिष्वर्धमुकुला गन्धस्पर्शसुखादिषु
विभ्रान्ता दृष्टिरावेगे सम्भ्रमे विभ्रमे तथा ९४
विप्लुता चपलोन्माददुःखार्तिमरणादिषु
आकेकरा दुरालोके विच्छेदप्रेक्षितेषु च ९५
विबोधगर्वामर्षौ ग्र्यमतिषु स्याद्विकोशिता
त्रस्ता त्रासे भवेद् दृष्टिर्मदिरा च मदेष्विति ९६
षट्त्रिंशद् दृष्टयो ह्येता यथावत् समुदाहृताः
रसजानां तु दृष्टीनां भावजानां तथैव च ९७
तारापुटभ्रुवां कर्म गदतो मे निबोधत
भ्रमणं वलनं पातश्चलनं सम्प्रवेशनम् ९८
विवर्तनं समुद्वृत्तं निष्कामः प्राकृतं तथा
पुटान्तर्मण्डलावृत्तिस्तारयोर्भ्रमणं स्मृतम् ९९
वलनं गमनं त्र्यस्त्रं पातनं स्त्रस्तता तथा
चलनं कम्पनं ज्ञेयं प्रवेशोऽन्तःप्रवेशनम् १००
विवर्तनं कटाक्षस्तु समुद्वृत्तं समुन्नतिः
निष्क्रामो निर्गमः प्रोक्तः प्राकृतं तु स्वभावजम् १०१
अथैषां रसभावेषु विनियोगं निबोधत
भ्रमणं चलनोद्वृत्ते निष्क्रामो वीररौद्रयोः १०२
निष्क्रामणं संवलनं कर्तव्यं तु भयानके

हास्यबीभत्सयोश्चापि प्रवेशनमिहेष्यते १०३
पातनं करुणे कार्य निष्क्रामणमथाद्भुते
प्राकृतं शेषभावेषु शृङ्गारे च विवर्तितम् १०४
स्वभावसिद्धमेवैतत् कर्म लोकक्रियाश्रयम्
एवं रसेषु भावेषु ताराकर्माणि योजयेत् १०५
अथाऽत्रैव प्रवक्ष्यामि प्रकारान् दर्शनस्य तु
समं साच्यनुवृत्ते च ह्यालोकितविलोकिते १०६
प्रलोकितोल्लोकिते चाप्यवलोकितमेव च
समतारं च सौम्यं च यद्दृष्टं तत्समं स्मृतम् १०७
पक्ष्मान्तर्गततारं च त्र्यस्त्रं साचीकृतं तु तत्
रूपनिर्वर्णना युक्तमनुवृत्तमिति स्मृतम् १०८
सहसा दर्शनं यत्स्यात्तदालोकितमुच्यते
विलोकितं पृष्टतस्तु पार्श्वाभ्यां तु प्रलोकितम् १०९
ऊर्ध्वमुल्लोकितं ज्ञेयमवलोकितमप्यधः
इत्येषु दर्शनविधिः सर्वभावरसाश्रयः ११०
ताराकृतोऽस्यानुगतं पुटकर्म निबोधत
उन्मेषश्च निमेषश्च प्रसृतं कुञ्चितं समम् १११
विवर्तितं स स्फुरितं पिहितं सविताडितम्
विश्लेषः पुटयोर्यस्तु स तून्मेषः प्रकीर्तितः ११२
समागमो निमेषः स्यादायामः प्रसृतं भवेत्
आकुञ्चितं कुञ्चितं स्यात्समं स्वाभाविकं स्मृतम् ११३
विवर्तितं समुद्वृत्तं प्रोक्तमाहतं तु विताडितम् ११४
अथैषां रसभावेषु विनियोगं निबोधत
क्रोधे विवर्तितं कार्यो निमेषोन्मेषणैः सह ११५
विस्मयार्थेषु हर्षे च वीरे च प्रसृतं स्मृतम्
अनिष्टदर्शने गन्धे रसे स्पर्शे च कुञ्चितम् ११६

शृङ्गारे च समं कार्यमीर्ष्यासु स्फुरितं तथा
सुप्तमूर्च्छितवातोष्णधूमवर्षाञ्जनार्तिषु ११७
नेत्ररोगे च पिहितमभिघाते विताडितम्
इत्येवं रसभावेषु तारकापुटयोर्विधिः ११८
कार्याऽनुगतमस्यैव भ्रुवोः कर्म निबोधत
उत्क्षेपः पातनश्चैव भ्रुकुटी चुतुरं भ्रुवोः ११९
कुञ्चितं रेचितं चैव सहजं चेति सप्तधा
भ्रुवोरुन्नतिरुत्क्षेपः सममेकैकशोऽपि वा १२०
अनेनैव क्रमेणैव पातनं स्यादधोमुखम्
भ्रुवोर्मूलसमुत्क्षेपात् भ्रुकुटी परिकीर्तिता १२१
चतुरं किञ्चिदुच्छ्वासान्मधुरायतयाभ्रुवोः
एकस्या उभयोर्वापि मृदुभङ्गस्तु कुञ्चितम् १२२
एकस्या एव ललितादुत्क्षेपाद्रेचितं भ्रुवः
सहजातं तु सहजं कर्म स्वाभाविकं स्मृतम् १२३
अथैषां संप्रवक्ष्यामि रसभावप्रयोजनम्
कोपे वितर्के हेलायां लीलादौ सहजे तथा १२४
श्रवणे दर्शने चैव भ्रुवमेकां समुत्क्षिपेत्
उत्क्षेपो विस्मये हर्षे रोषे चैव द्वयोरपि १२५
आसूयितजुगुप्सायां हास्ये घ्राणे च पातनम्
क्रोधस्थानेषु दीप्तेषु योजयेत् भ्रुकुटीं बुधः १२६
शृङ्गारे ललिते सौम्ये सुखे स्पर्शे प्रबोधने
एवं विधेषु भावेषु चतुरं तु प्रयोजयेत् १२७
स्त्रीपुरुषयोश्च संलापे नानावस्थान्तरात्मके
मोट्टायिते कुट्टमिते विलासे किलकिञ्चिते १२८
निकुञ्चितं तु कर्तव्यं नृत्ते योज्यं तु रेचितम्
अनाविद्धेषु भावेषु विद्यात्स्वाभाविकं बुधः १२९

इत्येवं तु भ्रुयः प्रोक्तं नासाकर्म निबोधत
नता मन्दा विकृष्टा च सोच्छ्वासा च विकूणिता १३०
स्वाभाविका चेति बुधैः षड्विधा नासिका स्मृता
नता मुहुःश्लिष्टपुटा मन्दा तु निभृता स्मृता १३१
विकृष्टोत्फुल्लितपुटा सोच्छ्वासा कृष्टमारुता
विकूर्णिता संकुचिता समा स्वाभाविका स्मृता १३२
नासिकालक्षणं ह्येतत् विनियोगं निबोधत
मन्दोत्कम्पसमायुक्ते नारीणामनुरोधने १३३
निःश्वासे च नता कार्या नासिका नाटययोक्तृभिः
विच्छिन्नमन्दरुदिते सोच्छ्वासे च नता स्मृता १३४
निर्वेगौत्सुक्यचिन्तासु मन्दा शोके च योजयेत्
तीव्रगन्धे विकृष्टां तौ रौद्रे वीरे तथैव च १३५
इष्टघ्राणे तयोच्छ्वासे दीर्घोच्छ्वसां प्रयोजयेत्
विकूर्णिता च कर्त्तव्या जुगुप्सायामसूयतादिषु १३६
कार्या शेषु भावेषु तज्ज्ञैः स्वाभाविका तथा
क्षामं फुल्लं च घूर्णं च कम्पितं कुञ्चितं समम् १३७
षड्विधं गण्डमुद्दिष्टं तस्य लक्षणमुच्यते
क्षामं चावनतं ज्ञेयं फुल्लं विकसितं भवेत् १३८
विततं घूर्णमत्रोक्तं कम्पितं स्फुरितं भवेत्
स्यात्कुञ्चितं संकुञ्चितं समं प्राकृतमुच्यते १३९
गण्डयोर्लक्षणं प्रोक्तं विनियोगं नोबिधत
क्षामं दुःखेषु कर्तव्यं प्रहर्षे फुल्लमेव च १४०
पूर्णमुत्साहगर्वेषु रोषहर्षेषु कम्पितम्
कुञ्चितं च सरोमाञ्चं स्पर्शे शीते भये ज्वरे १४१
प्राकृतं शेषभावेषु गण्डकर्म भवेदिति
विवर्तनं कम्पनं च विसर्गो विनिगूहनम् १४२

सन्दष्टकं समुद्गं च षट् कर्माण्यधरस्य तु
विकूर्णितं विवर्तस्तु वेपनं कम्पनं स्मृतम् १४३
विनिष्क्रामो विसर्गस्तु प्रवेशो विनिगूहनम्
सन्दष्टकं द्विजैर्दष्टं समुद्गः सहजोन्नति १४४
इत्योष्ठलक्षणं प्रोक्तं विनियोगं निबोधत
असूयावेदनावज्ञाभयादिषु विवर्तनम् १४५
कम्पनं वेपना शीतभयरोषजवादिषु हास्या
स्त्रीणां विलासे विव्वोके विसर्गो रञ्जने तथा १४६
विनिगूहनमायासे सन्दष्टं क्रोधकर्मसु
समुद्गस्त्वनुकम्पायां चुम्बने चाभिनन्दने १४७
इत्योष्ठकर्माण्युक्तानि चिबुकस्य निबोधत
कुट्टनं खण्डनं छिन्नं चुक्कितं लेहनं समम् १४८
दष्टं च दन्तक्रियया चिबुकं त्विह लक्ष्यते
कुट्टनं दन्तसंघर्षः संस्फोटः खण्डनं मुहुः १४९
छिन्नं तु गाढसंश्लेषश्चुक्कितं दूरविच्युतिः
लेहनं जिह्वया लेहः किञ्चित् श्लेषः समं भवेत् १५०
दन्तैर्दष्टेऽधरे दष्टमित्येषां विनियोजनम्
भयशीतज्वरक्रोधग्रस्तानां कुट्टनं भवेत् १५१
जपाध्ययनसंल्लापभक्ष्ययोगे च खण्डनम्
छिन्नं व्याधौ भये शीते व्यायामे रुदिते मृते १५२
जृम्भणे चुक्कितं कार्यं तथा लेह्ये च लेहनम्
समं स्वभावभावेषु सन्दष्टं क्रोधकर्मसु १५३
इति दन्तोष्ठजिह्वानां करणाच्चिबुकक्रिया
विधुतं विनिवृत्तं च निर्भुग्नं भुग्नमेव च १५४
विवृतं च तथोद्वाहि कर्माण्यत्रास्यजानि तु
व्यावृत्तं विनिवृत्तं स्याद्विधुतं तिर्यगायतम् १५५

अवाङ्मुखत्वं निर्भुग्नं व्याभुग्नं किञ्चिदायतम्
विश्लिष्टोष्ठं च विवृतमुद्वाह्युत्क्षिप्तमेव च १५६
विनिवृत्तमसूयायां ईर्ष्याक्रोधकृतेन च
अवज्ञा विहृतादौ च स्त्रीणां कार्या प्रयोक्तृभिः १५७
विधुतं वारणे चैव नैवमित्येवमादिषु
निर्भुग्नं चापि विज्ञेयं गम्भीरालोकनादिषु १५८
भुग्नं लज्जान्विते योज्यं यतीनां तु स्वभावजम्
निर्वेदौत्सुक्यचिन्तासु नये च विनिमन्त्रणे १५९
विवृत्तं चापि विज्ञेयं हास्यशोकभयादिषु
स्त्रीणामुद्वाहि लीलायां गर्वे गच्छत्यनादरे १६०
एवं नामेकिकार्यं च कोपवाक्य विचक्षणैः
समं साच्यनुवृत्तादि यच्च दृष्टिविकल्पितम् १६१
तज्ज्ञैस्तेनानुसारेण कार्यं तदनुगं मुखम्
अथातो मुखरागस्तु चतुर्धा परिकीर्तितः १६२
स्वाभाविकः प्रसन्नश्च रक्तः श्यामोऽर्थसंश्रयः
स्वाभाविकस्तु कर्तव्यः स्वभावाभिनयाश्रयः १६३
मध्यस्थादिषु भावेषु मुखरागः प्रयोक्तृभिः
प्रसन्नस्त्वद्भुते कार्यो हास्यशृङ्गारयोस्तथा १६४
वीररौद्रमदाद्येषु रक्तः स्यात् करुणे तथा
भयानके सबीभत्से श्यामं सञ्जायते मुखुम् १६५
एवं भावरसार्थेषु मुखरागं प्रयोजयेत्
शाखाङ्गोपाङ्गसंयुक्तः कृतोऽप्यभिनयः शुभः १६६
मुखरागविहीनस्तु नैव शोभान्वितो भवेत्
शरीराभिनयोऽल्पोऽपि मुखरागसमन्वितः १६७
द्विगुणां लभते शोभां रात्राविव निशाकरः
नयनाभिनयोऽपि स्यान्नानाभावरसास्फुटः १६८

मुखरागान्वितो यस्मान्नाट्यमत्र प्रतिष्ठितम्
यथा नेत्रं प्रसर्पेत मुखभ्रूदृष्टिसंयुतम्  १६९
तथा भावरसोपेतं मुखरागं प्रयोजयेत्
इत्येवं मुखरागस्तु प्रोक्तो भावरसाश्रयः  १७०
अतः परं प्रवक्ष्यामि ग्रीवाकर्माणि वै द्विजाः
समा नतोन्नता त्र्यस्रा रेचिता कुञ्चिताञ्चिता  १७१
वलिता च निवृत्ता च ग्रीवा नवविधार्थतः
समा स्वाभाविकी ध्यानस्वभावजपकर्मसु  १७२
नता नतास्यालङ्कारबन्धे कण्ठावलम्बने
उन्नताभ्युन्नतमुखी ग्रीवा चोर्ध्वनिवेशने  १७३
त्र्यस्रा पार्श्वगता ज्ञेया स्कन्धभारेऽति दुःखिते
रेचिता विधुतभ्रान्ता हावे मथननृत्तयोः  १७४
कुञ्चिताकुञ्चिते मूर्ध्नि धारिते गलरक्षणे
अञ्चितापसृतोद्बन्धकेशकर्षोर्ध्वदर्शने  १७५
पार्श्वोन्मुखी स्याद्वलिता ग्रीवाभेदैश्च वीक्षणे
निवृत्ताभिमुखीभूता स्वस्थानाभिमुखादिषु  १७६
इत्यादिलोकभावार्था ग्रीवाभङ्गैरनेकधा
ग्रीवाकर्माणि सर्वाणि शिरः कर्मानुगानि हि  १७७
शिरसः कर्मणः कर्म ग्रीवायाः सम्प्रवर्त्तते
इत्येतल्लक्षणं प्रोक्तं शीर्षोपाङ्गसमाश्रयम्  १७८
अङ्गकर्माणि शेषाणि गदतो मे निबोधत  १७९

इति भरतीये नाट्यशास्त्रे उपाङ्गविधानं नाम अष्टमोऽध्यायः

## नवमोऽध्यायः

एवमेतच्छिरोनेत्रभ्रूनासोष्ठकपोलजम्
कर्म लक्षणसंयुक्तमुपाङ्गानां मयोदितम्  १

हस्तोर पार्श्वजठरकटीजङ्घोरुपादतः
लक्षणं सम्प्रवक्ष्यामि विनियोगं च तत्त्वतः २
हस्तादीनां प्रवक्ष्यामि कर्म नाटयप्रयोजकम्
यथा येनाभिनेयं च तन्मे निगदतः शृणु ३
पताकस्त्रिपताकश्च तथा वै कर्तरीमुखः
अर्धचन्द्रो ह्यरालश्च शुकतुण्डस्तथैव च ४
मुष्टिश्च शिखराख्यश्च कपित्थः खटकामुखः
सूच्यास्यः पद्मकोशश्च तथा वै सर्पशीर्षकः ५
मृगशीर्षः परो ज्ञेयो हस्ताभिनययोक्तृभिः
काङ्गुलकोऽलपद्मश्च चतुरो भ्रमरस्तथा ६
हंसास्यो हंसपक्षश्च सन्दंशो मुकुलस्तथा
ऊर्णनाभस्ताम्रचूडश्चतुर्विंशतिरीरिताः ७
असंयुताः संयुताश्च गदतो मे निबोधत
अञ्जलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा ८
खटकावर्धमानश्च ह्युत्संगो निषधस्तथा
दोलः पुष्पपुटश्चैव तथा मकर एव च ९
गजदन्तोऽवहित्थश्च वर्धमानस्तथैव च
एते तु संयुता हस्ता मया प्रोक्तास्त्रयोदश १०
नृत्तहस्तानतश्चोर्ध्वं गदतो मे नोबोधत
चतुरस्त्रौ तथोद्वृत्तौ तथा तलमुखौ स्मृतौ ११
स्वस्तिकौ विप्रकीर्णौ चाप्यरालखटकामुखौ
आविद्धवक्रौ सूच्यास्यौ रेचितावर्धरेचितौ १२
उत्तानावञ्चितौ वापि पल्लवौ च तथा करौ
नितम्बौ चापि विज्ञेयौ केशबन्धौ तथैव च १३
सम्प्रोक्तौ करिहस्तौ च लताख्यौ च तथैव च
पक्षवञ्चितकौ चैव पक्षप्रद्योतकौ तथा १४

ज्ञेयौ गरुडपक्षौ च हंसपक्षौ तथैव च
ऊर्ध्वमण्डलिनौ चैव पार्श्वमण्डलिनौ तथा १५
उरोमण्डलिनौ चैव उरःपार्श्वार्धमण्डलौ
मुष्टिकस्वस्तिकौ चापि नलिनीपद्मकोशकौ १६
अलपद्मावुल्वणौ च ललितौ वलितौ तथा
सप्तषष्टिकरा ह्येते नामतोऽभिहिता मया १७
यथा लक्षणमेतेषां कर्माणि च निबोधत
प्रसारिताः समाः सर्वा यस्याङ्गुल्यो भवन्ति हि
कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः १८
एष प्रहारपाते प्रतापन नोदने प्रहर्षे च
गर्वेऽप्यहमिति तज्ज्ञैर्ललाटदेशोत्थितः कार्यः १९
एषोऽग्निवर्षधारानिरूपणे पुष्पवृष्टिपतने च
संयुतकरणः कार्यः प्रविरलचलिताङ्गुलिर्हस्तः २०
स्वस्तिकविच्युतिकरणात् पल्वलपुष्पोपहारशष्पाणि
विरचितमुर्वीसंस्थं यद्द्रव्यं तच्च निर्देश्यम् २१
स्वस्तिकविच्युतिकरणात् पुनरेवाधोमुखेन कर्तव्यम्
संवृतविवृतं पाल्यं छन्नं निबिडं च गोप्यं च २२
अस्यैव चाङ्गुलीभिरधोमुखप्रस्थितोत्थितचलाभिः
वायूर्मिवेगवेलाक्षोभश्चौघश्च कर्त्तव्यः २३
उत्साहनं बहु तथा महाजनप्रांशुपुष्करप्रहतम्
पक्षोत्क्षेपाभिनयं रेचककरणेन प्रयुञ्जीत २४
परिघृष्टतलस्थेन तु धौतं मृदितं प्रमृष्टपिष्टे च
पुनरेव शैलधारणमुद्घाटनमेव चाभिनयेत् २५
एवमेष प्रयोक्तव्यः स्त्रीपुंसाभिनये करः
पताकाभ्यां तु हस्ताभ्यामभिनेयः प्रयोक्तृभिः २६
दशाख्यश्च शताख्यश्च सहस्राख्यस्तथैव च

अतः परं प्रवक्ष्यामि त्रिपताकस्य लक्षणम् २७
पताके तु यदा वक्राऽनामिका त्वङ्गुलिर्भवेत्
त्रिपताकः स विज्ञेयः कर्म चास्य निबोधत २८
आवाहनमवतरणं विसर्जनं वारणं प्रवेशश्च
उन्नामनं प्रणामो निदर्शनं विविधवचनं च २९
मङ्गल्यद्रव्याणां स्पर्शः शिरसोऽथ सन्निवेशश्च
उष्णीषमुकुटधारणं नासास्यश्रोत्रसंवरणम् ३०
अस्यैव चाङ्गुलीभ्यामधोमुखप्रस्थितोत्थितचलाभ्याम्
लघुपवनस्रोतोभुजगभ्रमरादिकान् कुर्यात् ३१
अश्रुप्रमार्जने तिलकविरचनं रोचनयालम्भनकं च
त्रिपताकानामिकया स्पर्शनमलकस्य कार्यञ्च ३२
स्वस्तिकौ त्रिपताकौ तु गुरूणां पादवन्दने
विच्युतौ चलितावस्थौ कार्यावुद्वाहदर्शने ३३
परस्पराग्रसंश्लिष्टौ कर्त्तव्यौ नृपदर्शने
तिर्यक् स्वस्तिकसम्बद्धौ स्यातां तौ ग्रहदर्शने ३४
तपस्विदर्शने कार्यावूर्ध्वौ चापि पराङ्मुखौ
परस्पराभिमुखौ च कर्त्तव्यौ वरदर्शने ३५
उत्तानाधोमुखौ कार्यावग्रे वक्त्रस्य संस्थितौ
वडवानलसङ्ग्राममकराणां च दर्शने ३६
अभिनयास्त्वनेनैव वानरप्लवनोर्मयः
पवनश्च स्त्रियश्चैव नाट्ये नाट्यविचक्षणैः ३७
संमुखप्रसृताङ्गुष्ठः कार्यो बालेन्दुदर्शने
पराङ्मुखस्तु कर्त्तव्यो याने नृणां प्रयोक्तृभिः ३८
त्रिपताके यदा हस्ते भवेत् पृष्ठावलोकिनी
तर्जनी मध्यमायाश्च तदासौ कर्तरीमुखः ३९
पथि चरणरचनरञ्जनरङ्गणकरणान्यधोमुखेनैव

ऊर्ध्वमुखेन तु कुर्याद् दष्टं शृङ्गं च लेख्यं च ४०
पतनमरणव्यतिक्रमपरिवृत्तवितर्कित तथा न्यस्तम्
भिन्नवलितेन कुर्यात्कर्तर्यास्याङ्गुलिमुखेन ४१
संयुतकरणो वा स्यादसंयुतो वा प्रयुज्यते तज्ज्ञैः
रुरुचमरमहिषसुरगजवृषगोपुरशैलशिखरेषु ४२
यस्याङ्गुल्यस्तु विनताः सहाङ्गुष्ठेन चापवत्
सोऽर्धचन्द्रो हि विज्ञेयः करः कर्मास्य वक्ष्यते ४३
एतेन बालतरवः शशिलेखाकम्बुकलशवलयानि
निर्घाटनमायस्तं मध्यौपम्यं च पीनं च ४४
रशनाजघनकटीनामाननतलपत्रकुण्डलादीनाम्
कर्त्तव्यो नारीणामभिनययोगोऽर्धचन्द्रेण ४५
आद्या धनुर्नता कार्या कुञ्चिताङ्गुष्ठकस्तथा
शेषा भिन्नोर्ध्ववलिता ह्यरालेऽङ्गुलयः करः ४६
एतेन सत्त्वशौण्डीर्यवीर्यधृतिकान्तिदिव्यगाम्भीर्यम्
आशीर्वादाश्च तथा भावा हितसंज्ञकाः कार्याः ४७
एतेन पुनः स्त्रीणां केशानां संग्रहोत्कर्षौ
सर्वाङ्गिकं तथैव च निर्वर्णनमात्मनः कार्यम् ४८
कौतुकविवाहयोगं प्रदक्षिणेनैव संप्रयोगं च
अङ्गुल्यग्रस्वस्तिकयोगान् परिमण्डलेनैव ४९
प्रादक्षिण्यं परिमण्डलं च कुर्यान् महाजनं चैव
यच्च महीतलरचितं द्रव्यं तच्चाभिनेयं स्यात् ५०
आह्वाने च निवारणनिर्माणे चाप्यनेकवचने च
स्वेदस्य चापनयने गन्धाघ्राणे शुभः शुभे चैष ५१
त्रिपताकहस्तजानि तु पूर्वं यान्यभिहितानि कर्माणि
तानि त्वरालयोगात्स्त्रीभिः सम्यक् प्रयोज्यानि ५२
अरालस्य यदा वक्राऽनामिकात्वङ्गुलिर्भवेत्

शुकतुण्डस्तु स करः कर्म चास्य निबोधत ५३
एतेन त्वभिनेयं नाहं न त्वं न कृत्यमिति चार्थे
आवाहने विसर्गे धिगिति वचने च सावज्ञम् ५४
अङ्गुल्यो यस्य हस्तस्य तलमध्येग्रसंस्थिताः
तासामुपरि चाङ्गुष्ठः सः मुष्टिरिति संज्ञितः ५५
एष प्रहारे व्यायामे निर्गमे पीडने तथा
संवाहनेऽसियष्टीनां कुन्तदण्डग्रहे तथा ५६
अस्यैव तु यदा मुष्टेरूर्ध्वोङ्गुष्ठः प्रयुज्यते
हस्तः स शिखरो नाम तदा ज्ञेयः प्रयोक्तृभिः ५७
रश्मिकुशाङ्कुशधनुषां तोमरशक्तिप्रमोक्षणे चैव
अधरोष्ठपादरञ्जनमलकस्योत्क्षेपणं चैव ५८
अस्यैव शिखराख्यस्य ह्यङ्गुष्ठकनिपीडिता
यदा प्रदेशिनी वक्रा स कपित्थस्तदा स्मृतः ५७
असिचापचक्रतोमरकुन्तगदाशक्तिवज्रबाणानि
शस्त्राण्यभिनेयानि तु कार्यं सत्यं च पथ्यं च ६०
उत्क्षिप्तवक्रा तु यदानामिका सकनीयसी
अस्यैव तु कपित्थस्य तदासो खटकामुखः ६१
होत्रं हव्यं छत्रं प्रग्रहपरिकर्षणं व्यजनकञ्च
आदर्शधारणं खण्डनं तथा पेषणं चैव ६२
आयतदण्डग्रहणं मुक्ताप्रालम्बसंग्रहं चैव
स्रग्दामपुष्पमाला वस्त्रान्तालम्बनं चैव ६३
मन्थनशरावकर्षणपुष्पावचयप्रतोदकार्याणि
अङ्कुशरज्वाकर्षणस्त्रीदर्शनमेव कार्यं च ६४
खटकाख्ये यदा हस्ते तर्जनी संप्रसारिता
हस्तः सूचीमुखो नाम तदा ज्ञेयः प्रयोक्तृभिः ६५
अस्य विविधान् योगान् वक्ष्यामि समासतः प्रदेशिन्याः

ऊर्ध्वनतलोलकम्पितविजृम्भितोद्वाहितचलायाः ६६
चक्रं तडित्पताकामञ्जर्यः कर्णचूलिकाश्चैव
कुटिलगतयश्च सर्वे निर्देश्याः साधुवादाश्च ६७
बालोरगबल्यवधूपदीपवल्लीलताशिखराडाश्च
परिपतनवक्रमराडलमभिनेया न्यूर्ध्वलोलितया ६८
वदनाभ्यासे कुञ्चिततविजृम्भिता वाक्यरूपणे कार्या
भूयश्चोर्ध्वविरचिता ताराधोरणैकदराडयष्टिषु च
विनता च पुनः कार्या दंष्ट्रिषु च तपास्ययोगेन ६९
पुनरपि मराडलगतया सर्वग्रहणं तथैव लोकस्य
प्रणतोन्ते च कार्ये ह्याद्ये दीर्घे च दिवसे च ७०
श्रवणाभ्यासे वक्रा विजृम्भणा वाक्यरूपणावसरे
मेति वदेति च योज्या प्रसारितोत्कम्पितोत्ताना ७१
कार्या प्रकम्पिता रोवदर्शनं स्वेदरूपणे चैव
कुन्तलकुराडलाङ्गदगराडाश्रयसंश्रयेऽभिनयं ७२
गर्वेऽहमिति ललाटे रिपुनिर्देशे तथैव च क्रोधे
कोऽसाविति निर्देशोऽथ कर्णकराडूयने चैव ७३
संयुक्ता संयोगे कार्या विश्लेषिता वियोगे च
कलहे स्वस्तिकयुपतां परस्परोत्पीडिता बन्धे ७४
द्वाभ्यां तु वात्मपार्श्वे दक्षिणतो निननिशावसानानि
अभिमुखपराङ्मुखाभ्यां विश्लिष्टाभ्यां प्रयुञ्जीत ७५
पुनरपि च भ्रमिताग्ररूपा शिलावर्तयन्त्रशैलेषु
परिवेषणे तथैव हि कार्या चाधोमुखी नित्यम् ७६
श्लिष्टा ललाटपट्टेष्वधोमुखी शम्भुरूपणे कार्या
शक्रस्याप्युत्ताना तज्ज्ञैस्तिर्यक्स्थिता कार्या ७७
द्वाभ्यां सन्दर्शयेन्नित्यं सम्पूर्ण चन्द्रमराडलम्
श्लिष्टा ललाटे शक्रस्य कार्या ह्युत्तानसंश्रया ७८

परिमण्डलं भ्रमितया मण्डलमादर्शयेच्च चन्द्रस्य
हरनयने च ललाटे शक्रस्यऽप्युगुत्ताना ७९
यस्याङ्गुल्यस्तु वितताः सहाङ्गुष्ठेन कुञ्चिताः
ऊर्ध्वा ह्यसंगताग्राश्च स भवेत् पद्मकोशकः ८०
विल्वकपित्थफलानां ग्रहणे कुचदर्शनस्य नारीणाम्
ग्रहणे ह्यामिषलाभे भवन्ति ताः कुञ्चिताग्रास्तु ८१
बहुजातिबीजपूरकमामिषखण्डं च निर्देश्यम्
देवार्चनबलिहरणे समुद्गके साग्रपिण्डदाने च
कार्यः पुष्पप्रकरश्च पद्मकोशेन हस्तेन ८२
मणिवन्धनविश्लिष्टाभ्यां प्रविरलचलिताङ्गुलिकराभ्याम्
कार्यो विवर्त्तिताभ्यां विकसितकमलोत्पलाविनयः ८३
अङ्गुल्यः संहताः सर्वाः सहाङ्गुष्ठेन यस्य च
तथा निम्नतलश्चैव स तु सर्पशिराः करः ८४
एष सलिलप्रदाने भुजगतौ तोयसेचने चैव
आस्फोटने च योज्यः करिकुम्भास्फालनाद्येषु ८५
अधोमुखीनां सर्वासामङ्गुलीनां समागमः
कनिष्ठाङ्गुष्ठकावूर्ध्वौ स भवेत् मृगशीर्षकः ८६
इह साम्प्रतमस्त्यद्य शक्तेश्चोल्लासनेऽक्षपाते च
स्वेदापमार्जनेषु च कुट्टमिते प्रचलितस्तु भवेत् ८७
त्रेताग्निसंस्थिता मध्या तर्जन्यङ्गुष्ठका यदा
काङ्गुलोऽनामिका वक्रा यदाश्चोर्ध्वा कनीयसी ८८
एतेन तरुणफलानि नानाविधानि च लघूनि
कार्याणि रोषजानि स्त्रीवचान्यङ्गुलिक्षेपैः ८९
मरकतवैदूर्यादेः प्रदर्शनं सुमनसां च कर्तव्यम्
ग्राह्यं मरालपदमिति तज्ज्ञैरेवं प्रयोगेषु ९०
आवर्तिताः करतले यस्याङ्गुल्यो भवन्ति हि

पार्श्वागतविकीर्णाश्च स भवेदलपल्लवः ९१
प्रतिषेधकृते योज्यः कस्य त्वन्नास्ति शून्यवचनेषु
पुनरात्मोपन्यासः स्त्रीणामेतेन कर्तव्यः ९२
तिस्रः प्रसारिता यत्र तथा चोर्ध्वा कनीयसी
तासां मध्ये स्थितोङ्गुष्ठः स करश्चतुरस्मृतः ९३
नयविनयनियमसुनितुणबालातुरसत्यकैतवार्थेषु
वाक्ये युक्ते पथ्ये सत्ये प्रशमे च विनियोज्यः ९४
एकेन द्वाभ्यां वा किञ्चिन्मण्डलकृतेन हस्तेन
विकृतविचारितचरितं वितर्कितं लज्जितं चैव ९५
नयनौपम्यं पद्मदलरूपणं हरिणकर्णनिर्देशः
संयुतकरणेनैव तु चरेणैतानि कुर्वीत ९६
लीला रती रुचि च स्मृतिबुद्धिविभावनाः क्षमां पुष्टिं च
सञ्ज्ञामात्रां प्रणयं विचारणं सङ्गतं शौचम् ९७
चातुर्यं माधुर्यं दाक्षिण्यं मार्दवं सुखं शीलम्
प्रश्नं वार्त्तायुक्तिं वेषं मृदुशाद्वलं स्तोकम् ९८
विभवाविभौ सुरतं गुणागुणौ यौवनं गृहान् दारान्
नानावर्णाश्च तथा चतुरेणैवं प्रयुञ्जीत ९९
सितमूर्ध्वेन तु कुर्यात् रक्तं पीतं च मण्डलकृतेन
परिमृदितेन तु नीलं वर्णाश्चतुरेण हस्तेन १००
मध्यमाङ्गुष्ठसन्दंशो वक्रा चैव प्रदेशिनी
ऊर्ध्वमन्ये प्रकीर्णे च द्वयङ्गुल्यौ भ्रमरे करे १०१
पद्मोत्पलकुमुदानामन्येषां चैव दीर्घवृन्तानाम्
पुष्पाणां ग्रहणविधिः कर्तव्यः कर्णपुरश्च १०२
विच्युतश्च सशब्दश्च कार्यो निर्भत्सनादिषु
बालालापे च शीघ्रे च ताले विश्वासने तथा १०३
तर्जनीमध्यमाङ्गुष्ठास्त्रेताग्निस्था निरन्तराः

भवेयुर्हंसवक्त्रस्य शेषे द्वे सम्प्रसारिते १०४
श्लक्ष्णाल्पशिथिललाघवनिस्साराथे मृदुत्वयोगेषु
कार्योऽभिनयविशेषः किञ्चित्प्रस्यन्दिताग्रेण १०५
समाः प्रसारितास्तिस्त्रस्तथा चोर्ध्वा कनीयसी
अङ्गुष्ठः कुञ्चितश्चैव हंसपक्ष इति स्मृतः १०६
एष च निवापसलिले दातव्ये गराडसंश्रये चैव
कार्यः प्रतिग्रहाचमनभोजनार्थेषु विप्राणाम् १०७
आलिङ्गने महास्तम्भदर्शने रोमहर्षणे चैव
स्पर्शेऽनुलेपनार्थे योज्यः संवाहने चैव १०८
पुनरेव च नारीणां स्तनान्तरस्थेन विभ्रमविशेषाः
कार्या यथारसं स्युर्दुःखे हनुधारणे चैव १०९
तर्जन्यङ्गुष्ठसन्दंशस्त्वह्यरालस्य यथा भवेत्
आभुग्नतलमध्यस्थः स सन्दंश इति स्मृतः ११०
सन्दंशस्त्रिविधो ज्ञेय ह्यग्रजो मुखजस्तथा
तथा पार्श्वगतश्चैव रसभावोपबृंहितः १११
पुष्पापचयग्रथने ग्रहणे तृणपर्णकेशसूत्राणाम्
शल्यावयवग्रहणापकर्षणे चाग्रसन्दंशः ११२
वृन्तात्पुष्पोद्धरणं वर्तिशलाकादिपूरणं चैव
धिगिति च वचनं रोषे मुखसन्दंशस्य कर्माणि ११३
यज्ञोपवीतधारणवेधनगुणसूक्ष्मबाणलक्ष्येषु
योगे ध्याने स्तोके संयुक्तकरणस्तु कर्तव्यः ११४
पेशलकुत्सासूयादोषवचने च वामहस्तेन
किञ्चिद्विवर्तितकराग्रः प्रयुज्यते पार्श्वसन्दशः ११५
आलेख्यनेत्ररञ्जनवितर्कवन्तप्रवालरचने च
निष्पीडनं तथालक्तकस्य कार्यं च नारीभिः ११६
समागताग्राः सहिता यस्याङ्गुल्यो भवन्ति हि

ऊर्ध्वा हंसमुखस्येव स भवेन्मुकुलः करः  ११७
देवार्चनबलिकरणे पद्मोत्पलकुमुदरूपणे चैव
विटचुम्बने च कार्यो विकुत्सिते विप्रकीर्णश्च  ११८
भोजनहिरण्यगणनामुखसंकोचप्रदानशीघ्रेषु
मुकुलितकुसुमेषु च तथा तज्ज्ञैरेष प्रयोक्तव्यः  ११९
पद्मकोशस्य हस्तस्य ह्यङ्गुल्यः कुञ्चिता यदा
ऊर्णनाभः स विज्ञेयः केशचौर्यग्रहादिषु  १२०
शिरः कण्डुयने चैव कुष्ठव्याधिनिरूपणे
सिंहव्याघ्रेष्वभिनयः प्रस्तरग्रहणे तथा  १२१
मध्यमाङ्गुष्ठसन्दंशो वक्रा चैव प्रदेशिनी
शेषे तलस्थे कर्त्तव्ये ताम्रचूलकरेऽङ्गुली  १२२
विच्युतश्च सशब्दश्च कार्यो निर्भत्सनादिषु
ताले विश्वसने चैव शीघ्रार्थे संज्ञितेषु च  १२३
तथा कलासु काष्ठासु निमेषे तु क्षणे तथा
एष एव करः कार्यो बालालापनिमन्त्रणे  १२४
अथवा अङ्गुल्यः संहिता वक्रा उपर्युङ्गुष्ठपीडिताः
प्रसारिता कनिष्ठा च ताम्रचूडः करः स्मृतः  १२५
शतं सहस्रं लक्षं च करेणैकेन योजयेत्
क्षिप्रमुक्ताङ्गुलीभिस्तु स्फुलिङ्गान् विप्रुषस्तथा  १२६
असंयुताः करा ह्येते मया प्रोक्ता द्विजोत्तमाः
अतश्च संयुतान् हस्तान् गदतो मे निबोधत  १२७
पताकाभ्यां तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः
देवतानां गुरूणां च मित्राणां चाभिवादने  १२८
स्थानान्यस्य पुनस्त्रीणि वक्षो वक्त्रं शिरस्तथा
देवतानां शिरःस्थस्तु गुरूणामास्यसंस्थितः
वक्षःस्थश्चैव मित्राणां स्त्रीणां त्वनियतो भवेत्  १२९

उभाभ्यामपि हस्ताभ्यामन्योऽन्यं पार्श्वसङ्ग्रहात्
हस्तः कपोतको नाम कर्म चास्य नोबोधत १३०
एष विनयाभ्युपगमे प्रणामकरणे गुरोश्च सम्भाषे
शीते भये च कार्यो वक्षःस्थः कम्पितः स्त्रीभिः १३१
अयमेवाङ्गुलिपरिधृष्यमाणमुक्तस्तु खिन्नवाक्येषु
एतावदिति च कार्यो नेदानीं कृत्यमिति चार्थे १३२
अङ्गुल्यो यस्य हस्तस्य ह्यन्योन्यान्तरनिस्सृताः
स कर्कट इति ज्ञेयः करः कर्म च वक्ष्यते १३३
एष मदनाङ्गमर्दे सुप्तोत्थितविजृम्भणे वृहद्देहे
हनुधारणे च योज्यः शङ्खग्रहणेऽर्थतत्त्वज्ञैः १३४
मणिबन्धनविन्यस्तावरालौ स्त्रीप्रयोजितौ
उत्तानौ वामपार्श्वस्थौ स्वस्तिकः परिकीर्तितः १३५
स्वस्तिकविच्युतिकरणाद्दिशो घनाः खं वनं समुद्राश्च
ऋतवो मही तथौघं विस्तीर्णं चाभिनेयं स्यात् १३६
खटकं खटके न्यस्तः खटकावर्धमानकः
शृङ्गारार्थेषु योक्तव्यः प्रणामकरणे तथा १३७
अन्ये--कुमुदोतालवृन्तेषु कर्त्तव्यश्छत्रधारणे । इति १३८
अरालौ तु विपर्यस्तावुत्तानौ वर्धमानकौ
उत्सङ्ग इति विज्ञेयः स्पर्शस्य ग्रहणे करः १३९
सनिष्पेषकृते चैव रोषामर्षकृतेऽपि च
निष्पीडितः पुनश्चैव स्त्रीणामीर्ष्याकृते भवेत् १४०
मुकुलं तु यदा हस्तं कपित्थः परिवेष्टयेत्
स मन्तव्यस्तदा हस्तो निषधौ नाम नामतः १४१
संग्रहपरिग्रहौ धारणं च समयश्च सत्यवचनं च
सङ्क्षेपः संक्षिप्तं निपीडितेनाभिनेतव्यम् १४२
शिखरस्तु यदा हस्तो मृगशीर्षेण पीडितः

निषधो नाम विज्ञेयः स भयार्त्ते विधीयते १४३
गृहीत्वा वामहस्तेन कूर्पराभ्यन्तरे भुजम्
दक्षिणं चापि वामस्य कूर्पराभ्यन्तरे न्यसेत् १४४
स चापि दक्षिणो हस्तः सम्यङ् मुष्टीकृतो भवेत्
इत्येष निषधो हस्तः कर्म चास्य नोबोधत १४५
एतेन धैर्यमदगर्वसौष्ठवौत्सुक्यविक्रमाटोपाः
अभिमानावष्टम्भः स्तम्भस्थैर्यादयः कार्याः १४६
अथवा--
ज्ञेयो वै निषधो नाम हंसपक्षौ पराङ्मुखौ
जालवातायनादीनां प्रयोक्तव्योऽभिघट्टने १४७
अंसौ प्रशिथिलौ मुक्तौ पताकौ तु प्रलम्बितौ
यदा भवेतां करणे स दोल इति संज्ञितः १४८
सम्भ्रमविषादमूर्छितमदाभिघाते तथैव चाऽऽवेगे
व्याधिप्लुते च शस्त्रक्षते च कार्योऽभिनययोगः १४९
यस्तु सर्पशिराः प्रोक्तस्तस्याङ्गुलिनिरन्तरः
द्वितीयः पार्श्वसंश्लिष्टः स तु पुष्पपुटः स्मृतः १५०
धान्यफलपुष्पसदृशान्यनेन नानाविधानि युक्तानि
ग्राह्याण्युपनेयानि च तोयानयनापनयने च १५१
पताकौ तु यदा हस्तावूर्द्धाङ्गुष्ठावधोमुखौ
उपर्युपरि विन्यस्तौ तदा स मकरः करः १५२
सिंहव्यालद्विपिप्रदर्शनं नक्रमकरमत्स्यानाम्
ये चान्ये क्रव्यादा ह्यभिनेयास्तेऽर्थयोगेन १५३
कूर्परांसोचितौ हस्तौ यदास्तां सर्पशीर्षकौ
गजदन्तः स विज्ञेयः कर्म चास्य निबोधत १५४
एष च वधूवराणामुद्वाहे चातिभारयोगे च
स्तम्भग्रहणे च तथा शैलशिलोत्पाटने चैव १५५

एवं भावरसोपेता काकुः कार्या प्रयोक्तृभिः १२९
अथाङ्गानि षट्-विच्छेदोऽर्पण विसर्गोऽनुबन्धो दीपनं प्रशमनमिति । तत्र विच्छेदो नाम विरामकृतः । अर्पणं नाम लीलायमानमधुरवल्गुना स्वरेण पूरयतेव रङ्गं यत्पठ्यते तदर्पणम् । विसर्गो नाम वाक्यन्यासः । अनुबन्धो नाम पदान्तरेष्वपि विच्छेदः अनुच्छ्वसनं वा । दीपनं नाम त्रिस्थानशोभि वर्धमानस्वरं चेति । प्रशमनं नाम तारगतानां स्वराणां प्रशाम्यतामवैस्वर्येणावतारणमिति । एषां च रसगतः प्रयोगः--तत्र हास्यशृंगारयोराकांक्षायामर्पणविच्छेददीपनप्रशमनयुक्तं पाठ्यं कार्यम् । दीपनप्रशमनयुक्तं करुणे । विच्छेदप्रशमनदीपनानुबन्धबहुलं वीररौद्रद्भुतेषु विसर्गविच्छेदयुक्तं बीभत्सभयानकयोरिति । सर्वेषामप्येषां मन्द्रमध्य तारकृतः प्रयोगस्त्रिस्थानगतः । तत्र दूरस्थाभाषणे तारं शिरसा नातिदूरे मध्यं कण्ठेन पाश्वतो मन्द्रमुरसा प्रयोजयेत्यपाठ्यमिति । मन्द्रात्तारं न गच्छेत् ताराद्वा मन्द्रमिति १३०
एषां च द्रुतमध्यविलम्बितास्त्रयो लया रसेषूपपाद्याः । तन्त्र हास्यशृंङ्गारयोर्मध्यलयः करुणे विलम्बितो वीररौद्राद्भुतवीभत्सभयानकेषु द्रुत इति ।
अथ विरामः अर्थसमाप्तौ कार्यवशान्न छन्दोवशात् । कस्मात् दृश्यन्ते ह्येकद्वित्रिचतुरक्षरा विरामाः । यथा--
किं गच्छ मा विश सुदुर्जन वारितोऽऽसि
कार्यं त्वया न मम सर्वजनोपयुक्तं
सूचासु चाङ्कुरगते च तथोपचारे-
ष्वल्पाक्षराणि हि पदानि भवन्ति काव्ये १३२
एवं विरामे प्रयत्नोऽनुष्ठेयः । कस्मात् विरामो ह्यर्थानुदर्शकः सः अत्र श्लोकौ--
विरामेषु प्रयत्नो हि नित्यं कायः प्रयोक्तृभिः

कस्मादभिनयो ह्यस्मिन्नर्थापेक्षी यतः स्मृतः १३३
यत्र व्यग्रावुभौ हस्तौ तत्र दृष्टिसमन्वितः
वाचिकाभिनयः कार्यो विरामैरर्थदर्शकैः १३४
प्रायो वीरे च रौद्रे च करौ प्रहरणाकुलौ
बीभत्से कुत्सितत्वाच्च भवतः कुञ्चितौ करौ १३५
हास्ये चोद्देशमात्रेण करुणे च प्रलम्बितौ
अद्भुते विस्मयात्स्तब्धौ भयाच्चैव भयानके १३६
एवमादिषु चान्येषु प्रविचारेऽथ हस्तयोः
अलङ्कारविरामाभ्यां साध्यते ह्यर्थनिश्चयः १३७
ये विरामाः स्मृता वृत्ते तेष्वलङ्कार इष्यते
समाप्तेऽर्थे पदे वापि तथा प्राणवशेन वा १३८
पदवर्णसमासे च द्रुते बह्वर्थसंकटे
कार्यो विरामः पादान्ते तथा प्राणवशेन वा १३९
शेषमर्थवशेनैव विरामं संप्रयोजये
अत्र च भावगतानि रसगतानि च कृष्याक्षराणि बोद्धव्यानि
तद्यथा--
आकारैकारसंयुक्तमैकारौकारसंयुतम्
व्यञ्जनं यद्भवेद्दीर्घं कृष्यं तत्तु विधीयते १४०
विषादे च वितर्के च प्रश्नेऽथामर्ष एव च
कलाकालप्रमाणेन पाठ्यं कार्यं प्रयोक्तृभिः १४१
शेषाणामर्थयोगेन विरामे विरमेदिह
एकद्वित्रिचतुःपञ्चषट्कलं च विलम्बितम् १४२
विलम्बिते विरामे हि सदा गुर्वक्षरं भवेत्
षण्णां कलानां परतो विलम्बो च विधीयते १४३
अथवा कारणोपेतं प्रयोगं कार्यमेव च
समीक्ष्य वृत्ते कर्तव्यो विरामो रसभावतः १४४

ये विरामाः स्मृताः पाठ्ये वृत्तपादसमुद्भवाः
उत्क्रम्यापि क्रमं तज्ज्ञैः कार्यास्तेऽर्थवशानुगाः १४५
नापशब्दं पठेत्तज्ज्ञो भिन्नवृत्तं तथैव हि
विश्रमेन्नाविरामेषु दैन्ये काकुं न दीप्येत् १४६
वर्जितं काव्यदोषैस्तु लक्षणाढ्यं गुणान्वितम्
स्वरालङ्कारसंयुक्तं पठेत्पाठ्यं यथाविधि १४७
अलङ्कारा विरामाश्च ये पाठ्ये संस्कृते स्मृताः
त एव सर्वे कर्तव्या स्त्रीणां पाठ्ये त्वसंस्कृते १४८
एवमेतत्स्वरकृतं कलाताललयान्वितम्
दशरूपविधाने तु पाठ्यं योज्यं प्रयोक्तृभिः १४९
उक्तं काकुविधानं तु यथावदनुपूर्वशः
अत ऊर्ध्वं प्रवक्ष्यामि दशरूपविकल्पनम् १५०

इति भरतीये नाट्यशास्त्रे वागभिनये काकुस्वरव्यञ्जनो नाम सप्तदशोऽध्यायः

## अष्टादशोऽध्यायः

वर्त्तयिष्याम्यहं विप्रा दशरूपविकल्पनम्
नामतः कर्मतश्चैव तथा चैव प्रयोगतः १
नाटकं सप्रकरणमङ्को व्यायोग एव च
भाणः समवकारश्च वीथी प्रहसनं डिमः २
ईहामृगश्च विज्ञेया दशेमे नाट्यलक्षणे
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ३
सर्वेषामेव काव्यानां मातृका वृत्तयः स्मृताः
आभ्यो विनिसृतं ह्येतद्दशरूपं प्रयोगतः ४
जातिभिः श्रुतिभिश्चैव स्वरा ग्रामत्वमागताः
यथा तथा वृत्तिभेदैः काव्यबन्धा भवन्ति हि ५

ग्रामौ पूर्णस्वरौ द्वौ तु यथा वै षड्जमध्यमौ
सर्ववृत्तिविनिष्पन्नौ काव्यबन्धौ तथा त्विमौ ६
ज्ञेयं प्रकरणं चैव तथा नाटकमेव च
सर्ववृत्तिविनिष्पन्नं नानाबन्धसमाश्रयम् ७
वीथी समवकारश्च तथेहामृग एव च
उत्सृष्टिकाङ्को व्यायोगो भाणः प्रहसनं डिमः ८
कैशिकीवृत्तिहीनानि रूपाण्येतानि कारयेत्
अत ऊर्ध्वं प्रवक्ष्यामि काव्यबन्धविकल्पनम् ९
प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव
राजर्षिवंश्यचरितं तथैव दिव्याश्रयोपेतम् १०
नानाविभूतिभिर्युतमृद्धिविलासादिभिर्गुणैश्चैव
अङ्कप्रवेशकाढयं भवति हि तन्नाटकं नाम ११
नृपतीनां यच्चरितं नानारसभावचेष्टितं बहुधा
सुखदुःखोत्पत्तिकृतं भवति हि तन्नाटकं नाम १२
अस्यावस्थोपेतं कार्यं प्रसमीक्ष्य बिन्दुविस्तारात्
कर्तव्योऽङ्कः सोऽपि तु गुणान्वितं नाटयतत्त्वज्ञैः १३
अङ्क इति रूढिशब्दो भवैश्च रसैश्च रोहयत्यर्थान्
नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः १४
अङ्कसमाप्तिः कार्या काव्यच्छेदेन बीजसंहारः
वस्तुव्यापी बिन्दुः काव्यसमुत्थोऽत्र नित्यं स्यात् १५
यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः
किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः १६
ये नायका निगदितास्तेषां प्रत्यक्षचरितसम्भोगः
नानावस्थोपेलः कार्मस्त्वङ्कोऽविप्रकृष्टस्तु १७
नायकदेवीगुरुजनपुरोहितामात्यसार्थवाहानाम्
नैकरसान्तरविहितो ह्यङ्क इति स वेदितव्यस्तु १८

पञ्चाद्या दशपरा ह्यङ्काः स्युर्नाटके प्रकरणे च
निष्क्रामः सर्वेषां यस्मिन्नङ्कः स विज्ञेयः १९
क्रोधप्रसादशोकाः शापोत्सर्गोऽथ विद्रवोद्वाहौ
अद्भुतसंभवदर्शनमङ्के प्रत्यक्षजानि स्युः २०
एकदिवसप्रवृत्तः कार्यस्त्वकोऽर्थबीजमधिकृत्य
आवश्यककार्याणामविरोधेन प्रयोगेषु २१
एकाङ्केन कदाचिद्बहूनि कार्याणि योजयेद्धीमान्
आवश्यकविरोधेन तत्र काव्यानि कार्याणि २२
रङ्गं तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्क्रामः
बीजार्थयुक्तियुक्तं कृत्वा काव्यं यथार्थरसम् २३
न बहूनीह कार्याणि त्वेकाङ्के विनियोजयेत्
आवश्यकानां कार्याणां विरोधो हि तथा भवेत् २४
ज्ञात्वा दिवसावस्थां क्षणयाममुहूर्तलक्षणोपेताम्
विभजेत्सर्वमशेषं पृथक्पृथक्काव्यमङ्केषु २५
दिवसावसानकार्यं यद्यङ्के नोपपद्यते सर्वम्
अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधातव्यम् २६
विप्रकृष्टं तु यो देशं गच्छेत्कार्यवशानुगः
अङ्कच्छेदेऽथ संक्षेपान्निर्दिशेत्तं प्रवेशकैः २७
सन्निहितनायकोऽङ्कः कर्तव्यो नाटके प्रकरणे वा
परिजनकथानुबन्धः प्रवेशको नाम विज्ञेयः २८
प्रकरणनाटकविषये पञ्चाद्या दशपरा भवन्त्यङ्का
अङ्कान्तरसन्धिषु च प्रवेशकास्तेषु तावन्तः २९
अनयोरन्तरविहितः प्रवेशकोऽर्थक्रियां समभिवीक्ष्य
संक्षेपार्थः सन्धिष्वर्थानां संविधातव्यः ३०
अङ्कच्छेदं कृत्वा मासकृतं वर्षसंचितं वापि
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित् ३१

यः कश्चित्कार्यवशाद्गच्छति पुरुषः प्रकृष्टमध्वानम्
तत्राप्यङ्कच्छेदः कर्तव्यः पूर्ववत्तज्ज्ञैः ३२
अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम्
प्रकरणनाटकविषये प्रवेशकः संविधातव्यः ३३
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः
प्राकृतभाषाचारः प्रयोगमाश्रित्य कर्तव्यः ३४
कालोत्थानगतिरसौ व्याख्यासंरम्भकार्यविषयाणाम्
अर्थाभिधानयुक्तः प्रवेशकः स्यादनेकार्थः ३५
बह्वाश्रयमपि कार्यं प्रवेशकैः संक्षिपेच्च सन्धिषु वा
बहुचूर्णपदैर्युक्तं जनयति खेदं प्रयोगस्य ३६
यत्रार्थस्य समाप्तिर्न भवत्यङ्के प्रयोगबाहुल्यात्
वृत्तान्तस्वल्पकथैः प्रवेशकैः सोऽभिधातव्यः ३७
युद्धं राज्यभ्रंशो मरणं नगरोपरोधनं चैव
प्रत्यक्षाणि तु नाङ्के प्रवेशकैः संविधेयानि ३८
अङ्के प्रवेशके च प्रकरणमाश्रित्य नाटके वापि
न वधः कर्तव्यः स्याद्योऽभ्युदयी नायकः ख्यातः ३९
अपसरणमेव कार्यं ग्रहणं वा सन्धिरेव वा योज्यः
काव्यश्लेषैर्बहुभिर्यथारसं नाटयतत्त्वज्ञैः ४०
न महाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा
ये तत्र कार्यपुरुषाश्चत्वारः पञ्च वा ते स्युः ४१
कार्यं गोपुच्छाग्रं कर्तव्यं काव्यबन्धमासाद्य
ये चोदात्ता भावास्ते सर्वे पृष्ठतः कार्याः ४२
सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम्
निर्वहणे कर्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः ४३
नाटकलक्षणमेतन्मया समासेन कीर्तितं विधिवत्
प्रकरणमतः परमहं लक्षणयुक्त्या प्रवक्ष्यामि ४४

यत्र कविरात्मशक्त्या वस्तु शरीरं च नायकं चैव
औत्पत्तिकं प्रकुरुते प्रकरणमिति तद्बुधैर्ज्ञेयम्  ४५
यदनार्षमथाहार्यं काव्यं प्रकरोत्यभूतगुणयुक्तम्
उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम्  ४६
यन्नाटाके मयोक्तं वस्तु शरीरं च वृत्तिभेदाश्च
तत्प्रकरणेऽपि योज्यं सलक्षणं सर्वसन्धिषु तु  ४७
विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम्
चरितं यन्नैकविधं ज्ञेयं तत्प्रकरणं नाम  ४८
नोदात्तनायककृतं न दिव्यचरितं न राजसम्भोगम्
बाह्यजनसंप्रयुक्तं तज्ज्ञेयं प्रकरणं तज्ज्ञैः  ४९
दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम्
मन्दकुलस्त्रीचरितं काव्यं कार्यं प्रकरणे तु  ५०
सचिवश्रेष्ठिब्राह्मणपुरोहितामात्यसाथवाहानाम्
गृहवार्ता यत्र भवेन्न तत्र वेश्याङ्गना कार्या  ५१
यदि वेशयुवतियुक्तं न कुलस्त्रीसङ्गमोऽपि स्यात्
अथ कुलजनप्रयुक्तं न वेशयुवतिर्भवेत्तत्र  ५२
यदि वा कारणयुक्त्या वेशकुलस्त्रीकृतोपचारः स्यात्
अविकृतभाषाचारं तत्र तु पाठ्यं प्रयोक्तव्यम्  ५३
मध्यमपुरुषैर्नित्यं योज्यो विष्कम्भकोऽत्र तत्त्वज्ञैः
संस्कृतवचनानुगतः संक्षेपार्थः प्रवेशकवत्  ५४
शुद्धः संकीर्णो वा द्विविधो विष्कम्भकोऽपि कर्तव्यः
मध्यमपात्रः शुद्धः संकीर्णो नीचमध्यकृतः  ५५
अङ्कान्तरालविहितः प्रवेशकोऽर्थक्रियां समभिवीक्ष्य
संक्षेपात्सन्धीनामर्थानां चैव कर्तव्यः  ५६
अनयोश्च बन्धयोगादन्यो भेदः प्रयोक्तृभिः कार्यः
प्रख्यातस्त्वितरो वा नाटकयोगे प्रकरणे वा  ५७

प्रकरणनाटकभेदादुत्पाद्यं वस्तु नायकं सृपतिम्
अन्तःपुरसङ्गीतककन्यामधिकृत्य कर्तव्या ५८
स्त्रीप्राया चतुरङ्का ललिताभिनयात्मिका सुविहिताङ्गी
बहुनृत्तगीतपाठ्या रतिसम्भोगात्मिका चैव ५९
राजोपचारयुक्ता प्रसादनक्रोधदम्भसंयुक्ता
नायकदेवीदूती सपरिजना नाटिका ज्ञेया ६०
अन्तर्भावगता ह्येषा भावयोरुभयोर्यतः
अत एव दशैतानि रूपाणीत्युदितानि वै ६१
प्रकरणनाटकलक्षणमुक्तं विप्रा मया समासेन
वक्ष्याम्यतः परमहं लक्षणं युक्त्या समवकारम् ६२
देवासुरबीजकृतः प्रख्यातोदात्तनायकश्चैव
त्र्यङ्कस्तथा त्रिकपटस्त्रिविद्रवः स्यास्त्रिशृङ्गारः ६३
द्वादशनायकवहुलो ह्यष्टादशनाडिकाप्रमाणश्च
वक्ष्याम्यस्याङ्कविधिं यावत्यो नाडिका यत्र ६४
अङ्कस्तु सप्रहसनः सविद्रवः सकपटः सवीथीकः
द्वादशनाडीविहितः प्रथमः कार्यः क्रियोपेतः ६५
कार्यस्तथा द्वितीयः समाश्रितो नाडिकाश्चतस्त्रस्तु
वस्तुसमापनविहितो द्विनाडिकः स्यात्तृतीयस्तु ६६
नाडीसंज्ञा ज्ञेया मानं कासस्य यन्मुहूर्तार्धम्
तन्नाडिकाप्रमाणं यथोक्तमङ्केषु संयोज्यम् ६७
या नाडिकेति संज्ञा कालविभागे क्रियाभिसंपन्ना
कार्या च सा प्रयत्नाद्यथा क्रमेणैव शास्त्रोक्ता ६८
अङ्कोऽङ्कस्त्वन्यार्थः कर्तव्यः काव्यबन्धमासाद्य
अर्थं हि समवकारे ह्यप्रतिसंबन्धमिच्छन्ति ६९
युद्धजलसंभवो वा वाय्वग्निगजेन्द्रसंभ्रमकृतो वा
नगरोपरोधजो वा विज्ञेयो विद्रवस्त्रिविधः ७०

वस्तुगतक्रमविहितो दैववशाद्वा परप्रयुक्तो वा
सुखदुःखोत्पत्तिकृतस्त्रिविधः कपटोऽत्र विज्ञेयः ७१
त्रिविधश्चात्र विधिज्ञैः पृथक्पृथक्कार्ययोगविहितार्थः
शृङ्गारः कर्तव्यो धर्मे चार्थे च कामे च ७२
यस्मिन् धर्मप्रापकमात्महितं भवति साधनं बहुधा
व्रतनियमतपोयुक्तो ज्ञेयोऽसौ धर्मशृङ्गारः ७३
अर्थस्येच्छायोगाद्बहुधा चैवार्थतोऽर्थशृङ्गारः
स्त्रीसंप्रयोगविषयेष्वर्थार्थां वा रतिर्यत्र ७४
कन्याविलोभनकृतं प्राप्तौ स्त्रीपुंसयोस्तु रम्यं वा
निभृतं सावेगं वा यस्य भवेत्कामशृङ्गारः ७५
उष्णिग्गायत्र्यादीन्यन्यानि च यानि बन्धकुटिलानि
वृत्तानि समवकारे कविभिस्तानि प्रयोज्यानि ७६
एवं कार्यस्तज्ज्ञैर्नानारससंश्रयः समवकारः
वक्ष्याम्यतः परमहं लक्षणमीहामृगस्यापि ७७
दिव्यापुरुषाश्रयकृतो दिव्यस्त्रीकारणोपगतयुद्धः
सुविहितवस्तुनिबद्धो विप्रत्ययकारकश्चैव ७८
उद्धतपुरुषप्रायः स्त्रीरोधग्रथितकाव्यबन्धश्च
संक्षोभविद्रवकृतः संफेटकृतस्तथा चैव ७९
स्त्रीभेदनापहरणावमर्दनप्राप्तवस्तुशृङ्गारः
ईहामृगस्तु कार्यः सुसमाहितकाव्यबन्धश्च ८०
यद्व्यायोगे कार्यं ये पुरुषा वृत्तयो रसाश्चैव
ईहामृगेऽपि ते स्युः केवलममरस्त्रिया योगः ८१
यत्र तु वधेप्सितानां बधो ह्युदग्रो भवेद्धि पुरुषाणाम्
किञ्चिद्व्याजं कृत्वा तेषां युद्धं शमयितव्यम् ८२
ईहामृगस्य लक्षणमुक्तं विप्राः समासयोगेन
डिमलक्षणं तु भूयो लक्षणयुक्त्या प्रवक्ष्यामि ८३

प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव
षड्रसलक्षणयुक्तश्चतुरङ्को वै डिमः कार्यः ८४
शृङ्गारहास्यवर्जं शेषैः सर्वैं रसैः समायुक्तः
दीप्तरसकाव्ययोनिर्नानाभावोपसम्पन्नः ८५
निर्घातोल्कापातैरुपरागेणेन्दुसूर्ययोर्युक्तः
युद्धनियुद्धाधर्षणसंफेटकृतश्च कर्तव्यः ८६
मायेन्द्रजालबहुलो बहुपुस्तोत्थानयोगयुक्तश्च
देवभुजगेन्द्रराक्षसयक्षपिशाचावकीर्णश्च ८७
षोडशनायकबहुलः सात्त्वत्यारभटीवृत्तिसम्पन्नः
कार्यो डिमः प्रयत्नान्नानाश्रयभावसम्पन्नः ८८
डिमलक्षणमित्युक्तं मया समासेन लक्षणानुगतम्
व्यायोगस्य तु लक्षणमतः परं संप्रवक्ष्यामि ८९
व्यायोगस्तु विधिज्ञैः कार्य प्रख्यातनायकशरीरः
अल्पस्त्रीजनयुक्तस्त्वेकाहकृतस्तथा चैव ९०
बहवश्च तत्र पुरुषा व्यायच्छन्ते यथा समवकारे
न च दिव्यनायकयुक्तः कार्यस्त्वेकाङ्क एवायम् ९१
न च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः
युद्धनियुद्धाघर्षणसंधर्षकृतश्च कर्तव्यः ९२
एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः
वक्ष्याम्यतः परमहं लक्षणमुत्सृष्टिकाङ्कस्य ९३
प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात्
दिव्यपुरुषैर्वियुक्तः शैषैर्युक्तो भवेत्पुंभिः ९४
करुणरसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च
स्त्रीपरिदेवितबहुलो निर्वेदितभाषितश्चैव ९५
नानाव्याकुलचेष्टः सात्वत्यारभटिकैशिकीहीनः
कार्यः काव्यविधिज्ञैः सततं ह्युत्सृष्टिकाङ्कस्तु ९६

यद्दिव्यनायककृतं काव्यं संग्रामबन्धवधयुक्तम्
तद्भारते तु वर्षे कर्तव्यं काव्यबन्धेषु ९७
कस्माद्भारतमिष्टं वर्षेष्वन्येषु देवविहितेषु
हृद्या सर्वा भूमिः शुभगन्धा काञ्चनी यस्मात् ९८
उपवनगमनक्रीडा विहारनारीरतिप्रमोदाः स्युः
तेषु हि वर्षेषु सदा न तत्र दुःखं न वा शोकः ९९
ये तेषामधिवासाः पुराणवादेषु पर्वताः प्रोक्ताः
सम्भोगस्तेषु भवेत्कर्मारम्भो भवेदस्मिन् १००
प्रहसनमपि विज्ञेयं द्विविधं शुद्धं तथा च सङ्कीर्णम्
अङ्कस्य लक्षणमिदं व्याख्यातमशेषयोगमात्रगतम् १०१
प्रहसनमतः परमहं सलक्षणं संप्रवक्ष्यामि
वक्ष्यामि तयोर्युक्त्या पृथक्पृथग्लक्षणविशेषम् १०२
भगवत्तापसविप्रैरन्यैरपि हास्यवादसंबद्धम्
कापुरुषसंप्रयुक्तं परिहासाभाषणप्रायम् १०३
अविकृतभाषाचारं विशेषभावोपपन्नचरितपदम्
नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु १०४
वेश्याचेटनपुंसकविटधूर्ता बन्धकी च यत्र स्युः
अनिभृतवेषपरिच्छदचेष्टितकरणैस्तु संकीर्णम् १०५
लोकोपचारयुक्ता या वार्ता यश्च दम्भसंयोगः
स प्रहसने प्रयोज्यो धूर्तप्रविवादसम्पन्नः १०६
वीथ्यङ्गैः संयुक्तं कर्तव्यं प्रहसनं यथायोगम्
भाणस्यापि तु लक्षणमतः परं संप्रवक्ष्यामि १०७
आत्मानुभूतशंसी परसंश्रयवर्णनाविशेषास्तु
विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च १०८
परवचनमात्मसंस्थं प्रतिवचनैरुत्तरोत्तरग्रथितैः
आकाशपुरुषकथितैरङ्गविकारैरभिनयैश्चैव १०९

धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव
एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः १९०
भाणस्यापि हि निखिलं लक्षणमुक्तं तथागमानुगतम्
वीथ्याः संप्रति निखिलं कथयामि यथाक्रमं विप्राः १९१
सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्त्रयोदशभिः
वीथी स्याडेकाङ्का तथैकहार्या द्विहार्या वा १९२
अधमोत्तममध्याभिर्युक्ता स्यात्प्रकृतिभिस्तिसृभिः
उद्धात्यकावलगितावस्पन्दितनाल्पसत्प्रलापाश्च १९३
वाक्केल्यथ प्रपञ्चो मृदवाधिबले छलं त्रिगतम्
व्याहारो गण्डश्च त्रयोदशाङ्गान्युदाहृतान्यस्याः १९४
अथ वीथी संप्रोक्ता लक्षणमेषां प्रवक्ष्यामि
पदानि त्वगतार्थानि ये नराः पुनरादरात् १९५
योजयन्ति पदैरन्यैस्तदुद्धात्यकमुच्यते
यत्रान्यस्मिन् समावेश्य कार्यमन्यत्प्रसाध्यते १९६
तच्चावलगितं नाम विज्ञेयं नाटययोक्तृभिः
आक्षिप्तेऽर्थे तु कस्मिंश्चिच्छुभाशुभसमुत्थिते १९७
कौशलादुच्यतेऽन्योऽर्थस्तदवस्पन्दितं भवेत्
हास्येनोपगतार्थप्रहेलिका नालिकेति विज्ञेया १९८
मूर्खजनसन्निकर्षे हितमपि यत्र प्रभाषते विद्वान्
न च गृह्यतेऽस्य वचनं विज्ञेयोऽसत्प्रलापोऽसौ १९९
एकद्विप्रतिवचना वाक्केली स्यात्प्रयोगेऽस्मिन्
यदसद्भूतं वचनं संस्तवयुक्तं द्वयोः परस्परं यत्तु १२०
एकस्य चार्थहेतोः स हास्यजननः प्रपञ्च स्यात्
यत्कारणाद्गुणानां दोषीकरणं भवेद्विवादकृतम् १२१
दोषगुणीकरणं वा तन्मृदवं नाम विज्ञेयम्
परवचनमात्मनश्चोत्तरोत्तरसमुद्भवं द्वयोर्यत्र १२२

अन्योन्यार्थविशेषकमधिबलमिति तद्बुधैर्ज्ञेयम्
अन्यार्थमेव वाक्यं छलमभिसन्धानहास्यरोषकरम् १२३
श्रुतिसारूप्याद्यस्मिन् बहवोऽर्था युक्तिभिर्नियुज्यन्ते
यद्धास्यमहास्यं वा तस्त्रिगतं नाम विज्ञेयम् १२४
प्रत्यक्षवृत्तिरुक्तो व्याहारो हास्यलेशार्थः
संरम्भसंभ्रमयुतं विवादयुक्तं तथापवादकृतम् १२५
बहुवचनाक्षेपकृतं गण्डं प्रवदन्ति तत्त्वज्ञाः
इति दशरूपविधानं सर्वं प्रोक्तं मया हि लक्षणतः
पुनरस्य शरीरगतं संन्धिविधौ लक्षणं वक्ष्ये १२६

इति भरतीये नाट्यशास्त्रे दशरूपनिरूपणं नामाध्यायोऽष्टादशः समाप्तः

## एकोनविंशोऽध्यायः

इतिवृत्तं तु नाट्यस्य शरीरं परिकीर्तितम्
पञ्चभिः सन्धिभिस्तस्य विभागः सप्रकल्पितः १
इतिवृत्तं द्विषा चैव बुधस्तु परिकल्पयेत्
आधिकारिकमेकं स्यात् प्रासङ्गिकमथापरम् २
यत्कार्यं हि फलप्राप्त्या सामर्थ्यात्परिकल्प्यते
तदाधिकारिकं ज्ञेयमन्यत्प्रासङ्गिकं विदुः ३
कारणात्फलयोगस्य वृत्तं स्यादाधिकारिकम्
तस्योपकरणार्थं तु कीर्त्यते ह्यानुषङ्गिकम् ४
कवेः प्रयत्नान्नेतृणां युक्तानां विध्यपाश्रयात्
कल्प्यते हि फलप्राप्तिः समुत्कर्षात्फलस्य च ५
लौकिकी सुखदुःखाख्या यथावस्था रसोद्भवा
दशधा मन्मथावस्था व्यवस्थात्रिविधा मता ६
संसाध्ये फलयागे तु व्यापारः कारणस्य यः

तस्यानुपूर्व्या विज्ञेयाः पञ्चावस्थाः प्रयोक्तृभिः ७
प्रारम्भश्च प्रयत्नश्च तथा प्राप्तेश्च संभवः
नियता च फलप्राप्तिः फलयोगश्च पञ्चमः ८
औत्सुक्यमात्रबन्धस्तु यद्बीजस्य निबध्यते
महतः फलयोगस्य स फलारम्भ इष्यते ९
अपश्यतः फलप्राप्तिं व्यापारो यः फलं प्रति
परं चौत्सुक्यगमनं स प्रयत्नः प्रकीर्तितः १०
ईषत्प्राप्तिर्यदा काचित्फलस्य परिकल्पते
भावमात्रेण तं प्राहुर्विधिज्ञाः प्राप्तिसम्भवम् ११
नियतां तु फलप्राप्तिं यदा भावेन पश्यति
नियतां तां फलप्राप्तिं सगुणां परिचक्षते १२
अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम्
इतिवृत्ते भवेद्यस्मिन् फलयोगः प्रकीर्तितः १३
सर्वस्यैव हि कार्यस्य प्रारब्धस्य फलार्थिभिः
एतास्त्वनुक्रमेणैव पञ्चावस्था भवन्ति हि १४
आसां स्वभावभिन्नानां परस्परसमागमात्
विन्यास एकभावेन फलहेतुः प्रकीर्तितः १५
इति वृत्तं समाख्यातं प्रत्यगेवाधिकारिकम्
तदारम्भादि कर्तव्यं फलान्तं च यथा भवेत् १६
पूर्णसन्धि च कर्तव्यं हीनसन्ध्यपि वा पुनः
नियमात्पूर्णसन्धि स्याद्धीनसन्ध्यथ कारणात् १७
एकलोपे चतुर्थस्य द्विलोपे त्रिचतुर्थयोः
द्वितीयत्रिचतुर्थानां त्रिलोपे लोप इष्यते १८
प्रासङ्गिके परार्थत्वान्न ह्येष नियमो भवेत्
यद्वृत्तं सम्भवेत्तत्र तद्योज्यमविरोधतः १९
इतिवृत्ते यथावस्थाः पञ्चारम्भादिकाः स्मृताः

अर्थप्रकृतयः पञ्च तथा बीजादिका अपि २०
बीजं बिन्दुः पताका च प्रकरी कार्यमेव च
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि २१
स्वल्पमात्रं समुत्सृष्टं बहुधा यद्विसर्पति
फलावसानं यच्चैव बीजं तत्परिकीर्तितम् २२
प्रयोजनानां विच्छेदे यदविच्छेदकारणम्
यावत्समाप्तिर्बन्धस्य स बिन्दुः परिकीर्तितः २३
यद्वृत्तं तु परार्थं स्यात्प्रधानस्योपकारकम्
प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता २४
फलं प्रकल्प्यते यस्याः परार्थायैव केवलम्
अनुबन्धविहीनत्वात् प्रकरीत विनिर्दिशेत् २५
यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते
तदर्थो यः समारम्भस्तत्कार्यं परिकीर्तितम् २६
एतेषां यस्य येनार्थो यतश्च गुण इष्यते
तत्प्रधानं तु कर्तव्यं गुणभूतान्यतः परम् २७
एकोऽनेकोऽपि वा सन्धिः पताकायां तु यो भवेत्
प्रधानार्थानुयायित्वादनुसन्धिः प्रकीर्त्यते २८
आगर्भादाविमर्शाद्वा पताका विनिवर्तते
कस्माद्यस्मान्निबन्धोऽस्याः परार्थः परिकीर्त्यते
यत्रार्थे चिन्तितेऽन्यस्मिन्स्तल्लिङ्गोऽन्यः प्रयुज्यते
आगन्तुकेन भावेन पताकास्थानकं तु तत् ३०
सहसैवार्थसम्पत्तिर्गुणवत्युपकारतः
पताकास्थानकमिदं प्रथमं परिकीर्तितम् ३१
वचः सातिशयं श्लिष्टं काव्यबन्धसमाश्रयम्
पताकास्थानकमिदं द्वितीयं परिकीर्तितम् ३२
अर्थोपक्षेपणं यत्र लीनं सविनयं भवेत्

श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमिष्यते ३३
द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः
उपन्याससुयुक्तश्च तच्चतुर्थमुदाहृतम् ३४
यत्र सातिशयं वाक्यमर्थोपक्षेपणं भवेत्
विनाशिदृष्टमन्ते च पताकार्धं तु तद्भवेत् ३५
चतुष्पताकापरमं नाटके कार्यमिष्यते
पञ्चभिः सन्धिभिर्युक्तं तांश्च वक्ष्याम्यतः परम् ३६
मुखं प्रतिमुखं चैव गर्भो विमर्श एव च
तथा निर्वहणं चेति नाटके पञ्च सन्धयः ३७
पञ्चभिः सन्धिभिर्युक्तं प्रधानमनु कीर्त्यते
शेषाः प्रधानसन्धीनामनु ग्राह्यनुसन्धयः ३८
यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा
काव्ये शरीरानुगता तन्मुखं परिकीर्तितम् ३९
बीजस्योद्धाटनं यत्र दृष्टनष्टमिव क्वचित्
मुखन्यस्तस्य सर्वत्र तद्वै प्रतिमुखं स्मृतम् ४०
उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ४१
गर्भनिर्भिन्नबीजार्थो विलोभनकृतोऽथवा
क्रोधव्यसनजो वापि स विमर्श इति स्मृतः ४२
समानयनमर्थानां मुखाद्यानां सबीजिनाम्
नानाभावोत्तराणां यद्भवेन्निर्वहणं तु तत् ४३
एते तु सन्धयो ज्ञेया नाटकस्य प्रयोक्तृभिः
तथा प्रकरणस्यापि शेषाणां च निबोधत ४४
डिमः स्मवकारश्च चतुःसन्धी प्रकीर्तितौ
न तयोरवमर्शस्तु कर्तव्यः कविभिः सदा ४५
व्यायोगेहामृगौ चापि सदा कायौ त्रिसन्धिकौ

गर्भावमर्शौ न स्यातां तयोर्वृत्तिश्च कैशिकी ४६
द्विसन्धिस्तु प्रहसनं दीच्यङ्को भाण एव च
मुखनिर्वहणे तत्र कर्तव्ये कविभिः सदा ४७
वीथी चैव हि भाणश्च तथा प्रहसनं पुनः
कैशिकीवृत्तिहीनाति कार्याणि कविभिः सदा ४८
एवं हि सन्धयः कार्या दशरूपे प्रयोक्तृभिः
पुनरेषां तु सन्धीनामङ्गकल्पं निबोधत ४९
सन्धीनां यानि वृत्तानि प्रदेशेष्वनुपूर्वशः
स्वसम्पद्गुणयुक्तानि तान्यङ्गान्युपधारयेत् ५०
इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः
रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम् ५१
आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम्
अङ्गानां षड्विव ह्येतद्दृष्टं शास्त्रे प्रयोजनम् ५२
अङ्गहीनो नरो यद्वन्नैवारम्भ क्षमो भवेत्
अङ्गहीनं तथा काव्यं न प्रयोगक्षेमं भवेत् ५३
उदात्तमपि यत्काव्यं स्यादङ्गैः परिवर्जितम्
हीनत्वाद्धि प्रयोगस्य न सतां रञ्जयेन्मनः ५४
काव्यं यदपि हीनार्थं सम्यगङ्गैः समन्वितम्
दीप्तत्वात्तु प्रयोगस्य शोभामेति न संशयः ५५
तस्मात्सन्धिप्रदेशेषु यथायोगं यथारसम्
कविनाङ्गानि कार्याणि सम्यक्तानि निबोधत ५६
उपक्षेपः परिकरः परिन्यासो विलोभनम्
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ५७
उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे
तथा प्रतिमुखे चैव शृणुताङ्गानि नामतः ५८
विलासः परिसर्यश्च विधूतं तापनं तथा

नर्म नर्मद्युतिश्चैव तथा प्रगयणं पुनः ५९
निरोधश्चैव विज्ञेयः पर्युपासनमेव च
पुष्पं वज्रमुपन्यासो वर्णसंहार एव च ६०
एतानि वै प्रतिमुखे गर्भेऽङ्गानि निबोधत
अभूताहरणं मार्गो रूपोदाहरणे क्रमः ६१
संग्रहश्चानुमानं च प्रार्थनाक्षिप्तमेव च
तोटकाधिवले चैव ह्युद्वेगो विद्रवस्तथा ६२
एतान्यङ्गानि वै गर्भे ह्यवमर्शे निबोधत
अपवादश्च संफेटो विद्रवः शक्तिरेव च ६३
व्यवसायः प्रसङ्गश्च द्युतिः खेदो निषेधनम्
विरोधनमथादानं छादनं च प्ररोचना ६४
व्यवहारश्च युक्तिश्च विमर्शाङ्गान्यमूनि च
सन्धिर्निरोधो ग्रथनं निर्णयः परिभाषणम् ६५
द्युतिः प्रसाद आनन्दः समयो ह्युपगूहनम्
भाषणं पूर्ववाक्यं च काव्यसंहार एव च ६६
प्रशस्तिरिति सहारे ज्ञेयान्यङ्गानि नामतः
चतुष्षष्ठि बुधैर्ज्ञेयान्येतान्यङ्गानि सन्धिषु ६७
संपादनार्थं बीजस्य सम्यक् सिद्धिकराणि च
कार्याण्येतानि कविभिर्विभज्यार्थानि नाटके ६८
पुनरेषां प्रवक्ष्यामि लक्षणानि यथाक्रमम्
काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ६९
यदुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरस्तु सः
तन्निष्पत्तिः परिन्यासो विज्ञेयः कविभिः सदा
गुणनिर्वर्णनं चैव विलोभनमिति स्मृतम्
संप्रधारणमर्थानां युक्तिरित्यभिधीयते ७१
जाभिगमनं प्राप्तिरित्यभिसंज्ञिता

बीजर्थस्योपगमनं समाधानमिति स्मृतम्  ७२
सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम्
कुतूहलोत्तरावेयो विज्ञेया परिभावना  ७३
बीजार्थस्य प्रहोहो यः स उद्भेद इति स्मृतः
प्रकृतार्थसमारम्भः करणं नाम तद्भवेत्  ७४
संघातभेदनार्थो यः स भेद इति कीर्तितः
एतानि तु मुखाङ्गानि वक्ष्ये प्रतिमुखे पुनः  ७५
समीहा रतिभोगार्थो विलास इति संज्ञितः
दृष्टनष्टानुसरणं परिसर्प इति स्मृतः  ७६
कृतस्यानुनयस्यादौ विद्युतं ह्यपरिग्रहः
अपायदर्शनं यत्तु तापनं नाम तद्भवेत्  ७७
क्रीडार्थं विहितं यत्तु हास्यं नर्मेति तत्स्मृतम्
दोषप्रच्छादनार्थं तु हास्यं नर्मद्युतिः स्मृता  ७८
उत्तरोत्तरवाक्यं तु भवेत्प्रगयणं पुनः
या तु व्यसनसंप्राप्तिः स निरोधः प्रकीर्तितः  ७९
क्रुद्धस्यानुनयो यस्तु भवेत्तत्पर्युपासनम्
विशेषवचनं यत्तु तत्पुष्पमिति संज्ञितम्  ८०
प्रत्यक्षरूक्षं यद्वाक्यं वज्रं तदभिधीयते
उपपत्तिकृतो योऽर्थ उपन्यासश्च स स्मृतः  ८१
चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते
कपटापाश्रयं वाक्यमभूताहरणं विदुः  ८२
तत्त्वार्थवचनं चैव मार्ग इत्यभिधीयते
चित्रार्थसमवाये तु वितर्को रूपमिष्यते  ८३
यत्सातिशयवद्वाक्यं तदुदाहरणं स्मृतम्
भावतत्त्वोपलब्धिस्तु क्रम इत्यभिधीयते  ८४
सामदानादिसंपन्नः संग्रहः परिकीर्तितः

रूपानुरूपगमनमनुमानमिति स्मृतम् ८५
रतिहर्षोत्सवानां तु प्रार्थना प्रार्थना भवेत्
गर्भस्योद्भेदनं यत्साद्विप्तिरित्यभिधीयते ८६
संरम्भवचनं चैव तोटकं त्विति संज्ञितम्
कपटेनातिसन्धानं ब्रुवतेऽधिवलं बुधाः ८७
भयं नृपारिदस्यूत्थमुद्वेगः परिकीर्तितः
शङ्का भयत्रासकृतो विद्रयः सुमुदाहृतः ८८
दोषप्रख्यापमं यत्तु सोऽपवाद इति स्मृतः
रोषग्रथितवाक्यं तु संफेटः परिकीर्तितः ८९
गुरुव्यतिक्रमो यस्तु स द्रवः परिकीर्तितः
विरोधिप्रशमो यश्च सा शक्तिः परिकीर्तिता ९०
व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसंभवः
प्रसङ्गश्चैव विज्ञेयो गुरुणा परिकीर्तनम् ९१
वाक्यमाधर्षासंयुक्तं द्युतिस्तज्ज्ञैरुदाहृया
मनश्चेष्टाविनिष्पन्नः श्रमः खेद उदाहृतः ९२
ईप्सितार्थप्रतीघातः प्रतिषेधः प्रकीर्तितः
कार्यात्यग्रोपगमनं विरोधनमिति स्मृतम् ९३
बीजकार्योपगमनमादानमिति संज्ञितम्
अपमानकृतं वाक्यं कार्यार्थे च्छादनं भवेत् ९४
प्ररोचना च विज्ञेया संहारार्थप्रदर्शिनी
प्रत्यक्षवचनं यत्तु स व्याहार इति स्मृतः ९५
सविच्छेदं वचो यत्र सा युक्तिरिति संज्ञिता
ज्ञेया विचलना तज्ज्ञैरवमानाथसंयुता ९६
एतान्यवमृशेऽङ्गानि संहारे तु निबोधत
मुखबीजोपगमनं सन्धिरित्यभिधीयते ९७
कार्यस्यान्वेषणं युक्त्या निरोध इति कीर्तितः

उपक्षेपस्तु कार्याणां ग्रथनं परिकीर्तितम् ९८
अनुभूतार्थकथनं निर्णयः समुदाहृतः
परिवादकृतं यत्स्यात्तदाहुः परिभाषणम् ९९
लब्धस्यार्थस्य शमनं द्युतिमाचक्षते पुनः
समागमस्तथार्थानामानन्दः परिकीर्तितः १००
दुःखस्यापगमो यस्तु सभयः स निगद्यते
शुश्रूषाद्युपसंपन्नः प्रसादः प्रतिरुच्यते १०१
अद्भुतस्य तु संप्राप्तिरूपगूहनमिष्यते
सामदानादिसंपन्नं भाषणं समुदाहृतम् १०२
पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थप्रदर्शनम्
वरप्रदानसंप्राप्तिः काव्यसंहार इष्यते १०३
नृपदेशप्रशान्तिश्च प्रशस्तिरभिधीयते
यथासन्धि तु कर्तव्यान्येतान्यङ्गानि नाटके १०४
कविभिः काव्यकुशलैः रसभावमपेक्ष्य तु
संमिश्राणि कदाचित्तु द्वित्रियोगेन वा पुनः १०५
ज्ञात्वा कार्यमवस्थां च कार्याण्याङ्गानि सन्धिषु
एतेषामेव चाङ्गानां सबद्धान्यर्थयुक्तितः १०६
सन्ध्यन्तराणि सन्धीनां विशेषास्त्वेकविंशतिः
साम भेदस्तथा दण्डः प्रदानं वध एव च १०७
प्रत्युत्पन्ममतित्वं च गोत्रस्खलितमेव च
साहसं च भयं चैव ह्रीर्माया क्रोध एव च १०८
ओजः संवरणं भ्रान्तिस्तथा हेत्वपधारणम्
दूतो लेखस्तथा स्वप्नश्चित्रं मद इति स्मृतम् १०९
विष्कम्भश्चूलिकाश्चैव तथा चैव प्रवेशकः
अङ्कावतारोऽङ्कमुखमर्योपक्षेपपञ्चकम् ११०
मध्यमपुरुषनियोज्यो नाटकमुखसन्धिमात्रसंचारः

विष्कम्भकस्तु कार्यः पुरोहितामात्यकञ्चुकिभिः १११
शुद्धः संकीर्णो वा द्विविधो विष्कम्भकस्तु विज्ञेयः
मध्यमपात्रैः शुद्धः संकीर्णो नीचमध्यकृतः ११२
अन्तर्यवनिकासंस्थैः सूतादिभिरनेकधा
अर्थोपक्षेपणं यत्तु क्रियते सा हि चूलिका ११३
अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम्
प्रकरणनाटकविषये प्रवेशको नाम विज्ञेयः ११४
अङ्कान्त एव चाङ्को निपतति यस्मिन् प्रयोगमासाद्य
बीजार्थयुक्तियुक्तो ज्ञेयो ह्यङ्कावतारोऽसौ ११५
विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा
यदुपक्षिप्यते पूर्वं तदङ्कमुखमुच्यते ११६
अन्यान्यपि लास्यविधावङ्गानि तु नाटकोपयोगीनि
अस्माद्विनिःसृतानि तु भाण इवैकप्रयोज्यानि ११७
भाणाकृतिवल्लास्यं विज्ञेयं त्वेकपात्रहार्यं वा
प्रकरणवदूह्य कार्यासंस्तवयुक्तं विविधभावम् ११८
गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका
प्रच्छेदकं त्रिमूढं च सैन्धवाख्यं द्विमूढकम् ११९
उत्तमोत्तमकं चैवमुक्तप्रत्युक्तमेव च
लास्ये दशविधं ह्येतदङ्गनिर्देशलक्षणम् १२०
आसनेषूपविष्टैर्यत्तन्त्रीभाण्डोपबृंहितम्
गायनैर्गीयते शुष्कं तद्गेयपदमुच्यते १२१
या नृत्यत्यासना नारी गेयं प्रियगुणान्वितम्
साङ्गोपाङ्गविधानेन तद्गेयपदमुच्यते १२२
प्राकृतं यद्वियुक्ता तु पठेदात्तरसं स्थिता
मदनानलतप्ताङ्गीः स्थितपाठ्यं तदुच्यते १२३
बहुचारीसमायुक्तं पञ्चपाणिकलानुगम्

चञ्चत्पुटेन वा युक्तं स्थितपाठ्यं विधीयते १२४
आसीनमास्यते यत्र सर्वातोद्यविवर्जितम्
अप्रसारितगात्रं च चिन्ताशोकसमन्वितम् १२५
वृत्तानि विविधानि स्युर्गेयं गाने च संश्रितम्
चेष्टाभिश्चाश्रयः पुंसां यत्र सा पुष्पगण्डिका १२६
यत्र स्त्री नरवेषेण ललितं संस्कृतं पठेत्
सखीनां तु विनोदाय सा ज्ञेया पुष्पगण्डिका १२७
नृत्तं तु विविधं यत्र गीतं चातोद्यसंयुतम्
स्त्रियः पुंवच्च चेष्टान्ते सा ज्ञेया पुष्पगण्डिका १२८
प्रच्छेदकः स विज्ञेयो यत्र चन्द्रातपाहतः
स्त्रियः प्रियेषु सज्जन्ते ह्यपि विप्रियकारिषु १२९
अनिष्ठुरश्लक्ष्णपदं समवृत्तैरलङ्कृतम्
नाट्यं पुरुषभावाढ्यं त्रिमूढकमिति स्मृतम् १३०
पात्रं विभ्रष्टसङ्केतं सुव्यक्तकरणान्वितम्
प्राकृतैर्वचनैर्युक्तं विदुः सैन्धवकं बुधाः १३१
रूपवाद्यादिसंयुक्तं पाठ्येन च विवर्जितम्
नाट्यं हि तत्तु विज्ञेयं सैन्धवं नाट्यकोविदैः १३२
मुखप्रतिमुखोपेतं चतुरश्रपदक्रमम्
श्लिष्टभावरसोपेतं वैचित्र्यार्थं द्विमूढके १३३
उत्तमोत्तमकं विद्यादनेकरससंश्रयम्
विचित्रैः श्लोकबन्धैश्च हेलाहावविचित्रितम् १३४
कोपप्रसादजनितं साधिक्षेपपदाश्रयम्
उक्तप्रत्युक्तमेवं स्याच्चित्रगीतार्थयोजितम् १३५
यत्र प्रियाकृतिं दृष्ट्वा विनोदयति मानसम्
मदनानल तप्ताङ्गी तच्चित्रपदमुच्यते १३६
दृष्ट्वा स्वप्ने प्रियं यत्र मदनानलतापिता

करोति विविधान् भावांस्तद्वै भाविकमुच्यते १३७
एतेषां लास्यविधौ विज्ञेयं लक्षणं प्रयोगज्ञैः
तदिहैव तु यन्नौक्तं प्रसङ्गविनिवृत्तहेतोस्तु १३८
पञ्चसन्धि चतुर्वृत्ति चतुःषष्टयङ्गसंयुतम्
षट्त्रिंशल्लक्षणोपेतं गुणालङ्कारभूषितम् १३९
महारसं महाभोगमुदात्तवचनान्वितम्
महापुरुषसंचारं साध्वाचार जनप्रियम् १४०
सुश्लिष्टसन्धिसंयोगं सुप्रयोगं सुखाश्रयम्
मुदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् १४१
अवस्था या तु लोकस्य सुखदुःखसमुद्भवा
नानापुरुषसंचारा नाटकेऽसौ विधीयते १४२
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला
न तत् कर्म न वा योगो नाटयेऽस्मिन्यन्न दृश्यते १४३
योऽयं स्वभावो लोकस्य नानावस्थान्तरात्मकः
सोऽङ्गाद्यभिनयैर्युक्तो नाटयमित्यभिधीयते १४४
देवतानामृषीणां च राज्ञां चोत्कृष्टमेधसाम्
पूर्ववृत्तानुचरितं नाटकं नाम तद्भवेत् १४५
यस्मात् स्वभावं संत्यज्य साङ्गोपाङ्गगतिक्रमैः
प्रयुज्यते ज्ञायते च तस्माद्वै नाटकं स्मृतम् १४६
सर्वभावैः सर्वरसैः सर्वकर्मप्रवृत्तिभिः
नानावस्थान्तरोपेतं नाटकं संविधीयते १४७
अनेकशिल्पजातानि नैककर्मक्रियाणि च
तान्यशेषाणि रूपाणि कर्तव्यानि प्रयोक्तृभिः १४८
लोकस्वभावं संप्रेक्ष्य नराणां च बलाबलम्
संभोगं चैव युक्तिं च ततः कार्यं तु नाटकम् १४९
भविष्यति युगे प्रायो भविष्यन्त्यबुधा नराः

ये चापि हि भविष्यन्ति ते यत्नश्रुतबुद्धयः १५०
कर्मशिल्पानि शास्त्राणि विचक्षणबलानि च
सर्वाण्येतानि नश्यन्ति यदा लोकः प्रणश्यति १५१
तदेवं लोकभाषाणां प्रसमीक्ष्य बलाबलम्
मृदुशब्दं सुखार्थं च कविः कुर्यात्तु नाटकम् १५२
चैक्रीडिताद्यैः शब्दैस्तु काव्यबन्धा भवन्ति ये
वेश्या इव न ते भान्ति कमण्डलुधरैर्द्विजैः १५३
दशरूपविधानं च मया प्रोक्तं द्विजोत्तमाः
अतः परं प्रवक्ष्यामि वृत्तीनामिह लक्षणम् १५४

इति भरतीये नाट्यशास्त्रे सन्धिनिरूपणं
नामाध्यायो एकोनविंशः

## विंशोऽध्यायः

समुत्थानं तु वृत्तीनां व्याख्यास्याम्यनुपूर्वशः
यथा वस्तूद्भवं चैव काव्यानां च विकल्पनम् १
एकार्णवं जगत्कृत्वा भगवानच्युतो यदा
शेते स्म नागपर्यङ्के लोकान् संक्षिप्य मायया २
अथ वीर्यवलोन्मत्तावसुरौ मधुकैटभौ
तर्जयामासतुर्देवं तरसा युद्धकाङ्क्षया ३
निजबाहू विमृद्नन्तौ मूतभावनमक्षयम्
जानुभिर्मुष्टिभिश्चैव योधयामासतुः प्रभुम् ४
बहुभिः परुषैर्वाक्यैरन्योन्यसमभिद्रवम्
नानाधिक्षेपवचनैः कम्पयन्ताविवोदधिम् ५
तयोर्नानाप्रकाराणि वचांसि वदतोस्तदा
श्रुत्वा त्वभिहतमना द्रुहिणो वाक्यमब्रवीत् ६
किमिदं भारतीवृत्तिर्वाग्भिरेव प्रवर्तते

उत्तरोत्तरसंबद्धा नन्विमौ निधनं नय ७
पितामहवचः श्रुत्वा प्रोवाच मधुसूदनः
कार्यहोतोर्मया ब्रह्मन् भारतीयं विनिर्मिता ८
वदतां वाक्यभूयिष्ठा भारतीयं भविष्यति
तस्मादेतौ निहन्म्यद्येत्युवाच वचनं हरिः ९
शुद्धैरविकृतैरङ्गैः साङ्गहारैस्तथा भृशम्
योधयामासतुर्दैत्यौ युद्धमार्गविशारदौ १०
भूमिसंयोगसंस्थानैः पदन्यासैर्हरेस्तदा
अतिभारोऽभवद्भूमेर्भारती तत्र निर्मिता ११
वल्गितैः शार्ङ्गधनुषस्तीव्रैर्दीप्ततरैरथ
सत्त्वाधिकैरसंभ्रान्तैः सात्त्वती तत्र निर्मिता १२
विचित्रैरङ्गहारैस्तु देवो लीलासमन्वितैः
बबन्ध यच्छिखापाशं कैशिकी तत्र निर्मिता १३
संरम्भावेगबहुलैर्नानाचारी समुत्थितैः
नियुद्धकरणैश्चित्रैरुत्पन्नारभटी ततः १४
यां यां देवः समाचष्टे क्रियां वृत्तिषु संस्थिताम्
तां तदर्थानुगैर्जप्यैर्द्रुहिणः प्रत्यपूजयत् १५
यदा हतौ तावसुरौ हरिणा मधुकैटभौ
ततोऽब्रवीत्पद्मयोनिर्नारायणमरिन्दमम् १६
अहो विचित्रैर्विषमैः स्फुटैः सललितैरपि
अङ्गहारैः कृतं देव त्वया दानवनाशनम् १७
तस्मादयं हि लोकस्य नियुद्धसमयक्रमः
सर्वशस्त्रविमोक्षेषु न्यायसंज्ञो भविष्यति १८
न्यायाश्रितैरङ्गहारैर्न्यायाच्चैव समुत्थितैः
यस्माद्युद्धानि वर्तन्ते तस्मान्न्यायाः प्रकीर्तिताः १९
चारीषु च समुत्पन्नो नानाचारीसमाश्रयः

न्यायसंज्ञः कृतो ह्येष द्रुहिणेन महात्मना २०
ततो वेदेषु निक्षिप्ता द्रुहिणेन महात्मना
पुनरिष्वस्त्रजाते च नानाचारीसमाकुले २१
पुनर्नाट्यप्रयोगेषु नानाभावसमन्विताः
वृत्तिसंज्ञाः कृता ह्येताः काव्यबन्धसमाश्रयाः २२
चरितैर्यस्य देवस्य जप्यं यद्यादृशं कृतम्
ऋषिभिस्तादृशी वृत्तिः कृता पाठ्यादिसंयुता २३
नाट्यवेदसमुत्पन्ना वागङ्गाभिनयात्मिका
मया काव्यक्रियाहेतोः प्रक्षिप्ता द्रुहिणाज्ञया २४
ऋग्वेदाद्भारती क्षिप्ता यजुर्वेदाच्च सात्त्वती
कैशिकी सामवेदाच्च शेषा चाथर्वणादपि २५
या वाक्प्रधाना पुरुषप्रयोज्या
स्त्रीवर्जिता संस्कृतपाठ्य युक्ता
स्वनामधेयैर्भरतैः प्रयुक्ता
सा भारती नाम भवेत्तु वृत्तिः २६
भेदास्स्तस्यास्तु विज्ञेयाश्चत्वारोऽङ्गत्वमागताः
प्ररोचनामुखं चैव वीथी प्रहसनं तथा २७
जयाभ्युदयिनी चैव मङ्गल्या विजयानहा
सर्वपापप्रशमनी पूर्वरङ्गे प्ररोचना २८
उपक्षेपेण काव्यस्य हेतुयुक्तिसमाश्रया
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना २९
नटी विदूषको वापि पारिपार्श्विक एव वा
सूत्रधारेण सहिताः संलापं यत्तु कुर्वते ३०
चित्रैर्वाक्यैः स्वकार्योत्थैर्वीथ्यङ्गैरन्यथापि वा
आमुखं तत्तु विज्ञेयं बुधैः प्रस्तावनापि वा ३१
लक्षणं पूर्वमुक्तं तु वीथ्याः प्रहसनस्य च

आमुखाङ्गान्यतो वक्ष्ये यथावदनुपूर्वशः ३२
उद्धात्यकः कथोद्धातः प्रयोमातिशयस्तथा
प्रवृत्तकावलगिते पञ्चाङ्गान्यामुखस्य तु ३३
उद्धात्यकावलगितलक्षणं कथितं मया
शेषाणां लक्षणं विप्रा व्याख्यास्याम्यनुपूर्वशः ३४
सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा
गृहीत्वा प्रविशेत्पात्रं कथोद्धातः स कीर्तितः ३५
प्रयोगे तु प्रयोगं तु सूत्रधारः प्रयोजयेत्
ततश्च प्रविशेत्पात्रं प्रयोगातिशयो हि सः ३६
कालप्रवृत्तिमाश्रित्य वर्णना या प्रयुज्यते
तदाश्रयाच्च पात्रस्य प्रवेशस्तत्प्रवृत्तकम् ३७
एषामन्यतमं श्लिष्टं योजयित्वार्थयुक्तिभिः
तस्मादङ्गद्वयस्यापि सम्भवो न निवार्यते ३८
पात्रग्रन्थैरसंबाधं प्रकुर्यादामुखं ततः
एवमेतद्बुधैर्ज्ञेयमामुखं विविधाश्रयम् ३९
लक्षणं पूर्वमुक्तं तु वीथ्याः प्रहसनस्य च
इत्यष्टार्धविकल्पा वृत्तिरियं भारती मयाभिहिता
सात्त्वत्यास्तु विधानं लक्षणयुक्त्या प्रवक्ष्यामि ४०
या सात्त्वतेनेह गुणेन युक्ता
न्यायेन वृत्तेन समन्विता च
हर्षोत्कटा संहृतशोकभावा
सा सात्त्वती नाम भवेत्तु वृत्तिः ४१
वागङ्गाभिनयवती सत्त्वोत्थानवचनप्रकरणेषु
सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वती वृत्तिः ४२
वीराद्भुतरौद्ररसा निरस्तशृङ्गारकरुणनिर्वेदा
उद्धतपुरुषप्राया परस्पराघर्षणकृता च ४३

उत्थापकश्च परिवर्तकश्च सल्लापकश्च संघात्यः
चत्वारोऽस्या भेदा विज्ञेया नाट्यतत्त्वज्ञैः ४४
अहमप्युत्थास्यामि त्वं तावद्दर्शयात्मनः शक्तिम्
इति संघर्षसमुत्थस्तज्ज्ञैरुत्थापको ज्ञेयः ४५
उत्थानसमारब्धानर्थानुत्सृज्य योऽर्थयोगवशात्
अन्यानर्थान् भजते स चापि परिवर्तको ज्ञेयः ४६
निर्दिष्टवस्तुविषयः प्रपञ्चबद्धस्त्रिहास्यसंयुक्तः
संघर्षविशेषकृतस्त्रिविधः परिवर्तको ज्ञेयः ४७
साधर्षजो निराधर्षजोऽपि वा रागवचनसंयुक्तः
साधिक्षेपालापो ज्ञेयः सल्लापकः सोऽपि ४८
धर्माधर्मसमुत्थं यत्र भवेद्रागदोषसंयुक्तम्
साधिक्षेपं च वचो ज्ञेयः संलापको नाम ४९
मन्त्रार्थवाक्यशक्त्या दैववशादात्मदोषयोगाद्वा
संघातभेदजननस्तज्ज्ञैः संघात्यको ज्ञेयः ५०
बहुकपटसंश्रयाणां परोपघाताशयप्रयुक्तानाम्
कूटानां संघातो विज्ञेयः कूटसंघात्यः ५१
इत्यष्टार्धविकल्पा वृत्तिरियं सात्त्वती मयाभिहिता
कैशिक्यास्त्वथ लक्षणमतः परं सम्प्रवक्ष्यामि ५२
या श्लक्ष्णनैपथ्यविशेषचित्रा
स्त्रीसंयुता या बहुनृत्तगीता
कामोपभोगप्रभवोपचारा
तां कैशिकीं वृत्तिमुदाहरन्ति ५३
बहुवाद्यनृत्तगीता शृङ्गाराभिनयचित्रनैपथ्या
माल्यालङ्कारयुता प्रशस्तवेषा च कान्ता च ५४
चित्रपदवाक्यबन्धैरलङ्कृता हसितरुदितरोषाद्यैः
स्त्रीपुरुषकामयुक्ता विज्ञेया कैशिकीवृत्तिः ५५

नर्म च नर्मस्फुञ्जो नर्मस्फोटोऽथ नर्मगर्भश्च
कैशिक्याश्चत्वारो भेदा ह्येते समाख्याताः ५६
आस्थापितशृङ्गारं विशुद्धकरणं निवृत्तवीररसम्
हास्यप्रवचनबहुलं नर्म त्रिविधं विजानीयात् ५७
ईर्ष्याक्रोधप्रायं सोपालम्भकरणानुविद्धं च
आत्मोपक्षेपकृतं सविप्रलम्भं स्मृतं नर्म ५८
नवसङ्गमसम्भोगो रति समुदयवेषवाक्यसंयुक्तः
ज्ञेयो नर्मस्फुञ्जो ह्यवसानभयात्मकश्चैव ५९
विविधानां भावानां लवैर्लवैर्भूषितो बहुविशेषैः
असमग्राक्षिप्तरसो नर्मस्फोटस्तु विज्ञेयः ६०
विज्ञानरूपशोभाधनादिभिर्नायको गुणैर्यत्र
प्रच्छन्नं व्यवहरते कार्यव्रशान्नर्मगर्भोऽसौ ६१
पूर्वस्थितौ विपद्येत नायको यत्र चापरस्तिष्ठेत्
तमपीह नर्मगर्भं विद्यान् नाट्यप्रयोगेषु ६२
इत्यष्टार्धविकल्पा वृत्तिरियं कैशिकी मयाभिहिता
अत ऊर्ध्वमुद्धतरसामारभटीं संप्रवक्ष्यामि ६३
आरभटप्रायगुणा तथैव बहुकपटवञ्चनोपेता
दम्भानृतवचनवती त्वारभटी नाम विज्ञेया ६४
पुस्तावपात प्लुतलङ्घितानि
च्छेद्यानि मायाकृतमिन्द्रजालम्
चित्राणि युद्धानि च यत्र नित्यं
तां तादृशीमारभटीं वदन्ति ६५
षाड्गुण्यसमारब्धा हठातिसन्धानविद्रवोपेता
लाभालाभार्थकृता विज्ञेया वृत्तिरारभटी ६६
संक्षिप्तकावपातौ वस्तूत्थापनमथापि संफेटः
एते ह्यस्या भेदा लक्षणमेषां प्रवक्ष्यामि ६७

अन्वर्थशिल्पयुक्तो बहुपुस्तोत्थानचित्रनेपथ्यः
संक्षिप्तवस्तुविषयो ज्ञेयः संक्षिप्तको नाम ६८
भयहर्षसमुत्थानं विद्रवविनिपातसंभ्रमाचरणम्
क्षिप्रप्रवेशनिर्गममवपातमिमं विजानीयात् ६९
सर्वरससमासकृतं सविद्रवाविद्रवाश्रयं वापि
नाट्यं विभाव्यते यत्तद्वस्तूत्थापनं ज्ञेयम् ७०
संरम्भसंप्रयुक्तो बहुयुद्धनियुद्धकपटनिर्भेदः
शस्त्रप्रहारबहुलः सम्फेटो नाम विज्ञेयः ७१
एवमेता बुधैर्ज्ञेया वृत्तयो नाट्यसंश्रयाः
रसप्रयोगमासां च कीर्त्यमानं निबोधत ७२
हास्यशृङ्गारबहुला कैशिकी परिचक्षिता
सात्त्वती चापि विज्ञेया वीराद्भुतशमाश्रया ७३
रौद्रे भयानके चैव विज्ञेयारभटी बुधैः
बीभत्से करुणे चैव भारती संप्रकीर्तिता ७४
न ह्येकरसजं काव्यं किंचिदस्ति प्रयोगतः
भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव वा ७५
सर्वेषां समवेतानां यस्य रूपं भवेद्बहु
स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणः स्मृताः ७६
वृत्यन्त एषोऽभिनयो मयोक्तो
वागङ्गसत्त्वप्रभवो यथावत्
आहार्यमेवाभिनयं प्रयोगे
वक्ष्यामि नेपथ्यकृतं तु भूयः ७७

इति भरतीये नाट्यशास्त्रे वृत्तिविकल्पनं नामाध्यायो विंशः

## एकविंशोऽध्यायः

आहार्याभिनयं विप्रा व्याख्यास्याम्यनुपूर्वशः

यस्मात्प्रयोगः सर्वोऽयमाहार्याभिनये स्थितः १
नानावस्थाः प्रकृतयः पूर्वं नैपथ्यसाधिताः
अङ्गादिभिरभिव्यक्तिमुपगच्छन्त्ययत्नतः २
आहायाभिनयो नाम ज्ञेयो नेपथ्यजो विधिः
तत्र कार्यः प्रयत्नस्तु नाटचस्य शुभमिच्छता ३
तस्मिन्यत्नस्तु कर्तव्यो नैपथ्ये सिद्धिमिच्छता
नाटचस्येह त्वलङ्कारो नैपथ्यं यत्प्रकीर्तितम् ४
चतुर्विधं तु नेपथ्यं पुस्तोऽलङ्कार एव च
तथाङ्गरचना चैव ज्ञेयं सञ्जीवमेव च ५
पुस्तस्तु त्रिविधो ज्ञेयो नानारूपप्रमाणतः
सन्धोमो व्याजिमश्चैव वेष्टिमश्च प्रकीर्तितः ६
किलिञ्जचर्मवस्त्राद्यैर्यद्रूपं क्रियते बुधैः
सन्धिमो नाम विज्ञेयः पुस्तो नाटकसंश्रयः ७
व्याजिमो नाम विज्ञेयो यन्त्रेण क्रियते तु यः
वेष्टचते चैव यद्रूपं वेष्टिमः स तु संज्ञितः ८
शैलयानविमानानि चर्मवर्मष्वजा नगाः
अलङ्कारस्तु विज्ञेयो माल्याभरणवाससाम्
नानाविधः समायोगोप्यङ्गोपाङ्गविधिः स्मृतः १०
वेष्टिमं विततं चैव संघात्यं ग्रन्थिमं तथा
प्रालम्बितं तथा चैव माल्यं पञ्चविधं स्मृतम् ११
चतुर्विधं तु विज्ञेयं नाटचे ह्याभिरणं बुधैः
आवेध्यं बन्धनीयं च क्षेप्यमारोप्यमेव च १२
आवेध्यं कुण्डलादीह यत्स्याच्छ्रवणभूषणम्
आरोप्यं हेमसूत्रादि हाराश्च विविधाश्रयाः १३
श्रोणीसूत्राङ्गदे मुक्ताबन्धनीयानि सर्वदा
प्रक्षेप्यं नूपुरं विद्याद्वस्त्राभरणमेव च १४

भूषणानां विकल्पं हि पुरुषस्त्रीसमाश्रयम्
नानाविधं प्रवक्ष्यामि देशजातिसमुद्भवम्  १५
चूडामणिः समकुटः शिरसो भूषणं स्मृतम्
कुण्डलं मोचकं कीलः कर्णाभरणमिष्यने  १६
मुक्तावली हर्षकं च सूत्रकं कण्ठभूषणम्
वेतिकाङ्गुलिमुद्रा च स्यादङ्गुलिविभूषणम्  १७
हस्तली वलयं चैव बाहुनालीविभूषणम्
रुचकश्चूलिका कार्या मणिबन्धविभूषणम्  १८
केयूरे अङ्गदे चैव कूर्परोपरि भूषणम्
त्रिसरश्चैव हारश्च तथा वक्षोविभूषणम्  १९
व्यालम्बमौक्तिको हारो माला चैवाङ्गभूषणम्
तलकं सूत्रकं चैव भवेत्कटिविभूषणम्  २०
अयं पुरुषनिर्योगः कार्यस्त्वाभरणाश्रयः
देवानां पार्थिवानां च पुनर्वक्ष्यामि योषिताम्  २१
शिखापाशं शिखाव्यालः पिण्डीपत्रं तथैव च
चूडामणिर्मकरिका मुक्ताजालगवाक्षिकम्  २२
शिरसो भूषणं चैव विचित्रं शीर्षजोलकम्
कण्डकं शिखिपत्रं च वेणीपुच्छः सदोरकः  २३
ललाटतिलकं चैव नाना शिल्पप्रयोजितम्
भ्रूगुच्छोपरिगुच्छश्च कुसुमानुकृतिस्तथा  २४
कर्णिका कर्णवलयं तथा स्यात्पत्रकर्णिका
कुण्डलं कर्णमुद्रा च कर्णोत्कीलकमेव च  २५
नानारत्नविचित्राणि दन्तपत्राणि चैव हि
कर्णयोर्भूषणं ह्येतत्कर्णपूरस्तथैव च  २६
तिलकाः पत्रलेखाश्च भवेद्गण्डविभूषणम्
त्रिवर्णी चैव विज्ञेयं भवेद्वक्षोविभूषणम्  २७

नेत्रयोरञ्जनं ज्ञेयमधरस्य च रञ्जनम्
दन्तानां विविधो रागश्चतुर्णां शुक्लतापि वा २८
रागान्तरविकल्पोऽथ शोभनेनाधिकोज्ज्वलः
मुग्धानां सुन्दरीणां च मुक्ताभासितशोभनाः २९
सुरक्ता वापि दन्ताः स्युः पद्मपल्लवरञ्जनाः
अश्मरागोद्द्योतितः स्यादधरः पल्लवप्रभः ३०
विलासश्च भवेत्तासां सविभ्रान्तनिरीक्षितम्
मुक्तावली व्यालपङ्क्तिर्मञ्जरी रत्नमालिका ३१
रत्नावली सूत्रकं च ज्ञेयं कण्ठविभूषणम्
द्विसरस्त्रिसरश्चैव चतुस्सरकमेव च ३२
तथा शृङ्खलिका चैव भवेत्कण्ठविभूषणम्
अङ्गदं वलयं चैव बाहुमूलविभूषणम् ३३
नाना शिल्पकृताश्चैव हारा वक्षोविभूषणम्
मणिजालावनद्धं च भवेत् स्तनविभूषणम् ३४
खर्जूरकं सोच्छितिकं बाहुनालीविभूषणम्
कलापी कटकं शङ्खो हस्तपत्रं सपूरकम् ३५
मुद्राङ्गुलीयकं चैव ह्यङ्गुलीनां विभूषणम्
मुक्ताजालाढ्यतलकं मेखला काञ्चिकापि दा ३६
रशना च कलापश्च भवेच्छ्छ्रोणीविभूषणम्
एकयष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिका ३७
द्विरष्टयष्टी रशना कलापः पञ्चविंशकः
द्वात्रिंशच्च चतुःषष्टिः शतमष्टोत्तरं तथा ३८
मुक्ताहारा भबन्त्येते देवपार्थिवयोषिताम्
नूपुरः किङ्किणीकाश्च घण्टिका रत्नजालकम् ३९
सघोषे कटके चैव गुल्फोपरिविभूषणम्
जङ्घयोः पादपत्रं स्यादङ्गुलीष्वङ्गुलीयकम् ४०

अङ्गुष्ठतिलकाश्चैव पादयोश्च विभूषणम्
तथालक्तकरागश्च नानाभक्तिनिवेशितः ४१
अशोकपल्लवच्छायः स्यात्स्वाभाविक एव च
एतद्विभूषणं नार्या आकेशादानखादपि ४२
यथाभावरसावस्थं विज्ञेयं द्विजसत्तमाः
आगमश्च प्रमाणं च रूपनिर्वर्णनं तथा ४३
विश्वकर्म मतात्कार्यं सुबुद्धयापि प्रयोक्तृभिः
न हि शक्यं सुवर्णेन मुक्ताभिर्मणिभिस्तथा ४४
स्वाधीनमिति रुच्यैव कर्तुमङ्गस्य भूषणम्
विभागतोऽभिप्रयुक्तमङ्गशोभाकरं भवेत् ४५
यथा स्थानान्तरगतं भूषणं रत्नसंयुतम्
न तु नाट्यप्रयोगे तु कर्तव्यं भूषणं बहु ४६
खेदं जनयते तद्धि सव्यायतविचेष्टनात्
गुरुभावावसन्नस्य स्वेदो मूर्छा च जायते ४७
गुर्वाभरणसन्नो हि चेष्टां न कुरुते पुनः
तस्मात्तनुत्वचकृतं सौवर्णं भूषणं भवेत् ४८
रत्नवज्रतुबद्धं वा न खेदजननं भवेत्
स्वेच्छया भूषणविधिर्दिव्यानामुपदिश्यते ४९
यत्नभावविनिष्पन्नं मानुषाणां विभूषणम्
वेष्टितं विततं चैव सङ्घात्य ग्रन्थिमं तथा ५०
लम्बशोभि तथा चैव माल्यं पञ्चविधं स्मृतम्
आच्छादनं बहुविधं नानापत्तनसंभवम् ५१
तज्ज्ञेयं त्रिप्रकारं तु शुद्धं रक्तं विचित्रितम्
दिव्यानां भूषणविधिर्य एष परिकीर्तितः ५२
मानुषाणां च कर्तव्यो नानादेशसमाश्रयः
भूषणैश्चापि वेषैश्च नानावस्थासमाश्रयैः ५३

दिव्याङ्गनानां कर्तव्या विभक्तिः स्वस्वभूमिजा
विद्याधरीणां यद्वीणामप्सरोनागयोषिताम् ५४
ऋषिदैवतकन्यानां वेषैर्नानात्वमिष्यते
तथा च सिद्धगन्धर्वराद्वसासुरयोषिताम् ५५
दिव्यानां नरनारीणां तथैव च शिखरडकम्
शिखापुटशिखरडं तु मुक्ताभूयिष्ठभूषणम् ५६
विद्याधरीणां कर्तव्यः शुद्धो वेषपरिच्छदः
यद्विरयोऽप्सरसश्चैव कार्या रत्नाविभूषणाः ५७
समस्तासां भवेद्वेषो यद्वीणां केवलं शिखा
दिव्यानामिव कर्तव्यं नागस्त्रीणां विभूषणम् ५८
मुक्तामणिलताप्रायाः फणास्तासां तु केवलाः
कार्यं तु मुनिकन्यानामेकवेणीधरं शिरः ५९
न चापि भूषणविधिस्तासां वेषो वनोचितः
मुक्तामरकतप्रायं मराडनं सिद्धयोषिताम् ६०
तासां चैव तु कर्तव्यं पीतवस्त्रापरिच्छदम्
पद्मरागमणिप्रायं गन्धर्वाणां विभूषणम् ६१
वीणाहस्तश्च कर्तव्यः कौसुम्भवसनस्तथा
इन्द्रनीलैस्तु कर्तव्यं राद्वसीनां विभूषणम् ६२
सितदंष्ट्रा च कर्तव्या कृष्णवस्त्रपरिच्छदम्
वैडूर्यमुक्ताभरणाः कर्तव्या सुरयोषिताम् ६३
शुकपिञ्छनिभैर्वस्त्रैः कार्यस्तासां परिच्छदः
पुष्परागैश्च मणिभिः क्वचिद्वैडूर्यभूषितम् ६४
दिव्यवानरनारीणां कार्यो नीलपरिच्छदः
एवं शृङ्गारिणः कार्या वेषा दिव्याङ्गनाश्रयाः ६५
अवस्थान्तरमासाद्य शुद्धाः कार्याः पुनस्तथा
मानुषीणां तु कर्तव्या नानादेशसमुद्भवाः ६६

वेषाभरणसंयोगान् गदतस्तान्निबोधत
आवन्त्ययुवतीनां तु शिरस्सालककुन्तलम् ६७
गौडीनामलकप्रायं सशिखापाशवेणिकम्
आभीरयुवतीनां तु द्विवेणीधर एव तु ६८
शिरःपरिगमः कार्यो नीलप्रायमथाम्बरम्
तथा पूर्वोत्तरस्त्रीणां समुन्नद्धशिखण्डकम् ६९
आकेशाच्छादनं तासां देशकर्मणि कीर्तितम्
तथैव दक्षिणस्त्रीणां कार्यमुल्लेख्यसंश्रयम् ७०
कुम्भी बन्धकसंयुक्तं तथावर्तललाटिकम्
गणिकानां तु कर्तव्यमिच्छाविच्छित्ति मण्डनम् ७१
देशजातिविधानेन शेषाणामपि कारयेत्
वेषं तथा चाभरणं क्षुरकर्म परिच्छदम् ७२
आगमं चापि नैपथ्ये नाट्यस्यैवं प्रयोजयेत्
अदेशयुक्तो वेषो हि न शोभां जनयिष्यति ७३
मेखलोरसि बद्धा तु हास्यं समुपपादयेत्
तथा प्रोषितं कान्तासु व्यसनाभिहतासु च ७४
वेषो वै भलिनः कार्य एकवेणीधरं शिरः
विप्रलम्भे तु नार्यास्तु शुद्धो वेषो भवेदिह ७५
नात्याभरणसंयुक्तो न चापि नुजयान्वितः
एवं स्त्रीणां भवेद्वेषो देशावस्थानमुद्भवः ७६
पुरुषाणां पुनश्चैव वेषान्वक्ष्यामि तत्त्वतः
तत्राङ्गरचना पूर्वं कर्तव्या नाट्योक्तृभिः ७७
ततःपरं प्रयोक्तव्या वेषा देशसमुद्भवाः
सितो नीलश्च पीतश्च चतुर्थो रक्त एव च ७८
एते स्वभावजा वर्णा यैः कार्यं त्वङ्गवर्तनम्
संयोगजाः पुनश्चान्ये उपवर्णा भवन्ति हि ७९

तानहं संप्रवद्म्यामि यथाकार्यं प्रयोक्तृभिः
सितनीलसमायोगे कारराडव इति स्मृतः ८०
सितपीतसमायोगात्पाराडुवर्णः प्रकीर्तितः
सितरक्तसमायोगे पद्मवर्णः प्रकीर्तितः ८१
पीतनीलसमायोगाद्धरितो नाम जायते
नीलरक्तसमायोगात्कषायो नाम जायते ८२
रक्तपीतसमायोगाद्गौरवर्ण इति स्मृतः
एते संयोगजा वर्णा ह्युपवर्णास्तथापरे ८३
त्रिचतुर्वर्णसंयुक्ता बहवः संप्रकीर्तिताः
बलस्थो यो भवेद्वर्णस्तस्य भागो भवेत्ततः ८४
दुर्बलस्य च भागौ द्वौ नीलं मुक्त्वा प्रदापयेत्
नीलस्यैको भवेद्भागश्चत्वारोऽन्ये तु वर्णके ८५
बलवान्सर्ववर्णानां नील एव प्रकीर्तितः
एवं वर्णविधिं ज्ञात्वा नानासंयोगसंश्रयम् ८६
ततः कुर्याद्यथायोगमङ्गानां वर्तनं बुधः
वर्तनाच्छादितं रूपं स्ववेषपरिवर्जितम् ८७
नाटयधर्मप्रवृत्तं तु ज्ञेयं तत्प्रकृतिस्थितम्
स्ववर्णमात्मनश्छाद्यं वर्णकैर्वेषसंश्रयैः ८८
स्राकृतिस्तस्य कर्त्तव्या यस्य प्रकृतिरास्थिता
यथा जन्तुः स्वभावं स्वं परित्यज्यान्यदैहिकम् ८९
तत्स्वभावं हि भजते देहान्तरमुपाश्रितः
वेषेण वर्णकैश्चैवच्छादितः पुरुषस्तथा ९०
परभावं प्रकुरुते यस्य वेषं समाश्रितः
देवदानवगन्धर्वयद्मराद्मसपन्नगाः ९१
प्राणिसंज्ञा स्मृता ह्येते जीवबन्धाश्च येऽपरे
स्त्रीभावाः पर्वताः नद्यः समुद्रा वाहनानि च ९२

नानाशस्त्राण्यपि तथा विज्ञेयाः प्राणिसंज्ञया
शैलप्रासादयन्त्राणि चर्मवर्मध्वजास्तथा ९४
नानाप्रहरणाद्याश्च तेऽप्राणिन इति स्मृताः
अथवा कारणोपेता भवन्त्येते शरीरिणः ९४
वेषभाषाश्रयोपेता नाट्यधर्ममवेक्ष्य तु
वर्णानां तु विधिं ज्ञात्वा वयः प्रकृतिमेव च ९५
कुर्यादङ्गस्य रचनां देशजातिवयःश्रिताम्
देवा गौरास्तु विज्ञेया यक्षाश्चाप्सरसस्तथा ९६
रुद्रार्कद्रुहिणस्कन्दास्तपनीयप्रभाः स्मृताः
सोमो बृहस्पतिः शुक्रो वरुणस्तारकागणाः ९७
समुद्रहिमवद्गङ्गाः श्वेता हि स्युर्बलस्तथा
रक्तमङ्गारकं विद्यात् पीतौ बुधहुताशनौ ९८
नारायणो नरश्चैव श्यामो नागश्च वासुकिः
दैत्याश्च दानवाश्चैव राक्षसा गुह्यका नगाः ९९
पिशाचा जलमाकाशमसितानि तु वर्णतः
भवन्ति षट्सु द्वीपेसु पुरुषाश्चैव वर्णतः १००
कर्तव्या नाट्ययोगेन निष्टप्तकनकप्रभाः
जम्बूद्वीपस्य वर्षे तु नानावर्णाश्रया नराः १०१
उत्तरांस्तु कुरूंस्त्यक्त्वा ते चापि कनकप्रभाः
भद्राश्वपुरुषाः श्वेताः कर्तव्या वर्णतस्तथा १०२
केतुमाले नरा नीला गौराः शेषेषु कीर्तिताः
नानावर्णाः स्मृता भूता गन्धर्वा यक्षपन्नगाः १०३
विद्याधरास्तथा चैव पितरस्तु समा नराः
पुनश्च भारते वर्षे तांस्तान्वर्णान्निबोधत १०४
राजानः पद्मवर्णास्तु गौराः श्यमास्तथैव च
ये चापि सुखिनो मर्त्या गौराः कार्यास्तु वै बुधैः १०५

कुकर्मिणो ग्रहग्रस्ताः व्याधितास्तपसि स्थिताः
आयस्तकर्मिणश्चैव ह्यसिताश्च कुजातयः १०६
ऋषयश्चैव कर्तव्या नित्यं तु बदरप्रभाः
तपःस्थिताश्च ऋषयो नित्यमेवासिता बुधैः १०७
कारणाव्यपदेशेन तथा चात्मेच्छया पुनः
वर्णस्तत्र प्रकर्तव्यो देशजातिवशानुगः १०८
देशं कर्म च जातिं च पृथिव्युद्देशसंश्रयम्
विज्ञाय वर्तना कार्या पुरुषाणां प्रयोगतः १०९
किरातबर्बरान्ध्राश्च द्रविडाः काशिकोसलाः
पुलिन्दा दाक्षिणात्याश्च प्रयेण त्वसिताः स्मृताः ११०
शकाश्च यवनाश्चैव पह्लवा बाह्लिकाश्च ये
प्रायेण गौराः कर्तव्या उत्तरा ये श्रिता दिशम् १११
पाञ्चालाः शौरसेनाश्च माहिषाश्चौड्मागधाः
अङ्गा वङ्गाः कलिङ्गाश्च श्यामाः कार्यास्तु वर्णतः ११२
ब्राह्मणाः क्षत्रियाश्चैव गौराः कार्यास्तथैव हि
वैश्याः शूद्रास्तथा चैव श्यामाः कार्यास्तु वर्णतः ११३
एवं कृत्वा यथान्यायं मुखाङ्गोपाङ्गवर्तनाम्
श्मश्रुकम प्रयुञ्जीत देशकालवयोऽनुगम् ११४
शुद्ध विचित्रं श्यामं च तथा रोमशमेव च
भवेच्चतुर्विधं श्मश्रु नानावस्थान्तरात्मकम् ११५
शुद्धं तु लिङ्गिनां कार्यं तथामात्यपुरोधसाम्
मध्यस्था ये च पुरुषा ये च दीक्षां समाश्रिताः ११६
दिव्या ये पुरुषाः केचित्सिद्धविद्याधरादयः
पार्थिवाश्च कुमाराश्च ये च राजोपजीविनः ११७
शृङ्गारिणश्च ये मर्त्या यौवनोन्मादिनश्च ये
तेषां विचित्रं कर्तव्यं श्मश्रु नाटयप्रयोक्तृभिः ११८

अनिस्तीर्णप्रतिज्ञानां दुखितानां तपस्विनाम्
व्यसनाभिहतानां च श्यामं श्मश्रु प्रयोजयेत् ११९
ऋषीणां तापसानां च ये च दीर्घव्रता नराः
तथा च चीरबद्धानां रोमशं श्मश्रु कीर्तितम् १२०
एवं नानाप्रकारं तु श्मश्रु कार्यं प्रयोक्तृभिः
अतः ऊर्ध्वं प्रवक्ष्यामि वेषन्नानाप्रयोगजान् १२१
शुद्धो विचित्रो मलिनस्त्रिविधो वेष उच्यते
तेषां नियोगं वक्ष्यामि यथावदनुपूर्वशः १२२
देवाभिगमने चैव मङ्गले नियमस्थिते
तिथिनक्षत्रयोगे च विवाहकरणे तथा १२३
धर्मप्रवृत्तं यत्कर्म स्त्रियो वा पुरुषस्य वा
वेषस्तेषां भवेच्छुद्धो ये च प्रायत्निका नराः १२४
देवदानवयक्षाणा गन्धर्वोरगरक्षसाम्
नृपाणां कर्कशानां च चित्रो वेष उदाहृतः १२५
वृद्धानां ब्राह्मणानां च श्रेष्ठ्यमात्यपुरोधसाम्
वणिजां काञ्चकीयानां तथा चैव तपस्विनाम् १२६
विप्रक्षत्रियवैश्यानां स्थानीया ये च मानवाः
शुद्धो वस्त्रविधिस्तेषां कर्तव्यो नाटकाश्रयः १२७
उन्मत्तानां प्रमत्तानामध्वगानां तथैव च
व्यसनोपहतानां च मलिनो वेष उच्यते १२८
शुद्धरक्तविचित्राणि वासांस्यूर्ध्वाम्बराणि च
योजयेन्नाट्यतत्त्वज्ञो वेषयोः शुद्धचित्रयोः १२९
कुर्याद्विषे तु मलिने मलिनं तु विचक्षणः
मुनिर्निग्रन्थशाक्येषु यतिपाशुपतेषु च १३०
व्रतानुगस्तु कर्तव्यो वेषो लोकस्वभावतः
चीरवल्कलचर्माणि तापसानां तु योजयेत् १३१

परिव्राण्मुनिशाक्यानां वासः काषायमिष्यते
नानाचित्राणि वासांसि कुर्यात्पाशुपतेष्वथ १३२
कुजातयश्च ये प्रोक्तास्तेषां चैव यथार्हतः
अन्तःपुरप्रवेशे च विनियुक्ता हि ये नराः १३३
काषायकञ्चुकपटाः कार्यास्तेऽपि यथाविधि
अवस्थान्तरतश्चैवं नृणां वेषो भवेदथ १३४
वेषः सांग्रामिकश्चैव शूराणां संप्रकीर्तितः
विचित्रशस्त्रकवचो बद्धतूणो धनुर्धरः १३५
चित्रो वेषस्तु कर्तव्यो नृपाणां नित्यमेव च
केवलस्तु भवेच्छुद्धो नक्षत्रोत्पातमङ्गले १३६
एवमेष भवेद्वेषो देशजातिवयोऽनुगः
उत्तमाधममध्यानां स्त्रीणां नृणामथापि च १३७
एवं वस्त्रविधिः कार्यः प्रयोगे नाटकाश्रये
नानावस्थां समासाद्य शुभाशुभ कृतस्तथा १३८
तथा प्रतिशिरश्चापि कर्तव्यं नाटकाश्रयम्
दिव्यानां मानुषाणां च देशजातिवयःश्रितम् १३९
पार्श्वागता मस्तकिनस्तथा चैव किरीटिनः
त्रिविधो मकुटो ज्ञेयो दिव्यपार्थिवसंश्रितः १४०
देवगन्धर्वयक्षाणां पन्नगानां सरक्षसाम्
कर्तव्या नैकविहिता मुकुटाः पार्श्वमौलयः १४१
उत्तमा ये च दिव्यानां ते च कार्याः किरीटिनः
मध्यमा मौलिनश्चैव कनिष्ठाः शीर्षमौलिनः १४२
नराधिपानां कर्तव्या मस्तके मकुटा बुधैः
विद्याधराणां सिद्धानां चारणानां तथैव च १४३
ग्रन्थिमत्केशमकुटाः कर्तव्यास्तु प्रयोक्तृभिः
रक्षोदानवदैत्यानां पिङ्गकेशेक्षणानि हि १४४

हरिच्छमश्रूणि च तथा मकुटास्यानि कारयेत्
उत्तमाश्चापि ये तत्र ते कार्याः पार्श्वमौलिनः १४५
कस्मात्तु मुकुटाः सृष्टाः प्रयोगे दिव्यपार्थिवे
केशानां छेदनं दृष्टं वेदवादे यथाश्रुति १४६
भद्रीकृतस्य वा यज्ञे शिरसश्छादनेच्छया
केशानामप्यदीर्घत्वात्स्मृतं मुकुटधारणम् १४७
सेनापतेः पुनश्चापि युवराजस्य चैव हि
योजयेदर्धमकुटं महामात्राश्च ये नराः १४८
अमात्यानां कञ्चुकिनां तथा श्रेष्ठिपुरोधसाम्
वेष्टनाबद्धपट्टानि प्रतिशीर्षाणि कारयेत् १४९
पिशाचोन्मत्तभूतानां साधकानां तपस्विनाम्
अनिस्तीर्णप्रतिज्ञानां लम्बकेशं भवेच्छिरः १५०
शाक्यश्रोत्रियनिर्ग्रन्थपरिव्राड्दीक्षितेषु च
शिरोमुण्डं तु कर्तव्यं यज्ञदीक्षान्वितेषु च १५१
तथा व्रतानुगं चैव शेषाणां लिङ्गिनां शिरः
मुण्डं वा कुञ्चितं वापि लम्बकेशमथापि वा १५२
धूर्तानां चैव कर्तव्यं ये च रात्र्युपजीविनः
शृङ्गारचित्ताः पुरुषास्तेषां कुञ्चितमूर्धजाः १५३
बालानामपि कर्तव्यं त्रिशिखण्डविभूषितम्
जटामकुटबद्धं च मुनीनां तु भवेच्छिरः १५४
चेटानामपि कर्तव्यं त्रिशिद्ध मुण्डमेव वा
विदूषकस्य खलतिः स्यात्काकपदमेव वा १५५
शेषाणामर्थयोगेन देशजातिसमाश्रयम्
शिरः प्रयोक्तृभिः कार्यं नानावस्थान्तराश्रयम् १५६
भूषणैर्वर्णकैर्वस्त्रैर्माल्यैश्चैव यथाविधि
एवं नानाप्रकारैस्तु बुद्ध्या वेषान्प्रकल्पयेत् १५७

प्रयोजनेषु देवीनां प्रयोक्तव्या नृपैः सदा ७२
एतदष्टादशविधं प्रोक्तमन्तःपुरं मया
अतः परं प्रवक्ष्यामि बाह्यं पुरुषसंभवम् ७३
राजा सेनापतिश्चैव पुरोधा मन्त्रिणस्तथा
सचिदाः प्राड्विवाकाश्च कुमाराधिकृतास्तथा ७४
एके चान्ये च बहवो मान्या ज्ञेया नपृस्य तु
विशेषमेषां वक्ष्यामि लक्षणेन निबोधत ७५
बलवान् बुद्धिसंपन्नः सत्यवादी जितेन्द्रियः
दक्षः प्रगल्भो धृतिमान् विक्रान्तो मतिमांञ्छुचिः ७६
दीर्घदर्शी महोत्साहः कृतज्ञः प्रियवाङ्मृदुः
लोकपालव्रतधरः कर्ममार्गविशारदः ७७
उत्थितश्चाप्रमत्तश्च वृद्धसेव्यर्थशास्त्रवित्
परभावेङ्गिताभिज्ञः शूरो रक्षासमन्वितः ७८
ऊहापोहविचारी च नानाशिल्पप्रयोजकः
नीतिशास्त्रार्थकुशलस्तथा चैवानुरागवान् ७९
धर्मज्ञोऽव्यसनी चैव गुणैरेतैर्भवेन्नृपः
कुलीना बुद्धिसंपन्ना नानाशास्त्रविपश्चिताः ८०
स्निग्धाः परैरहार्यश्च न प्रमत्ताश्च देशजाः
अलुब्धाश्च विनीताश्च शुचयो धार्मिकास्तथा ८१
पुरोधो मन्त्रिणस्त्वेभिर्गुणैर्युक्ता भवन्ति हि
बुद्धिमान्नीतिसंपन्नस्त्यक्तालस्यः प्रियंवदः ८२
पररन्ध्रविधिज्ञश्च यात्राकालविशेषवित्
अर्थशास्त्रार्थकुशलो ह्यनुरक्तः कुलोद्भवः ८३
देशवित्कालविच्चैव कर्तव्यः क्षितिपैः सदा
व्यवहारार्थतत्त्वज्ञा बुद्धिमन्तो बहुश्रुताः ८४
मध्यस्था धार्मिका धीराः कार्याकार्यविवेकिनः

क्षान्ता दान्ता जितक्रोधा सर्वत्र समदर्शिनः ८५
ईदृशः प्राड्विवाकास्तु स्थाप्या धर्मासने द्विजाः
उत्थिताश्चाप्रमत्ताश्च त्यक्तालस्या जितश्रमाः ८६
स्निग्धाः क्षान्ता विनीताश्च मध्यस्था निपुणास्तथा
नयज्ञा विनयज्ञाश्च ऊहापोहविचक्षणाः ८७
सर्वशास्त्रार्थसंपन्नाः कुमाराधिकृतास्तथा
बृहस्पतिमतादेषां गुणांश्चाभिकांक्षयेत् ८८
विज्ञेयं चोपहार्यं च सभ्यानां च विकल्पनम्
इत्येष वो मया प्रोक्तः प्राड्विवाकविनिर्णयः ८९
अत ऊर्ध्वं प्रवक्ष्यामि चित्राभिनयनं पुनः ९०
इति भरतीये नाट्यशास्त्रे पुंस्त्र्युपचारो नामाध्यायश्चतुर्विंशः

## पञ्चविंशोऽध्यायः

अंगाद्यभिनयस्यैव यो विशेषः क्वचित्क्वचित्
अनुक्त उच्यते चित्रः स चित्राभिनयस्स्मृतः १
उत्तानौ तु करौ कृत्वा स्वस्तिकौ पार्श्वसंस्थितौ
उद्वाहितेन शिरसा तथा चोर्ध्वनिरीक्षणात् २
प्रभातं गगनं रात्रिः प्रदोषं दिवसं तथा
ऋतून् घनान् वनान्तांश्च विस्तीर्णांश्च जलाशयान् ३
दिशो ग्रहान् सनक्षात्रान् किञ्चित् स्वस्थं च यद्भवेत्
तस्य त्वभिनयः कार्यो नानादृष्टिसमन्वितः ४
एभिरेव करैर्भुयस्तेनैव शिरसा पुनः
अधो निरीक्षणेनाथ भूमिस्थान् संप्रदशयेत् ५
स्पर्शस्य ग्रहणेनैव तथोल्लुकसनेन च
चन्द्रज्योत्स्ना सुखं वायुं रसं गन्धं च निर्दिशेत् ६
वस्त्रावकुण्ठनात्सूर्यं रजोधूमानिलांस्तथा

भूमितापमथोष्णं च कुर्याच्छायाभिलाषतः ७
ऊर्ध्वार्केकरदृष्टिस्तु मध्याह्ने सूर्यमादिशेत्
उदयास्तगतं चैव विस्मयार्थैः प्रदर्शयेत् ८
यानि सौम्यार्थयुक्तानि सुखभावकृतानि च
गात्रस्पर्शैस्सरोमाञ्चैस्तेषामभिनयो भवेत् ९
यानि स्युस्तीक्ष्णरूपाणि तानि चाभिनयेत्सुधीः
असंस्पर्शैस्तथोद्वेगैस्तथा मुखविकुण्ठनैः १०
गम्भीरोदात्तसंयुक्तानर्थानभिनयेद्बुधः
साटोपैश्च सगर्वैश्च गात्रैः सौष्ठवसंयुतैः ११
यज्ञोपवीतदेशस्थमरालं हासमादिशेत्
स्वस्तिकौ विच्युतौ हारस्त्रग्दामार्थान् निदर्शयेत् १२
भ्रमणेन प्रदेशिन्या दृष्टेः परिगमेन च
अलपद्मकपीडायाः सर्वार्थग्रहणं भवेत् १३
श्रव्यं श्रवणयोगेन दृश्यं दृष्टिविलोकनैः
आत्मस्थं परसंस्थं वा मध्यस्थं वा विनिर्दिशेत् १४
विद्युदुल्का घनरवाविष्फुलिंगार्चिषस्तथा
त्रस्तांगाक्षिनिमेषैश्च तेऽभिनेयाः प्रयोक्तृभिः १५
उद्वेष्टितपरावृत्तौ करौ कृत्वा नतं शिरः
असंस्पर्शे तथानिष्टे जिह्मदृष्टेन कारयेत् १६
वायुमुष्णं तमस्तेजो मुखप्रच्छादनेन च
रेणुतोयपतंगांश्च भ्रमरांश्च निवारयेत् १७
कृत्वा स्वस्तिकसंस्थानौ पद्मकोशावधोमुखौ
सिंहर्क्षवानरव्याघ्रश्वापदांश्च निरूपयेत् १८
स्वस्तिकौ त्रिपताकौ तु गुरूणां पादवन्दने
खटकस्वस्तिकौ चापि प्रतोदग्रहणे स्मृतौ १९
एकं द्वि त्रीणि चत्वारि पञ्च षट् सप्त चाष्टधा

नव वा दश वापि स्युर्गणनांगुलिभिर्भवेत्  २०
दशाख्याश्च शताख्याश्च सहस्राख्यास्तथैव च
पताकाभ्यां तु हस्ताभ्यां प्रयोज्यास्ताः प्रयोक्तृभिः  २१
दशाख्यगणनायास्तु परतो या भवेदिह
वाक्यार्थेनैव साध्यासौ परोक्षाभिनयेन च  २२
छत्रध्वजपताकाश्च निर्देश्या दण्डधारणात्
नानाप्रहरणं चाथ निर्देश्यं धारणाश्रयम्  २३
एकचित्तो ह्यधोदृष्टिः किञ्चिन्नतशिरास्तथा
सव्यहस्तश्च सन्देशः स्मृते ध्याने वितर्किते  २४
उद्वाहितं शिरः कृत्वा हंसपक्षौ प्रदक्षिणौ
अपत्यरूपणे कार्यावुछ्रयौ च प्रयोक्तृभिः  २५
उद्वाहितं शिरः कृत्वा हंसवक्त्रं तथोर्ध्वगम्
प्रसादयञ्च यं मानं दीर्घसत्वं च निर्दिशेत्  २६
अरालं च शिरस्स्थाने समुद्वाह्य तु वामकम्
नते निर्वृत्ते ध्वस्ते च श्रान्तवाक्ये च योजयेत्  २७
सर्वेन्द्रियस्वस्थतया प्रसन्नवदनस्तथा
विचित्रभूतजालोकैः शरदन्तु विनिर्दिशेत्  २८
गात्रसंकोचनाच्चापि सूर्याग्निपटुसेवनात्
हेमन्तकोऽभिनेतव्यः पुरुषैर्मध्यमाधमैः  २९
शिरोदन्तोष्ठकपेन गात्रसंकोचनेन च
कूजितैश्च सशीत्कारैरधमश्शीतमादिशेत्  ३०
अवस्थान्तरमासाद्य कदाचित्तूत्तमैरपि
शीताभिनयनं कुर्याद्दिवाद्व्यसनसंभवम्  ३१
ऋतुजानां तु पुष्पाणां गन्धाघ्राणैस्तथैव च
रूक्षस्य वायोः स्पर्शाच्च शिशिरं रूपयेद्बुधः  ३२
प्रमोदजननारम्भैरुपभोगैः पृथग्विधिः

वसन्तस्त्वभिनेतव्यो नानापुष्पप्रदर्शनात्  ३३
स्वेदप्रमार्जनैश्चैव भूमितापैः सवीजनैः
उष्णस्य वायोः स्पर्शेन ग्रीष्मं त्वभिनयेद्बुधः  ३४
कदम्बनीपकुटपैः शाद्वलैः सेन्द्रगोपकैः
मेघवातैः सुखस्पर्शैः प्रावृट्कालं प्रदर्शयेत्  ३५
मेघोघनादैर्गम्भीरैर्धाराप्रपतनैस्तदा
विद्युन्निर्घातघोषैश्च वर्षारात्रं समादिशेत्  ३६
यद्यस्य चिह्नं वेषो वा कर्म वा रूपमेव वा
निर्देश्यः स ऋतुस्तेन इष्टानिष्टार्थदर्शनात्  ३७
एतानृतूनर्थवशाद्दर्शयेद्धि रसानुगान्
सुखिनस्तु सुखोपेतान् दुःखार्थान् दुःखसंयुतान्  ३८
यो येन भावेनाविष्टः सुखदेनेतरेण वा
स तदाहितसंस्कारः सर्वं पश्यति तन्मयम्  ३९
भावाभिनयनं कुर्याद्विभावानां निदर्शनैः
तथैव चानुभावानां भावसिद्धिः प्रवर्तिता  ४०
विभावेनाहृतं कार्यमनुभावेन नीयते
आत्मानुभवनं भावो विभावः परदर्शनम्  ४१
गुरुर्मित्रं सखा स्निग्धः संबन्धी बन्धुरेव वा
आवेद्यते हि यः प्राप्तः स विभाव इति स्मृतः  ४२
यत्त्वस्य संभ्रमोत्थानैरर्घ्यपाद्यासनादिभिः
पूजनं क्रियते भक्त्या सोऽनुभावः प्रकीर्तितः  ४३
एवमन्येष्वपि ज्ञेयो नानाकार्यप्रदर्शनात्
विभावो वापि भावो वा विज्ञेयोऽर्थवशाद्बुधैः  ४४
यस्त्वपि प्रतिसंदेशो दूतस्येह प्रदीयते
सोऽनुभाव इति ज्ञेयः प्रतिसन्देशदर्शितः  ४५
एवं भावो विभावो वाप्यनुभावश्च कीर्तितः

पुरुषैरभिनेयः स्यात्प्रमदाभिरथापि वा ४६
स्वभावाभिनये स्थानं पुंसां कार्यं तु वैष्णवम्
स्रायतं वावहित्थं वा स्त्रीणां कार्यं स्वभावतः ४७
प्रयोजनवशाच्चैव शेषाण्यपि भवन्ति हि
नानाभावाभिनयनैः प्रयोगैश्च पृथग्विधैः ४८
धैर्यलीलांगसंपन्नं पुरुषाणां विचेष्टितम्
मृदुलीलांगहारैश्च स्त्रीणां कार्यं तु चेष्टितम् ४९
करपादांगसञ्चारास्स्त्रीणां तु ललिताः स्मृताः
सुधीरश्चोद्धतश्चैव पुरुषाणां प्रयोक्तृभिः ५०
यथा रसं यथाभावं स्त्रीणां भावप्रदर्शनम्
नराणां प्रमदानां च भावाभिनयनं पृथक् ५१
भावानुभावनं युक्तं व्याख्यास्याम्यनुपूर्वशः
स्रालिंगनेन गात्राणां सस्मितेन च चक्षुषा ५२
तथोल्लुकसनाच्चापि हर्षं सन्दर्शयेन्नरः
क्षिप्रसञ्जातरोमाञ्चात् बाष्पेणावृतलोचना ५३
कुर्वीत नर्तकी हर्षं प्रीत्या वाक्यैश्च सस्मितैः
उद्वृत्तरक्तनेत्रश्च सन्दष्टाधर एव च ५४
निश्वासकम्पितांगश्च क्रोधं चाबिनयेन्नरः
नेत्राभ्यां बाष्पपूर्णाभ्यां चिबुकौष्ठप्रकम्पनात् ५५
शिरसः कम्पनाच्चैव भ्रकुटीकरणेन च
मौनेनागुलिभगेन माल्याभरणवर्जनात् ५६
स्रायतस्थानकस्थाया ईर्ष्या क्रोधे भवेत्स्त्रियाः
निश्वासोच्छवासबहुलैरधोमुखविचिन्तनैः ५७
स्राकाशवचनाच्चापि दुःखं पुंसां तु योजयेत्
रुदितैः श्वसितैश्चैव शिरोभिर्हननेन च ५८
भूमिपाताभिघातैश्च दुःखं स्त्रीषु प्रयोजयेत्

आनन्दजं चार्तिजं वा ईर्ष्यासंभूतमेव वा ५९
यत्पूर्वमुक्तं रुदितं तत्स्त्रीनीचेषु योजयेत्
संभ्रमावेगचेष्टाभिश्शस्त्रसंपातनेन च ६०
पुरुषाणां भयं कार्यं धैर्यावेगबलादिभिः
चलतारकनेत्रत्वाद्गात्रैः स्फुरितकम्पितैः ६१
सन्त्रस्तहृदयत्वाच्च पार्श्वाभ्यामवलोकनैः
भर्तृरन्वेषणाच्चैवमुच्चैराक्रन्दनादपि ६२
प्रियस्यालिंगनाच्चैव भयं कार्यं भवेत्स्त्रियाः
मदा येऽभिहिताः पूर्वं ते स्त्रीनीचेषु योजयेत् ६३
मृदुभिः स्खलितैर्नित्यमाकाशस्यावलंबनात्
नेत्रावघूर्णनैश्चैव सालस्यैः कथितैस्तथा ६४
गात्राणां कम्पनैश्चैव मदः कार्यो भवेत्स्त्रियाः
अनेन विधिना कार्यः प्रयोगाः कारणोत्थिताः ६५
पौरुषः स्त्रीकृतो वापि भावा ह्यभिनयं प्रति
सर्वे सललिता भावास्स्त्रीभिः कार्याः प्रयत्नतः ६६
धैर्यमाधुर्यसंपन्ना भावाः कार्यास्तु पौरुषाः
त्रिपताकांगुलीभ्यां तु वलिताभ्यां प्रयोजयेत् ६७
शुकाश्च शारिकाश्चैव सूक्ष्मा ये चापि पक्षिणः
शिखिसारसहंसाद्याः स्थूला येऽपि स्वभावतः ६८
रेचकैरंगहारैश्च तेषामभिनयो भवेत्
खरोष्ट्राश्वतरासिंहव्याघ्रगोमहिषादयः ६९
गतिप्रचारैरंगैश्च तेऽभिनेयाः प्रयोक्तृभिः
भूताः पिशाचा यक्षाश्च दानवाः सहराक्षसैः ७०
अंगहारैर्विनिर्देश्या नामसंकीर्तनादपि
अंगहारैर्विनिर्देश्या अप्रत्यक्षा भवन्ति ये ७१
प्रत्यक्षास्त्वभिनेतव्या भयोद्वेगैः सविस्मयैः

देवाश्च विह्लैश्च प्रणामकरणैर्भावैश्च विचेष्टितैः ७२
अभिनेयो ह्यर्थवशादप्रत्यक्षाः प्रयोगज्ञैः
सव्योत्थितेन हस्तेन ह्यरालेन शिरः स्पृशेत् ७३
नरेऽभिवादनं ह्येतदप्रत्यक्षे विधीयते
खटकावर्धमानेन कपोताख्येन वा पुनः ७४
दैवतानि गुरूंश्चैव प्रमदाश्चाभिवादयेत्
दिवौकसश्च ये पूज्याः प्रत्यक्षाश्च भवन्ति ये ७५
तान् प्रमाणैः प्रभावैश्च गम्भीरार्थैश्च योजयेत्
महाजनं सखीवर्गं विटधूर्तजनं तथा ७६
परिमण्डलसंस्थेन हस्तेनाभिनयेन्नरः
पर्वतान् प्रांशुयोगेन वृक्षांश्चैव समुच्छ्रितान् ७७
प्रसारिताभ्यां बाहुभ्यामुत्क्षिप्ताभ्यां प्रयोजयेत्
समूहसागरं सेनां बहुविस्तीर्णमेव च ७८
पताकाभ्यां तु हस्ताभ्यामुत्क्षिप्ताभ्यां प्रदर्शयेत्
शौर्यं धैर्यं च गर्वं च दर्पमौदार्यमुच्छ्रयम् ७९
ललाटदेशस्थानेन त्वरालेनाभिदर्शयेत्
वक्षोदेशादपाविद्धौ करौ तु मृगशीर्षकौ ८०
विस्तीर्णप्रद्रुतोत्क्षेपौ योज्यौ यत्स्यादपावृतम्
अधोमुखोत्तानतलौ हस्तौ किञ्चित्प्रसारितौ ८१
कृत्वा त्वभिनयेद्वेलां बिलद्वारं गृहं गुहाम्
कामं शापग्रहग्रस्तान् ज्वरोपहतचेतसः ८२
एतेषां चेष्टितं कुर्यादंगाद्यैः सदृशैर्बुधैः
दोलाभिनयनं कुर्याद्दोलायास्तु विलोलनैः ८३
संक्षोभेण च गात्राणां रज्वश्चाग्रहणेन च
यदा चांगवती डोला प्रत्यक्षा पुस्तजा भवेत् ८४
आसनेषु प्रविष्टानां कर्तव्यं तत्र डोलनम्

आकाशवचनानीह वक्ष्याम्यात्मगतानि च ८५
अपवारितकं चैव जनान्तिकमथापि च
दूरस्थाभाषणं यत्स्यादशरीरनिवेदनम् ८६
परोक्षान्तरितं वाक्यमाकाशवचनं तु तत्
तत्रोत्तरकृतैर्वाक्यैः संलापं संप्रयोजयेत् ८७
नानाकारणसंयुक्तैः काव्यभावसमुत्थितैः
हृदयस्य वचो यत्तु तदात्मगतमिष्यते ८८
सवितर्कं च तद्योज्यं प्रायशो नाटकादिषु
निगूढभावसंयुक्तमपवारितकं स्मृतम् ८९
कार्यवशादश्रवणं पार्श्वगतैर्यज्जनान्तिकं तत्स्यात्
हृदयस्थं सविकल्पं भावस्थं चात्मगतमेव ९०
इति गूढार्थयुक्तानि वचनानीह नाटके
जनान्तिकानि कर्णे तु तानि योज्यानि योक्तृभिः ९१
पूर्ववृत्तं तु यत्कार्यं भूयः कथ्यं तु कारणात्
कर्णप्रदेशे तद्वाच्यं मागात्तत्पुनरुक्तताम् ९२
अव्यभिचारेण पठेदाकाशजनान्तिकात्मगतपाठ्यम्
प्रत्यक्षपरोक्षकृतानात्मसमुत्थान् परकृतांश्च ९३
हस्तमन्तरितं कृत्वा त्रिपताकं प्रयोक्तृभिः
जनान्तिकं प्रयोक्तव्यमपवारितकं तथा ९४
स्वप्नायितवाक्यार्थस्त्वभिनेयो न खलु हस्तसंचारैः
सुप्ताभिहितैरेव तु वाक्यार्थैः सोऽभिनेयः स्यात् ९५
मन्दस्वरसञ्चारैर्व्यक्ताव्यक्तं पुनरुक्तवचनार्थम्
पूर्वानुस्मरणकृतं कार्यं स्वप्नाञ्चिते पाठ्यम् ९६
प्रशिथिलगुरुकरुणाक्षरघणटानुस्वरितवाक्यगद्गदजैः
हिक्काश्वासोपेतां काकुं कुर्यान्मरणकाले ९७
हिक्काश्वासोपेतां मूर्च्छोपगमे मरणवत्कथयेत्

अतिमत्तेष्वपि कार्यं तद्वत्स्वप्नायिते यथा पाठ्यम् ९८
वृद्धानां योजयेत्पाठ्यं गद्गदस्खलिताक्षरम्
असमाप्ताक्षरं चैव बालानां तु कलस्वनम् ९९
नानाभावोपगतं मरणाभिनये बहुकीर्तितं तु
विक्षिप्तहस्तपादैर्निश्शृतैः सन्नैस्तथा कार्यम् १००
व्याधिप्लुते च मरणं निषण्णगात्रैस्तु संप्रयोक्तव्यम्
हिक्काश्वासोपेतं तथा पराधीनमात्रसंचारम् १०१
विषपीतेऽपि च मरणं कार्यं विक्षिप्तगात्रकरचरणम्
विषवेगसंप्रयुक्तं विस्फुरितांगक्रियोपेतम् १०२
प्रथमे वेगेकार्श्यं त्वभिनेये वेपथुर्द्वितीये तु
दाहस्तथा तृतीये विलल्लिका स्याच्चतुर्थे तु १०३
फेनस्तु पञ्चमस्थे तु ग्रीवा षष्ठे तु भज्यते
जडता सप्तमे तु स्यान्मरणं त्वष्टमे भवेत् १०४
तत्र प्रथमवेगे तु क्षामवक्रकपोलता
कृशत्वेऽभिनयः कार्यो वाक्यानामल्पभाषणम् १०५
सर्वांगवेपथुं च कण्डूयनं तथागानाम्
विक्षिप्तहस्तगात्रं दाहं चैवाप्यभिनयेत्तु १०६
उद्वृत्तनिमेषत्वादुद्गारच्छर्दनैस्तथाक्षेपैः
अव्यक्ताक्षरकथनैः विलल्लिकामभिनयेदेवम् १०७
उद्गारवमनयोगैः शिरसश्च विलोलनैरनेकविधैः
फेनस्त्वभिनेतव्यो निःसंज्ञतया निमेषैश्च १०८
अंसकपोलस्पर्शः शिरसोऽथ विनामनं शिरोऽपांगः
सर्वेन्द्रियसंमोहाज्जडतामेवं त्वभिनयेत्तु १०९
संमीलितनेत्रत्वात् व्याधिविवृद्धौ भुजंगदशनाद्वा
एवं हि नाट्यधर्मे मरणानि बुधैः प्रयोज्यानि ११०
संभ्रमेष्वथ रोषेषु शोकावेशकृतेषु च

यानि वाक्यानि युज्यन्ते पुनरुक्तं च तेष्विह १११
साध्वहो मां च हेहेति किं त्वं मामावदेति च
एवंविधानि कार्याणि द्वित्रिसंख्यानि कारयेत् ११२
प्रत्यंगहीनं यत्काव्यं विकृतं च प्रयुज्यते
न लक्षणकृतस्तत्र कार्यस्त्वभिनयो बुधैः ११३
भावो यत्रोत्तमानां तु न तं मध्येषु योजयेत्
यो भावश्चैव मध्यानां न तं नीचेषु योजयेत् ११४
पृथक् पृथग्भावरसैरात्मचेष्टासमुत्थितैः
ज्येष्ठमध्यमनीचेषु नाट्यं रागं हि गच्छति ११५
एतेऽभिनयविशेषाः कर्तव्याः सत्त्वभावसंयुक्ताः
अन्ये तु लौकिका ये तु ते सर्वे लोकवत्कार्याः ११६
नानाविधैर्यथा पुष्पैर्मालां ग्रथ्नाति माल्यकृत्
अंगोपांगै रसैर्भावैस्तथा नाट्यं प्रयोजयेत् ११७
या यस्य लीला नियता गतिश्च
रंगप्रविष्टस्य निधानयुक्तः
तामेव कुर्यादविमुक्तसत्त्वो
यावन्नरांगात्प्रतिनिर्वृतः स्यात् ११८
एवमेते मया प्रोक्ता नाट्ये चाभिनयाः क्रमात्
अन्ये तु लौकिका ये ते लोकाद्ग्राह्याः सदा बुधैः ११९
लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम्
वेदाध्यात्मपदार्थेषु प्रायो नाट्यं प्रतिष्ठितम् १२०
वेदाध्यात्मोपपन्नं तु शब्दच्छन्दस्समन्वितम्
लोकसिद्धं भवेत्सिद्धं नाट्यं लोकात्मकं तथा १२१
न च शक्यं हि लोकस्य स्थावरस्य चरस्य च
शास्त्रेण निर्णयं कर्तुं भावचेष्टाविधिं प्रति १२२
नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठितम्

तस्माल्लोकप्रमाणं हि विज्ञेयं नाट्ययोक्तृभिः १२३
एतान् विधींश्चाभिनयस्य सम्य-
ग्विज्ञाय रंगे मनुजः प्रयुंक्ते
स नाट्यतत्त्वाभिनयप्रयोक्ता
संमानमग्र्यं लभते हि लोके १२४
एवमेते ह्यभिनया वाङ्नेपथ्यांगसंभवाः
प्रयोगज्ञेन कर्तव्या नाटके सिद्धिमिच्छता १२५

इति भरतीये नाट्यशास्त्रे चित्राभिनयो नाम
पञ्चविंशोऽध्यायः

षड्विंशोऽध्यायः

अनुरूपा विरूपा च तथा रूपानुरूपिणी
त्रिप्रकारेह पात्राणां प्रकृतिश्च विभाविता १
नानावस्थाक्रियोपेता भूमिका प्रकृतिस्तथा
भृशमुद्योतयेन्नाट्यं स्वभावकरणाश्रयम् २
बहुबाहूबहुमुखास्तथा च विकृताननाः
पशुश्वापदवक्त्राश्च खरोष्ट्राश्च गजाननाः ३
एते चान्ये च बहवो नानारूपा भवन्ति ये
आचार्येण तु ते कार्या मृत्काष्ठजतुचर्मभिः ४
स्वाभाविकेन रूपेण प्रविशेद्रंगमण्डलम्
आत्मरूपमवच्छाद्य वर्णकैर्भूषणैरपि ५
यादृशं यस्य यद्रूपं प्रकृत्या तत्र तादृशम्
वयोवेषानुरूपेण प्रयोज्यं नाट्यकर्मणि ६
यथा जीवत्स्वभावं हि परित्यज्यान्यदेहिकम्
परभावं प्रकुरुते परभावं समाश्रितः ७
एवं बुधः परं भावं सोऽस्मीति मनसा स्मरन्

येषां वागङ्गलीलाभिश्चेष्टाभिस्तु समाचरेत् ८
सुकुमारप्रयोगो यो राज्ञामामोदसंभवः
शृंगाररसमासाद्य तन्नारीषु प्रयोजयेत् ९
युद्धोद्धताविद्धकृता संरम्भारभटाश्च ये
न ते स्त्रीभिः प्रयोक्तव्याः योक्तव्याः पुरुषेषु ते १०
अनुद्धटमसंभ्रान्तमनाविद्धांगचेष्टितम्
लयतालकलापातप्रमाणनियताक्षरम् ११
सुविभक्तपदालापमनिष्ठुरमकाहलम्
ईदृशं यद्भवेन्नाट्यं नारीभिश्च प्रयोजयेत् १२
एवं कार्यं प्रयोगज्ञैर्भूमिकाविनिवेशनम्
स्त्रियो हि स्त्रीगतो भावः पौरुषः पुरुषस्य च १३
यथा वयो यथावस्थमनुरूपेति सा स्मृता
पुरुषः स्त्रीकृतं भावं रूपात्प्रकुरुते तु यः १४
रूपानुरूपा सा ज्ञेया प्रयोगे प्रकुतिर्बुधः
छन्दतः पौरुषीं भूमिं स्त्री कुर्यादनुरूपतः १५
न परस्परचेष्टासु कार्यौ स्थविरबालिशौ
पाठ्यप्रयोगे पुरुषाः प्रयोक्तव्या हि संस्कृते १६
स्त्रीणां स्वभावमधुराः कण्ठाः पुंसां तु बलवन्तः
यद्यपि पुरुषो विद्यात् गीतविधानं च लक्षणोपेतम् १७
माधुर्यगुणविहीनं शोभां जनयेन्न तद्गीतम्
यत्र स्त्रीणां पाठ्याद्गुणैर्नराणां च कण्ठमाधुर्यम् १७
प्रकृतिविपर्ययजनितौ विज्ञेयौ तावलंकारौ
प्रायेण देवपार्थिवसेनापतिमुख्यपुरुषभवनेषु १९
स्त्रीजनकृताः प्रयोगा भवन्ति पुरुषस्वभावेन
रम्भोर्वशीप्रभृतिषु स्वर्गे नाट्यं प्रतिष्ठितम् २०
तथैव मानुषे लोके राज्ञामन्तः पुरेष्विह

उपदेष्टव्यमाचार्यैः प्रयत्नेनांगनाजने २१
न स्वयं भूमिकाभ्यासो बुधैः कार्यास्तु नाटके
स्त्रीषु योज्यः प्रयत्नेन प्रयोगः पुरुषाश्रयः २२
यस्मात्स्वभावोपगतो विलासः स्त्रीषु विद्यते
तस्मात्स्वभावमधुरमङ्गं सुलभसौष्ठवम् २३
ललितं सौष्ठवं यच्च सोऽलंकरः परो मतः
प्रयोगो द्विविधश्चैव विज्ञेयो नाटकाश्रयः २४
सुकुमारस्याविद्धो नानाभावरसाश्रयः
नाटकं सप्रकरणं भाणो वीथ्यङ्क एव च २५
ज्ञेयानि सुकुमाराणि मानुषैराश्रितानि तु
सुकुमारप्रयोगोऽयं राज्ञामामोदकारकः २६
शृंगाररसमासाद्य स्त्रीणां तत्तु प्रयोजयेत्
युद्धोद्धताविद्धकृता संरम्भारभटाश्च ये २७
न ते स्त्रीणां प्रकर्तव्याः कर्तव्याः पुरुषैर्हि ते
यथाविद्धांगहारं तु भेद्यभेद्याहवात्मकम् २८
मायेन्द्रजालबहुलं पुस्तनैपथ्यदीपितम्
पुरुषप्रायसंचारमल्पस्त्रीकमथोद्धतम् २९
सात्त्वत्यारभटीयुक्तं नाट्यमाविद्धसंज्ञितम्
डिमः समवकारश्च व्यायोगेहामृगौ तथा ३०
एतान्याविद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः
एषां प्रयोगः कर्तव्यो देवदानवराक्षसैः ३१
उद्धता ये च पुरुषाः शौर्यवीर्यसमन्विताः
योग्यः स च प्रयत्नः कर्तव्यः सततमप्रमादेन ३२
न हि योग्यया विना भवति च भावरससौष्ठवं किंचित्
संगीतपरिक्लेशो नित्यं प्रमदाजनस्य गुण एव ३३
यन्मधुरकर्कशत्वं लभते नाट्यप्रयोगेण

प्रमदाः नाट्यविलासैर्लभते यत्कुसुमैर्विचित्रलावरायम्
कामोपचारकुशला भवति च काम्या विशेषेरा  ३४
गीतं नृत्तं तथा वाद्यं प्रस्तारगमनक्रिया
शिष्यनिष्पादनं चैव षडाचार्यगुणाः स्मृताः  ३५
एतानि पञ्च यो वेत्ति स स्राचार्यः प्रकीर्तितः
ऊहापोहौ मतिश्चैव स्मृतिर्मेधा तथैव च  ३६
मेधास्मृतिर्गुणश्लाघारागः संघर्ष एव च
उत्साहश्च षडेवैतान् शिष्यस्यापि गुणान् विदुः  ३७
एवं कार्यं प्रयोगज्ञैर्नानाभूमिविकल्पनम्
स्रत ऊर्ध्वं प्रवद्त्यामि सिद्धीनामपि लद्तराम्  ३८
इति भरतीये नाट्यशास्त्रे विकृतिविकल्पो नाम षड्विंशोऽध्यायः

## सप्तविंशोऽध्यायः

सिद्धीनां तु प्रवद्त्यामि लद्तरां नाटकाश्रयम्
यस्मात्प्रयोगः सर्वोऽयं सिद्ध्यर्थं संप्रदर्शितः  १
सिद्धिस्तु द्विविधा ज्ञेया वाङ्मनोंगसमुद्भवा
दैवी च मानुषी चैव नानाभावसमुत्थिता  २
दशांगा मानुषी सिद्धिर्दैवी तु द्विविधा स्मृता
नानासत्त्वाश्रयकृता वाङ्नैपथ्यशरीरजा  ३
स्मितापहासिनी हासा साध्वहो कष्टमेव च
प्रबद्धनादा च तथा सिद्धिर्ज्ञेयाथ वाङ्मयी  ४
पुलकैश्च सरोमाञ्चैरभ्युत्थानैस्तथैव च
चेलदानांगुलिद्तेपैः शारीरी सिद्धिरिष्यते  ५
किञ्चिच्छिष्टो रसो हास्यो नृत्यद्भिर्यत्र युज्यते
स्मितेन स प्रतिग्राह्यः प्रेद्तकैर्नित्यमेव च  ६
किञ्चिदस्पष्टहास्यं यत्तथा वचनमेव च

अर्थहास्येन तद्ग्राह्यं प्रेक्षकैर्नित्यमेव हि ७
विदूषकोच्छेदकृतं भवेच्छिल्पकृतं च यत्
अतिहास्येन तद्ग्राह्यं प्रेक्षकैर्नित्यमेव तु ८
अहोकारस्तथा कार्यो नृणां प्रकृतिसंभवः
यद्धर्मपदसंयुक्तं तथातिशयसंभवम् ९
तत्र साध्विति यद्वाक्यं प्रयोक्तव्यं हि साधकैः
विस्मयाविष्टभावेषु प्रहर्षार्थेषु चैव हि १०
करुणेऽपि प्रयोक्तव्यं कष्टं शास्त्रकृतेन तु
प्रबद्धनादा च तथा विस्मयार्थेषु नित्यशः ११
साधिक्षेपेषु वाक्येषु प्रस्पन्दिततनूरुहैः
कुतूहलोत्तरावेधैर्बहुमानेन साधयेत् १२
दीप्तप्रदेशं यत्कार्यं छेद्यभेद्याहवात्मकम्
सविद्रवमथोत्फुल्लं तथा युद्धनियुद्धजम् १३
प्रकम्पितांसशीर्षं च साश्रं सोत्थानमेव च
तत्प्रेक्षकैस्तु कुशलैस्साध्यमेवं विधानतः १४
एवं साधयितव्यैषा तज्ज्ञैः सिद्धिस्तु मानुषी
दैविकीं च पुनः सिद्धिं प्संप्रवक्ष्यामि तत्त्वतः १५
या भावातिशयोपेता सत्त्वयुक्ता तथैव च
सा प्रेक्षकैस्तु कर्तव्या दैवी सिद्धिः प्रयोगतः १६
न शब्दो यत्र न क्षोभो न चोत्पातनिदर्शनम्
सम्पूर्णता च रङ्गस्य दैवी सिद्धिस्तु सा स्मृता १७
दैवी च मानुषी चैव सिद्धिरेषा मयोदिता
अत ऊर्ध्वं प्रवक्ष्यामि घातान्दैवसमुत्थितान् १८
दैवात्मपरसमुत्था त्रिविधा धाता बुधैस्तु विज्ञेया
औत्पातिकश्चतुर्थः कदाचिदथ संभवत्येषु १९
वाताग्निवर्षकुञ्जरभुजङ्गमराडपनिपाताः

कीटव्यालपिपीलिकपशुप्रवेशनाच दैवककृता २०
घातानतः परमहं परयुक्तान् संप्रवक्ष्यामि
वैवर्ण्यं चाचेष्टं विभ्रमितत्वं स्मृतिप्रमोहश्च २१
अन्यवचनं च काव्यं तथांगदोषो विहस्तत्वम्
एते त्वात्मसमुत्था घाता ज्ञेया प्रयोगज्ञैः २२
मात्सर्याद्द्वेषाद्वा तत्पक्षत्वात्तथार्थभेदत्वात्
एते तु परसमुत्था ज्ञेया घाता बुधैर्नित्यम् २३
अतिहसितरुदितविस्फोटितान्यथोत्कृष्टनालिकापाताः
गोमयलोष्टपिपीलिकविक्षेपाश्चारिसंभूताः २४
औत्पातिकाश्च घाता मत्तोन्मत्तप्रवेशलिङ्गकृतः
पुनरात्मसमुत्था ये घातांस्तांस्तान् प्रवक्ष्यामि २५
वैलक्षण्यमचेष्टितविभूमिकत्वं स्मृतिप्रमोषश्च
अन्यवचनं च काव्यं तथार्तनादो विहस्तत्वम् २६
अतिहसितरुदितविस्वरपिपीलिकाकीटपशुविरावाश्च
मुकुटाभरणनिपाता पुष्करजाः काव्यदोषाश्च २७
अतिहसितरुदितहसितानि सिद्धेर्भावस्य दूषकाणि स्युः
कीटपिपीलिकपाता सिद्धिं सर्वात्मना घ्नन्ति २८
विस्वरमजाततालं वर्णस्वरसंपदा च परिहीणम्
अज्ञातस्थानलयं स्वरतगमेवंविधं हन्यात् २९
मुकुटाभरणनिपातः प्रबद्धनादश्च नाशनो भवति
पशुविशसनं तथा स्याद्बहुवचनघ्नं प्रयोगेषु ३०
विषमं मानविहीनं विमार्जनं चाकुलप्रहारं च
अविभक्तग्रहमोक्षं पुष्करगतमीदृशं हन्ति ३१
पुनरुक्तो ह्यसमासो विभक्तिभेदो विसन्धयोऽपार्थः
त्रैलिंगजश्च दोषः प्रत्यक्षपरोक्षसंमोहाः ३२
छन्दोवृत्तत्यागो गुरुलाघवसङ्करो यतेर्भेदः

एतानि यथा स्थूलं घातस्थानानि काव्यस्य ३३
ज्ञेयौ तु काव्यजातौ द्वौ घातावप्रतिक्रियौ नित्यम्
प्रकृतिव्यसनसमुत्थः शेषोदकनालिकत्वं च ३४
अप्रतिभागं स्खलनं विस्वरमुच्चारणं च काव्यस्य
अस्थानभूषणत्वं पतनं मुकुटस्य विभ्रंशः ३५
वाजिस्यन्दनकुञ्जरखरोष्ट्रशिविकाविमानयानानाम्
आरोहणावतरणेष्वनभिज्ञत्वं विहस्तत्वम् ३६
प्रहरणकवचानामत्ययथाग्रहणं विधारणं चापि
अमुकुटभूषणयोगश्चिरप्रवेशोऽथवा रङ्गे ३७
एभिः स्थानविशेषैर्घाता लक्ष्यास्तु सूरिभिः कुशलैः
यूपाग्निचयनदर्भस्रग्भाण्डपरिग्रहान्मुक्त्वा ३८
सिद्ध्या मिश्रो घ्रातस्सर्वगतश्चैकदेशजो वापि
नाटचकुशलैः सलेख्या सिद्धिर्वा स्याद्विघातो वा ३९
नालेख्यो बहुदिनजः सर्वगतोऽव्यक्तलक्षणविशेषः
यस्त्वैकदिवसजातस्य प्रत्यकरोऽपि लेख्यस्स्यात् ४०
जर्जरमोक्षस्यान्ते सिद्धेर्मोक्षस्तु नालिकायास्तु
कर्तव्यस्त्विह सततं नाटचज्ञैः प्राश्निकैर्विधिना ४१
दैन्ये दीनत्वमायान्ति ते नाटचे प्रेक्षकाः स्मृताः
ये तुष्टौ तुष्टिमायान्ति शोके शोकं ब्रजन्ति च ४२
योऽन्यस्य महे मूर्धो नांदीश्लोकं पठेद्धि देवस्य
स्ववशेन पूर्वरङ्गे सिद्धेर्घातः प्रयोगस्य ४३
यो देशभावरहितं भाषाकाव्यं प्रयोजयेद्बुद्ध्या
तस्याप्यभिलेख्यः स्याद्घातो देशः प्रयोगज्ञैः ४४
कः शक्तो नाटचविधौ यथावदुपपादनं प्रयोगस्य
कर्तुं व्यग्रमना वा यथावदुक्तं परिज्ञातम् ४५
तस्माद्गम्भीरार्थाः शब्दा ये लोकवेदसंसिद्धाः

सर्वजनेन ग्राह्यास्ते योज्या नाटके विधिवत् ४६
न च किञ्चिद्गुणहीनं दोषैः परिवर्जितं न चाकिंचित्
तस्मान्नाट्यप्रकृतौ दोषा नाट्यार्थतो ग्राह्याः ४७
न च नादरस्तु कार्यो नटेन वागङ्गसत्त्वनेपथ्ये
रसभावयोश्च गीतेष्वातोद्ये लोकयुक्त्यां च ४८
एवमेतत्तु विज्ञेयं सिद्धीनां लक्षण बुधैः
अत ऊर्ध्वं प्रवक्ष्यामि प्राश्निकानां तु लक्षणम् ४९
चारित्राभिजनोपेताः शान्तवृत्ताः कृतश्रमाः
यशोधर्मपराश्चैव मध्यस्थवयसान्विताः ५०
षडङ्गनाट्यकुशलाः प्रबुद्धाः शुचयः समाः
चतुरातोद्यकुशला वृत्तज्ञास्तत्त्वदर्शिनः ५१
देशभाषाविधानज्ञाः कलाशिल्पप्रयोजकाः
चतुर्थाभिनयोपेता रसभावविकल्पकाः ५२
शब्दच्छन्दोविधानज्ञा नानाशास्त्रविचक्षणाः
एवं विधास्तु कर्तव्याः प्राश्निका दशरूपके ५३
अव्यग्रैरिन्द्रियैः शुद्ध ऊहापोहविशारदः
त्यक्तदोषोऽनुरागी च स नाट्ये प्रेक्षकः स्मृतः ५४
न चैवैते गुणाः सम्यक् सर्वस्मिन् प्रेक्षके स्मृताः
विज्ञेयस्याप्रमेयत्वात्संकीर्णानां च पर्षदि ५५
यद्यस्य शिल्पं नेपथ्यं कर्मचेष्टितमेव वा
तत्तथा तेन कार्यं तु स्वकर्मविषयं प्रति ५६
नानाशीताः प्रकृतयः शीले नाट्यं विनिर्मितम्
उत्तमाधममध्यानां वृद्धबालिशयोषिताम् ५७
तुष्यन्ति तरुणाः कामे विदग्धाः समयात्विते
अर्थेष्वर्थपराश्चैव मोक्षे चाथ विरागिणः ५८
शूरास्तु वीररौद्रेषु नियुद्धेष्वाहवेषु च

धर्माख्याने पुराणेषु वृद्धास्तुष्यन्ति नित्यशः ५९
न शक्यमधमैर्ज्ञातुमुत्तमानां विचेष्टितम्
तत्त्वभावेषु सर्वेषु तुष्यन्ति सततं बुधाः ६०
बाला मूर्खाः स्त्रियश्चैव हास्यनैपथ्ययोः सदा
यस्तुष्टो तुष्टिमायाति शोके शोकमुपैति च ६१
क्रुद्धः क्रोधे भये भीतः स श्रेष्ठः प्रेक्षकः स्मृतः
एवं भावानुकरणे यो यस्मिन् प्रविशेन्नरः ६२
स तत्र प्रेक्षको ज्ञेयो गुणैरेभिरलंकृतः
एवं हि प्रेक्षका ज्ञेयाः प्रयोगे दशरूपतः ६३
संघर्षे तु समुत्पन्ने प्राश्निकान् संनिबोधत
यज्ञविन्नर्तकश्चैव छन्दोविच्छब्दवित्तथा ६४
अस्त्रविचित्रकृद्वेश्या गान्धर्वो राजसेवकः
यज्ञविद्यज्ञयोगे तु नर्तकोऽभिनये स्मृतः ६५
छन्दोविद्वृत्तबन्धेषु शब्दवित्पाट्यविस्तरे
इष्वस्त्रवित्सौष्ठवे तु नेपथ्ये चैव चित्रकृत् ६६
कामोपचारे वेश्या च गान्धर्वः स्वरकर्मणि
सेवकस्तूपचारे स्यादेते वै प्राश्निकाः स्मृताः ६७
एभिर्दृष्टान्तसंयुक्तैर्दोषा वाच्यास्तथा गुणाः
अशास्त्रज्ञा विवाडेषु यथा प्रकृतिकर्मतः ६८
अथैते प्राश्निका ज्ञेयाः कथिता ये मयानघाः
शास्त्रज्ञानाद्यदा तु स्यात्संघर्षः शास्त्रसंश्रयः ६९
शास्त्रप्रमाणनिर्माणैर्व्यवहारो भवेत्तदा
भर्तृनियोगादन्योऽन्यविग्रहात्स्पर्धयापि भरतानाम् ७०
अर्थपताका हेतोस्संघर्षो नाम संभवति
तेषां कार्यं व्यवहारदर्शनं पक्षपातविरहेण ७१
कृत्वा पणं पताकां व्यवहारः स भवितव्यस्तु

सर्वैरनन्यमतिभिः सुखोपविष्टैश्च शुद्धभावैश्च ७२
यैर्लेखकगभकसहायास्सह सिद्धिभिर्घाता
नात्यासनैर्नदूरसंस्थितैः प्रेक्षकैस्तु भवितव्यम् ७३
तेषामासनयोगो द्वादशहस्तस्थितः कार्यः
यानि विहितानि पूर्वं सिद्धिस्थानानि तानि लक्ष्याणि ७४
घाताश्च लक्षणीयाः प्रयोगतो नाट्ययोगे तु
दैवाद्धातसमुत्थाः परोत्थिता वा बुधैर्नवैर्लेख्याः ७५
घाता नाट्यसमुत्था ह्यात्मसमुत्थास्तु लेख्याः स्युः
घाता यस्य त्वल्पाः संख्याताः सिद्धयश्च बहुलाः स्युः ७६
विदितं कृत्वा राज्ञस्तस्मै देया पताका हि
सिध्यतिशयात्पताका समसिद्धौ पार्थिवाज्ञया देया ७७
अथ नरपतिः समः स्यादुभयोरपि सा तदा देया
एवं विधिज्ञैर्यष्टव्यो व्यवहारः समञ्जसाम् ७८
स्वस्थचित्तसुखासीनैः सुविशिष्टैर्गुणार्थिभिः
विमृश्य प्रेक्षकैर्ग्राह्यं सर्वरागपराङ्मुखैः ७९
साधनं दूषणाभासः प्रयोगसमयाश्रितैः
समत्वमङ्गमाधुर्यं पाठ्यं प्रकृतयो रसाः ८०
वाद्यं गानं सनेपथ्यमेतज्ज्ञेयं प्रयत्नतः
गीतवादित्रतालेन कलान्तरकलासु च ८१
यदङ्गं क्रियते नाट्यं समन्तात् सममुच्यते
अङ्गोपाङ्गसमायुक्तं गीततालयान्वितम् ८२
गानवाद्यसमत्वं च तद्बुधैः सममुच्यते
सनिर्भुग्नमुरः कृत्वा चतुरश्रकृतौ करौ ८३
ग्रीवाञ्चिता तथा कार्या त्वङ्गमाधुर्यमेव च
पूर्वोक्तानीह शेषाणि यानि द्रव्याणि साधकैः ८४
वाद्यादीनां पुनर्विप्रा लक्षणं सन्निबोधत

वाद्यप्रभृतयो गानं वाद्यमाणानि निर्दिशेत् ८५
यानि स्थानानि सिद्धीनां तैः सिद्धिं तु प्रकाशयेत्
हर्षादङ्गसमुद्भूतां नानारससमुत्थिताम् ८६
वारकालास्तु विज्ञेया नाटयज्ञैर्विविधाश्रयाः
दिवसश्चैव रात्रिश्च तयोर्वारान् निबोधत ८७
पूर्वाह्नस्त्वथ मध्याह्नस्त्वपराह्णस्तथैव च
दिवा समुत्था विज्ञेया नाटयवाराः प्रयोगतः ८८
प्रादोषिकार्धरात्रिश्च तथा प्राभातिकोऽपरः
नाटयवारा भवन्त्येते रात्रावित्यनुपूर्वशः ८९
एतेषां यत्र यद्योज्यं नाटयकार्यं रसाश्रयम्
तदहं संप्रवक्ष्यामि वारकालसमाश्रयम् ९०
यच्छ्रोत्ररमणीयं स्याद्धर्मोत्थानकृतं च यत्
पूर्वाह्णे तत्प्रयोक्तव्यं शुद्धं वा विकृतं तथा ९१
सत्त्वोत्थानगुणैर्युक्तं वाद्यभूयिष्ठमेव च
पुष्कलं सत्त्वयुक्तं च अपराह्णे प्रयोजयेत् ९२
कैशिकीवृत्तिसंयुक्तं शृङ्गाररससंश्रयम्
नृत्तवादित्रगीताढयं प्रदोषे नाटयमिष्यते ९३
यन्नर्महास्यबहुलं करुणप्रायमेव च
प्रभातकाले तत्कार्यं नाटयं निद्राविनाशनम् ९४
अर्धरात्रे नियुञ्जीत समध्याह्ने तथैव च
सन्ध्याभोजनकाले च नाटयं नैव प्रयोजयेत् ९५
एवं कालं च देशं समीक्ष्य च बलाबलम्
नित्यं नाटयं प्रयुञ्जीत यथाभावं यथारसम् ९६
अथवा देशकालौ च न परीक्ष्यौ प्रयोक्तृभिः
यथैवाज्ञापयेद्भर्ता तदा योज्यमसंशयम् ९७
तथा समुदिताश्चैव विज्ञेया नाटकाश्रिताः

पात्रं प्रयोगमृद्धिश्च विज्ञेयास्तु त्रयो गुणाः ९८
बुद्धिमत्वं सुरूपत्वं लयतालज्ञता तथा
रसभावज्ञता चैव वयस्स्थत्वं कुतूहलम् ९९
ग्रहणं धारणं चैव गात्रावैकल्यमेव च
निजसाध्वसतोत्साह इति पात्रगतो विधिः १००
सुवाद्यता सुगानत्वं सुपाठ्यत्वं तथैव च
शास्त्रकर्मसमायोगः प्रयोग इति संज्ञितः १०१
शुचिभूषणतायां तु माल्याभरणवाससाम्
विचित्ररचना चैव समृद्धिरिति संज्ञिता १०२
यदा समुदिताः सर्वे एकीभूता भवन्ति हि
अलङ्काराः सकुतपा मन्तव्यो नाटकाश्रयाः १०३
एतदुक्तं द्विजश्रेष्ठाः सिद्धीनां लक्षणं मया
अत ऊर्ध्वं प्रवक्ष्याम्यातोद्यानां च विकल्पनम् १०४

इति भरतीये नाट्यशास्त्रे सिद्धिव्यञ्जको नाम
सप्तविंशोऽध्यायः

## अष्टाविंशोऽध्यायः

आतोद्यविधिमिदानीं वक्ष्यामः
ततं चैवावनद्धं च घनं सुषिरमेव च
चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् १
ततं तन्त्रीकृतं ज्ञेयमवनद्धं तु पौष्करम्
घनं तालस्तु विज्ञेयः सुषिरो वंश उच्यते २
प्रयोगस्त्रिविधो ह्येषां विज्ञेयो नाटकाश्रयः
ततं चैवावनद्धं च तथा नाट्यकृतोऽपरः ३
ततः कुतपविन्यासो गायनः सपरिग्रहः
वैपञ्चिको वैणिकश्च वंशवादस्तथैव च ४

भार्वङ्गिकः पाणविकस्तथा दार्दरिकोऽपरः
अवनद्धविधावेष कुतपः समुदाहृतः ५
उत्तमाधममध्याभिस्तथा प्रकृतिभिर्युतः
कुतपो नाट्ययोगे तु नानादेशसमाश्रयः ६
एवं गानं च वाद्यं च नाट्यं च विविधाश्रयम्
अलातचक्रप्रतिमं कर्तव्यं नाट्ययोक्तृभिः ७
यत्तु तन्त्रीकृतं प्रोक्तं नानातोद्यसमाभयम्
गान्धर्वमिति तज्ज्ञेयं स्वरतालपदात्मकम् ८
अत्यर्थमिष्टं देवानां तथा प्रीतिकरं पुनः
गन्धर्वाणां च यस्माद्धि तस्माद्गन्धर्वमुच्यते ९
अस्य योनिर्भवेद्गानं वीणा वंशस्तथैव च
एतेषां चैव वक्ष्यामि विधिं स्वरसमुत्थितम् १०
गान्धर्वं त्रिविधं विद्यात्स्वरतालपदात्मकम्
त्रिविधस्यापि वक्ष्यामि लक्षणं कर्म चैव हि ११
द्व्यधिष्ठानाः स्वरा वैणाः शारीराश्च प्रकीर्तिताः
एतेषां संप्रवक्ष्यामि विधानं लक्षणान्वितम् १२
स्वरा ग्रामौ मूर्च्छनाश्च तानाः स्थानानि वृत्तयः
शुष्कं साधारणे वर्णा ह्यलङ्काराश्च धातवः १३
श्रुतयो यतयश्चैव नित्यं स्वरगतात्मकाः
दारव्यां समवायस्तु वीणायां समुदाहृतः १४
स्वरां ग्रामवलङ्कारा वर्णाः स्थानानि जातयः
साधारणे च शरीर्यां वीणायामेष संग्रहः १५
व्यञ्जनानि स्वरा वर्णाः सन्धयोऽथ विभक्तयः
नामाख्यातोपसर्गाश्च निपातास्तद्धिताः कृतः १६
छन्दोविधिरलङ्कारा ज्ञेयः पदगतो विधिः
निबद्धं चानिबद्धं च द्विविधं तत्पदं स्मृतम् १७

ध्रुवस्त्वावापनिष्कामौ विक्षेपोऽथ प्रवेशनम्
शम्या तालः सन्निपातः परिवर्तः सवस्तुकः १८
मात्रा प्रकरणाङ्गानि वदारी यतयो लयाः
गीतयोऽवयवा मार्गाः पादमार्गाः सपाणयः १९
इत्येकविंशतिविधं ज्ञेयं तालगतं बुधैः
गान्धर्वसंग्रहो ह्येष विस्तरं तु निबोधत २०
तत्र स्वराः
षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा
पञ्चमो धैवतश्चैव सप्तमोऽथ निषादवान् २१
चतुर्विधत्वमेतेषां विज्ञेयं गानयोक्तृभिः
वादी चैवाथ संवादी विवादी चानुवाद्यपि २२
तत्र यो यदंशः स तदावादी । ययोश्च नवकत्रयोदशकमन्तरं
तावन्योन्यं संवादिनौ । तद्यथा--षड्जपञ्चमौ ऋषभधैवतौ
गान्धारनिषादवन्तौ षड्जमध्यमाविति षड्जग्रामे ।
मध्यमग्रामेऽप्येवमेव । षड्जपञ्चमवर्जं पञ्चमर्षभयोश्चात्र संवादः ।
अत्र श्लोकः--
संवादो मध्यमग्रामे पञ्चमत्यर्षभस्य च
षड्जग्रामे तु षड्जस्य संवादः पञ्चमस्य च २३
विवादिनस्तु ते येषां द्विश्रुतिकमन्तरं तद्यथा--ऋषभगान्धारौ
धैवतनिषादौ । वादिसंवादिविवादिषु स्थापितेषु
शेषास्त्वनुवादिनः अनुवादिसंज्ञकाः यथा--
षड्जस्यर्षभगान्धारधैवतनिषादाः ऋषभस्य मध्यमपञ्चमनिषादाः
गान्धारस्यापि मध्यमपञ्चमधैवताः मध्यमस्य धैवतपञ्चमनिषादाः
पञ्चमस्य धैवतस्य षड्जमध्यमपञ्चमाः षड्जग्रामे ।
मध्यमग्रामेऽपि मध्यमस्य धैवतनिषादर्षभषड्जगान्धाराः पञ्चमस्य
धैवतनिषादर्षभगान्धाराः धैवतस्य षड्जर्षभगान्धाराः

निषादस्य षड्जर्षभौ षड्जस्यर्षभगान्धारौ ॥ तत्र वदनाद्वादो संवदनात्संवादी बिवदनाद्विवादी ग्रनुवदनादनुवादीति । एतेषां च स्वराणां न्यूनत्वमधिकत्वं वा
तन्त्र्युपवादनदण्डेन्द्रियवैगुण्यादुपलभ्यते
स्वरविधानमेतच्चतुर्विधत्वमिति ।
ग्रथ द्वौ ग्रामौ षड्जग्रामो मध्यमग्रामश्चेति । ग्रत्राश्रिता द्वाविंश-
तिश्रुतयः
स्वरमण्डलसाधिताः । यथा--
तिस्रो द्वे च चतस्रश्च वतस्रिस्तिस्र एव च
द्वे चैवाद्य चतस्रश्च षड्जग्रामे भवेद्विधिः २४
चतुःश्रुतिर्भवेत् षड्ज ऋृषभस्त्रिश्रुतिः स्मृतः
द्विश्रुतिश्चैव गान्धारो मध्यमश्च चतुःश्रुतिः २५
पञ्चमस्तद्वदेव स्यात् त्रिश्रुतिर्धैवतो मतः
द्विश्रुतिश्च निषादः स्यात् षड्जग्रामे विधिर्भवेत् २६
मध्यग्रामे तु पञ्चमः श्रुत्यपकृष्टः कार्यः । एवं
स्वश्रुत्युत्कर्षादपकर्षाद्वा यदन्तरं
मार्दवादायतत्वाद्वा तत्प्रमाणं श्रुतिः निदर्शनं
त्वासामभिव्याख्यास्यामः । यथा द्वे
वीणे तुल्यप्रमाणतन्त्र्युपवादनदण्डमूर्च्छने कृत्वा षड्जग्रामाश्रिते कार्ये तयोरन्यतरस्यां पञ्चमस्यापकर्षे श्रुतिं मध्यमग्रामिकीं कृत्वा तामेव च पञ्चमस्य श्रुत्युत्कर्षवशात् षड्जग्रामिकीं कुर्यात् ।
एकश्रुतिरपकृष्टा भवति । पुनरपि तद्वदेवापकर्षेत्
यथा गान्धारनिषादवन्तावितरस्यामृषभधैवतौ प्रवेद्न्यतः द्विश्रुत्यधिकत्वात् पुनरपि तद्वदेवापकृष्टायां धैवतार्षभावितरस्यां पञ्चमषड्जौ प्रवेद्न्यतः त्रिश्रुत्यधिकत्वात् ।
तद्वत्पुनरपकृष्टायां पञ्चममध्यमषड्जा इतरस्यां मध्यमगान्धारनि-

षादवन्तः प्रवेद्दयन्ति चतुःश्रुत्यभ्यधिकत्वात् । एवमेतेन श्रुति-
निदर्शनेन द्वौ ग्रामिक्यौ द्वाविंशतिश्रुतयः प्रत्यवगन्तव्या ।
अथ मूर्च्छनाः द्वैग्रामिक्यश्चतुर्दश--
आदावुत्तरमन्द्रा स्याद्रजनी चोत्तरायता
चतुर्थी शुद्धषड्जा तु पञ्चमी मत्सरीकृता २७
अश्वक्रान्ता तथा षष्ठी सप्तमी चाभिरुद्गता
षड्जग्रामाश्रिता ह्येता विज्ञेयाः सप्तमूर्च्छनाः । इति २८
आसां षड्जनिषादधैवतपञ्चममध्यमगान्धारर्षभा आनुपूर्व्या आद्याः
स्वराः
षड्जे चोत्तरमन्द्रा स्यादृषभे चाभिरुद्गता
अश्वक्रान्ता तु गान्धारे मध्यमे मत्सरीकृता २९
पञ्चमे शुद्धषड्जा स्याद्धैवते चोत्तरायता
निषादे रजनी च स्यादित्येताः षड्जमूर्च्छनाः ३०
अथ मध्यमग्रामे--
सौवीरी हरिणाश्वा च स्यात्कलोपनता तथा
शुद्धमध्या तथा मार्गी पौरवी हृष्यका तथा
मध्यमग्रामजा ह्येता विज्ञेयाः सप्तमूर्च्छनाः ३१
आसां मध्यमगान्धारर्षभषड्जनिषादधैवतपञ्चमा आनुपूर्व्या आद्याः
स्वराः ।
मध्यमेन सौबीरी गान्धारेण हरिणाश्वा आर्षभेण कलोपनता षड्जेन
शुद्धमध्यमा
निषादेन मार्गी धैवतेन पौरवी पञ्चमेन हृष्यकेति ।
एवमेताः स्वरक्रमयुक्ताः सम्पूर्णाः षाडवौडुवीकृताः
स्वरसाधारणकृताश्चेति मूर्च्छनाश्चतुर्दश भवन्ति । अपि च--
क्रमयुक्ताः स्वराः सप्त मूर्च्छनेत्यभिसंज्ञिताः
षट्पञ्चस्वरकास्तानाः षाडबौडुविताश्रयाः ३२

साधारणकृताश्चैव काकलीसमलङ्कृताः
अन्तरस्वरसंयुक्ता मूर्च्छना ग्रामयोर्द्वयोः ३३
द्विविधैव मूर्च्छनासिद्धिः तत्र षड्जग्रामे द्विश्रुत्युत्कर्षाद्दैवतीकृते गान्धारे मूर्च्छनाग्रामयोरन्यत्वम् । तद्वशान्मध्यमादयो यथा संख्येन निषादित्वं प्रतिपद्यन्ते । तद्वन्मध्यमग्रामे धैवतमार्दवाद् द्वैविध्यं तुल्यश्रुत्यन्तरत्वाच्च संज्ञान्यत्वम् । मध्यमग्रामे हि चतुः-श्रुतिकमन्तरं पञ्चमधैवतयोः तद्गन्धारोत्कर्षाच्चतुःश्रुतिकमेव भवति । शेषाश्चापि मध्यमपञ्चमवैवतनिषादषड्जर्षभा निषादषड्जर्षभ-गान्धारमध्यमपञ्चमत्वं प्राप्नुवन्ति तुल्यश्रुत्यन्तरत्वादन्तरनिदर्शनमपि श्रुतिनिदर्शने प्रोक्तम् । तष मूर्च्छनाश्रितास्तानाश्चतुरशीतिः । तत्रैकान्नपञ्चाशत् षट्स्वराः पञ्चत्रिंशत् पञ्चस्वराः । लक्षणं तु षट्स्वराणां सप्तविधं षड्जर्षभनिषादपञ्चमहीनाश्चत्वारः षड्जग्रामे । मध्यमग्रामे तु षड्जर्षभगान्धारहीनास्त्रयः । एवमेते षट्स्वराः सर्वासु मूर्च्छनासु क्रियमाणा भवन्त्येकान्नपञ्चाशत्तानाः । पञ्चस्वराणां तु पञ्चविधमेव । लक्षणं--षड्जग्रामे षड्जपञ्चमहीनः आर्षभपञ्चमहीनः निषादवद्गान्धारहीन इति त्रयः । मध्यमग्रामे तु गान्धारनिषादवद्धीनः
ऋषभेधैवतहीन इति द्वौ । एवमेते पञ्चस्वराः सर्वासु मूर्च्छनासु क्रियमाणास्तानाः पञ्चत्रिंशद्भवन्ति । द्विविधा च तानक्रिया तन्त्र्यां प्रवेशान्निग्रहाच्च । तत्र प्रवेशनं मधुर स्वरविप्रकषादुत्तरमार्दवाद्वा । निग्रहस्त्वसंस्पर्शः मध्यमस्वरेणैव तु मूर्च्छनानिर्देशः कार्यो भवति अनाशित्वान्मध्यमस्य निग्रहे पर्यग्रहैवा । इदं च प्रयोक्तृश्रोतृसुखार्थं च
मूर्च्छनानानात्वम् । मूर्च्छनातानप्रयोजनमपि स्थानप्राप्त्यर्थम् । स्थानं च त्रिविधं पूर्वोक्तलक्षणं काकुविधाविति । साधारणमिदानीं व्याख्यास्यामः तत्र साधारणं नामान्तरस्वरता कस्मात् द्वयोरन्तरे

भवति यत्तत्साधारणम् । यथा--
छायासु भवति शीतं प्रस्वेदो भवति चातपस्थस्य
न च नागतो वसन्तो न च निःशेषः शिशिरकालः ३४
इति कालसाधारणता । तत्र द्वे साधारणे जातिसाधारणं स्वर
साधारणं च । स्वरसाधारणं काकल्यन्तरस्वरौ । तत्र द्विश्रुत्युत्कृष्टो
निषादः काकलीसंज्ञो भवति । तद्वद्गान्धारोऽन्तरस्वरसंज्ञो भवति ।
जातिसाधारणमेकांशानामविशेषाज्जातीनां समवायात्प्रत्यंशं
लक्षणसंज्ञानमिति । स्वरसाधारणा द्विविधं द्वैग्रामिकं कस्मात्
साधारणोऽत्र स्वरविशेष इति
कृत्वा षड्जत्वासाधारणमुच्यते । एवं मध्यमेऽपि । अस्य तु
प्रयोगसौक्ष्म्यात्कैशिकमिति द्वितीयं नाम निष्पद्यते । कलत्वाच्च
काकलीसंज्ञो भवति विकृतत्वाच्चानंशः
आप्तोपदेशाच्च सप्तभ्यो नान्यो निषादवानेव । यथा हि षण्णां
रसानामन्यतमः क्षारसंज्ञितस्तथा निषादः काकलीसंज्ञो
गान्धारश्चान्तरस्वरसंज्ञो भवति ।
भवतश्चात्र--
अन्तरस्वरसंयोगो नित्यमारोहिसंश्रयः
कार्यो ह्यल्पो विशेषेण नावरोही कदाचन ३५
क्रियमाणोऽवरोही स्यादल्पो वा यदि वा बहुः
जातिरागं श्रुतिं चैव निहन्यादन्तरस्वरः ३६ इति
जातीरिदानीं वक्ष्यामः
स्वरसाधारणगतास्तिस्रो ज्ञेयास्तु जातयः
मध्यमा पञ्चमी चैव षड्जमध्या तथैव च ३७
आसामंशास्तु विज्ञेयाः षड्जमध्यमपञ्चमाः
यथा स्वदुर्बलतरव्यत्यासात्पञ्चमे तथा ३८
जातयोऽष्टादशेत्येवं ब्रह्मणामिहितं पुरा

तास्त्वहं वर्तयिष्यामि ग्रहांशादिविभागतः ३९
षाड्जीचैवार्षभी चैव धैवत्यथ निषादिनी
षड्जोदीच्यवती चैव तथा वै षड्जकैशिकी ४०
षड्जमध्या तथा चैव षड्जग्रामसमाश्रयाः
अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रिताः ४१
गान्धारी मध्यमाचैव गान्धारोदीच्यथा तथा
पञ्चमी रक्तगान्धारी तथा गान्धारपञ्चमी ४२
मध्यमोदीच्यवा चैव नन्दयन्ती तथैव च
कर्मारवी च विज्ञेया तथान्ध्री कैशिकी मता ४३
स्वरसाधारणगतास्तिस्रो ज्ञेयास्तु जातयः
मध्यमा षड्जमध्या च पञ्चमी चैव सूरिभिः ४४
आसामंशास्तु विज्ञेयाः षड्जमध्यमपञ्चमाः
यथास्वं दुर्बलतरं व्यत्यासात्त्वत्र पञ्चमी ४५
स्वरजातायः शुद्धा विकृताश्च । तत्र शुद्धाः षाड्जी आर्षभी धैवती निषादिनी च षड्जग्रामे । गान्धारी मध्यमा पञ्चमीति मध्यमग्रामे । एताश्चान्यूनस्वराः स्वस्वरांशग्रहन्यासापन्यासाश्च । विकृता लक्ष्यन्ते तेभ्योऽन्यतमेन द्वाभ्यां बहुभिर्वालक्षणैर्विक्रिया-मुपगता न्यासवर्जं विकृतसंज्ञा भवन्ति । न्यासविधावप्यासां मन्द्रो नियमः विकृतास्वनियमः । तत्रैकादशसंसर्गजा विकृता अपरस्परसंसर्गादेकादश निर्वर्तयन्ति । यथा--
शुद्धा विकृताश्चैव हि समवायाज्ञातयस्तु जायन्ते
पुनरेवाशुद्धकृता भवन्त्यथैकादशान्यास्तु ४६
तासां यन्निर्वृत्ताः स्वरेष्वथांशेषु जातिषु च जातिः
तद्वक्ष्यामि यथावत्संक्षेपेण क्रमेणेह ४७
षाड्जीमध्यमाभ्यां निवृत्ता ज्ञेया षड्जमध्यमा षाड्जीगान्धारीभ्यां षड्जाकैशिकी गान्धारीषड्जधैवतीभिः षड्जोदीच्यवा षड्जागा-

न्धारी मध्यमाधैवतीभिर्गान्धारोदीच्यवा धैवतीपञ्चमीमध्यमागा-
न्धारीभिर्मध्यमोद्वीच्यवा गान्धारीमध्यमापञ्चमीनिषादवतीमी
रक्तगान्धारी गान्धार्यार्षिभ्यामान्ध्री पञ्चम्यार्षमीगान्धारीभिर्नन्द-
यन्ती निषादवत्यार्षमीपञ्चमीभिः कार्मारवी पञ्चमीगान्धारीभ्यां
गान्धारपञ्चमी
धैवत्यार्षमीवर्जाभिः कैशिकी ॥
स्यात्षड्जमध्यमाभ्यां निर्वृत्ता षड्जमध्यमाजातिः
गान्धारीषाड्जीभ्यां संयोगात्षड्जकैशिकी चापि ॥
षाड्जीगान्धारीभ्यां धैवत्या चापि या विनिष्पन्ना
संसर्गाद्विज्ञेया सा षड्जोदीच्यवा जातिः ॥
षाड्जी गान्धारी पञ्चमी तथा धैवती च खलु जातिः
गान्धारोदीच्यवतीं जातिं निर्वर्तयन्त्येताः ॥
गान्धारपञ्चमाभ्यां मध्यमया विप्रचिता च धैवत्या
जातिस्तु मध्यमोदीच्यवेति सद्भिः सदा ज्ञेया ॥
गान्धारीपञ्चमयोः सप्तम्याश्चैव रक्तगान्धारी
गान्धार्यार्षभिकाभ्यामान्ध्री संजायते जातिः ॥
योनिस्तु नन्दयन्त्यास्त्वार्षमिका पञ्चमीं सगान्धारी
कार्मास्वीं निषादी सार्षभिका पञ्चमीं कुर्युः
धैवत्यर्षभिकाभ्यां हीनां खलु कैशिकीं कुर्युः ॥
परस्परविनिष्पन्ना ज्ञेया ह्येवं तु जातयः
पृथग्लक्षणसंयुक्ता द्वैग्रामिकाः स्वराश्रयाः ४८
चतस्रो जातयो नित्यं ज्ञेयाः सप्तस्वरा बुधैः
चतस्रः षट्स्वरा ज्ञेयाः स्मृताः पञ्चस्वरा दश ४९
मध्यमोदीच्यवा चैव तथा वै षड्जकैशिकी
कार्मारवी च संपूर्णा तथा गान्धारपञ्चमी ५०
षाड्ज्यान्ध्री नन्दयन्ती च गान्धारोदीच्यवा तथा

चतस्त्रः षट्स्वरा ह्येताः ज्ञेयाः पञ्च स्वरा दश ५१
नैषादी चार्षभी चैव धैवती षड्जमध्यमा
षड्जोदीच्यवती चैव पञ्च षड्जाश्रिताः स्मृताः ५२
गान्धारी रक्तगान्धारी मध्यमा पञ्चमी तथा
कैशिकी चैव पञ्चैता मध्यमग्रामसंश्रयाः ५३
यास्ताः सप्तस्वरा ज्ञेया याश्चैताः षट्स्वराः स्मृताः
कदाचित् षाडवीभूताः कदाचिच्चौडुवे मताः ५४
षड्जग्रामे तु संपूर्णा विज्ञेया षड्जकैशिकी
षट्स्वरा चैव विज्ञेया षाड्जी गान्धारयोगतः ५५
संपूर्णा मध्यमग्रामे ज्ञेया कार्मारवी तथा
गान्धारपञ्चमी चैव मध्यमोदीच्यवा तथा
पुनश्च षट्स्वरा ज्ञेया गान्धारोदीच्यवा बुधैः ५६
आन्ध्री च नन्दयन्ती च मध्यमग्रामसंश्रयाः
एवमेता बुधैर्ज्ञेया द्वैग्रामिक्योऽपि जातयः ५७
अत ऊर्ध्वं प्रवक्ष्यामि तासामंशविकल्पनम्
षट्स्वराः सप्तमे ह्यंशे नेष्यते षड्जमध्यमा ५८
संवाद्यलोपाद्गान्धारे तद्वदेव हि नेष्यते
गान्धारीरक्तगान्धारीकैशिकीनां तु पञ्चमः ५९
षड्जायां चैव गान्धारमंशकं विद्धि षाडवम्
षाडवं धैवते नास्ति षड्जोदीच्यामयांशके ६०
संवाद्यलोपात्सप्तैताः षाट्स्वर्येण विवर्जिताः
गान्धारीरक्तगान्धार्योः षड्जमध्यमपञ्चमाः ६१
सप्तमश्चैव विज्ञेयो येषु नौडुवितं भवेत्
द्वौ षड्जमध्यमांशौ तु गान्धारोऽथ निषादवान् ६२
ऋषभश्चैव पञ्चम्यां कैशिक्यां चैव धैवतः
एवं तु द्वादशैवेह वर्ज्याः पञ्च स्वराः सदा ६३

तास्त्वनौडुविता नित्यं कर्तव्या हि स्वराश्रयाः
सर्वस्वराणां नाशस्तु विहितस्त्वथ जातिषु ६४
न मध्यमस्य नाशस्तु कर्तव्यो हि कदाचन
सर्वस्वराणां प्रवरो ह्यनाशी मध्यमः स्मृतः
गान्धर्वकल्पे विहितः सामस्वपि च मध्यमः ६५
दशकं जातिलक्षणम्--
ग्रहांशौ तारमन्द्रौ च न्यासोऽपन्यास एव च
अल्पत्वं च बहुत्वं च षाडवौडुविते तथा ६६
अथ ग्रहाः ।
ग्रहास्तु सर्वजातीनामंशवत्परिकीर्तिताः
यत्प्रवृत्तं भवेद्गेयमंशो ग्रहविकल्पितः ६७
तत्रांशो नाम--
यस्मिन् भवति रागश्च यस्माच्चैव प्रवर्तते
मन्द्रश्च तारमन्द्रश्च योऽत्यर्थं चोपलभ्यते ६८
अनेकस्वरसंयोगे योऽत्यर्थमुपलभ्यते
अन्यश्च बलिनो यस्य संवादी चानुवाद्यपि
ग्रहापन्यासविन्याससंन्यासन्यासगोचरः
अनुवृत्तश्च यस्येह सोंशः स्याद्दशलक्षणः ६९
पञ्चस्वरपरा तारगतिर्यथा
अंशात्तारगतिं विद्यादाचतुर्थस्वरादिह
आ पञ्चमात्पञ्चमाद्वा नातःपरमिहेष्यते ७०
लोप्यस्वरोऽपि गण्यः स्याद्बुधैस्तारविधौ पुनः
त्रिधा मन्द्रगतिः । अंशपरा न्यासपरा अपरन्यासपरा चेति ।
मन्द्रस्त्वंशपरो नास्ति न्यासौ तु द्वौ व्यवस्थितौ
गान्धारन्यासलिङ्गे तु दृष्टमार्षभसेवनम् ७१
अथ न्यास एकविंशतिसंख्यः । अङ्गसमाप्तौ न्यासः । तद्वदपन्यासो

ह्यङ्गमध्ये षट्पञ्चाशत्संख्यः । यथा--
न्यासोऽङ्गसमाप्तौ स चैकविंशतिसंख्यस्तथा । १६ अक्षराणि
षट्पञ्चाशत्संख्योऽपन्यासोऽङ्गमध्ये भवेत्  ७२ । १४ अक्षराणि
सन्नयासविन्यासावप्यङ्गप्यंश मध्य एव । अनियतत्वाच्च
बहुत्वमिति ।
तत्र प्रथमं विदारीमध्ये न्यासस्वरप्रयुक्तस्तु
विवदनशीलं मुक्त्वा सन्नयासः सोऽभिधातव्यः
कृत्वा पदावसाने विन्यासात्क्वापि विन्यासः  ७३
द्विविधमल्पत्वं लङ्घनादनभ्यासाच्च । तत्र षाडबौडुबितवराणा-
मनंशानां च गीतान्तरमार्गमुपगतानां स्वराणामनभ्यासः
लङ्घनादनभ्यासाद्यथा
जात्यल्पत्वं तद्बहुलत्वं च ।
तथा--अल्पत्वेऽथ बहुत्वे बलवदबलता विनिश्चयादेव
जातिस्वरैस्तु नित्यं जात्यल्पत्वं द्विविधमेतत्  ७४
सञ्चारांशे बलस्थानामल्पत्वे दुर्बलासु च
न्यासश्चान्तरमार्गस्तु जातीनां व्यक्तिकारकः  ७५
षट्स्वरं षाडुवितं चतुर्दशविधं सप्तचत्वारिंशत्प्रकारं पूर्वोक्तविधानं
यथाजात्यंशप्रकारमिति ।
पञ्चस्वरमौडुवितं विज्ञेयं दशविधं प्रयोगज्ञैः
त्रिंशत्प्रकारविहितं पूर्वोक्तं लक्षणं चास्य  ७६
षट्स्वरस्य प्रयोगोऽस्ति तथा पञ्चस्वरस्य च
चतुःस्वरप्रयोगोऽपि ह्यवकृष्टध्रुवास्विह  ७७
द्वैग्रामिकीनां जातीनां सर्वासामपि नित्यशः
अंशास्त्रिषष्टिर्विज्ञेयास्तेषां चैवांशवद्ग्रहाः  ७८
अंशग्रहमिदानीं वक्ष्यामः । तत्र
मध्यमोदीच्यवायास्तु नन्दयन्त्यास्तथैव च

तथा गान्धारपञ्चम्याः पञ्चमोंऽशो ग्रहस्तथा ७९
धैवत्याश्च तथा ह्यंशौ विज्ञेयौ धैवतर्षभौ
पञ्चम्याश्च तथा ज्ञेयौ ग्रहांशौ पञ्चमर्षभौ ८०
गान्धारोदीच्यवायास्तु ग्रहांशौ षड्जमध्यमौ
आर्षभ्याश्च ग्रहा अंशा धैवतर्षभसप्तमाः ८१
गान्धारश्च निषादश्च ह्यार्षभश्च तथापरः
निषादिन्यास्त्रयो ह्येते ग्रहा अंशाश्च कीर्तिताः ८२
षड्जपञ्चमगान्धारैस्त्रिभिरेव प्रकीर्तिताः
अंशैर्ग्रहैस्तथा चैव विज्ञेया षड्जकैशिकी ८३
षड्जश्च मध्यमश्चैव निषादो धैवतस्तथा
षड्जोदीच्यवतीजातेर्ग्रहा अंशाश्च कीर्तिताः ८४
पञ्चमश्चार्षभश्चैव निषादो धैवत्तस्तथा
कार्मारव्या बुधैरंशा ग्रहाश्च परिकीर्तिताः ८५
गान्धारश्चार्षभश्चैव पञ्चमोऽथ निषादवान्
चत्वारोंऽशा भवन्त्यान्ध्र्या ग्रहाश्चैव तथैव हि ८६
षड्जश्चाथर्षभश्चैव मध्यमः पञ्चमस्तथा
मध्यमाया ग्रहा ज्ञेया अंशाश्चैव सधैवताः ८७
निषादषड्जगान्धारमध्यमाः पञ्चमस्तथा
गान्धारीरक्तगान्धार्योर्ग्रहा अंशाः प्रकीर्तिताः ८८
षाड्जी धैवतगान्धारषड्जमध्यमपञ्चमैः
ग्रहैरंशैश्च विज्ञेया विकृता स्वरयोगतः ८९
कैशिक्याश्चार्षभं हित्वा ग्रहांशाः षट् स्वराः स्मृताः
सप्तस्वरग्रहांशा तु विज्ञेया षड्जमध्यमा ९०
एते त्रिषष्टिर्विज्ञेयाः सर्वास्वंशास्तु जातिषु
अंशवच्च ग्रहास्तासां सर्वासामेव नित्यशः ९१
सर्वासामेव जातीनां त्रिजातिस्तु गणः स्मृतः

ते च सप्त गणा ज्ञेया वर्धमानस्वरा बुधैः ९२
एकस्वरो द्विस्वरश्च त्रिस्वरोऽथ चतुःस्वरः
पञ्चस्वरश्चतुर्धा स्यादेकधा सप्तषट्स्वरौ ९३
एतदुक्तं मया त्वासां ग्रहांशपरिकल्पनम्
पुनश्चैव प्रवक्ष्यामि न्यासापन्यासयोगतः ९४
पञ्चांशा तु भवेत् षाड्जी निषादर्षभवर्जिता
अपन्यासो भवेदत्र गान्धारः पञ्चमस्तथा ९५
न्यासश्चात्र भवेत् षड्जो लोप्यः सप्तम एव च
षड्जगान्धारसञ्चारः षड्जधैवतयोस्तथा ९६
षाडवं सप्तमो पेतमल्पौ वै सप्तमर्षभौ
गान्धारस्य च बाहुल्यं त्वत्र कार्यं प्रयोक्तृभिः ९७
आर्षभ्यामृषभस्त्वंशो निषादो धैवतस्तथा
एत एव ह्यपन्यासा न्यासश्चाप्यृषभः स्मृतः
षट्पञ्चस्वरता चात्र षड्जपञ्चमयोर्विना ९८
धैवत्यां धैवतो न्यासस्त्वंशावृषभधैवतौ
अपन्यासा भवन्त्यत्र धैवत्तार्षभमध्यमाः ९९
षड्जपञ्चमहीनं तु पाञ्चस्वर्यं विधीयते
पञ्चमेन विना चैव वाडवं परिकीर्तितम् १००
आरोहिणौ च तौ कार्यौ लङ्घनीयौ तथैव च
निषादश्चर्षाभश्चैव गान्धारो बलवांस्तथा १०१
निषादिन्यां निषादोंऽशो सगान्धारर्षभस्तथा
एत एव ह्यपन्यासा न्यासश्चैवात्र सप्तमः १०२
धैवत्या इव कर्तव्ये षाडवौडविते तथा
तद्वच्च लङ्घनीयौ तु बलवन्तौ तथैव च १०३
अंशास्तु षड्जकैशिक्याः षड्जगान्धारपञ्चमाः
अपन्यासा भवन्त्यत्र षाड्जपञ्चमसप्तमः १०४

गान्धारश्च भवेन्न्यासो हैनस्वर्यं न चात्र तु
दौर्बल्यं चात्र कर्तव्यं मध्यमस्यार्षभस्य च १०५
षड्जश्च मध्यमश्चैव निषादो धैवतस्तथा
स्युः षड्जोदीच्यवांशास्तु न्यासश्चैव तु मध्यमः १०६
अपन्यासो भवत्यस्य धैवतः षड्ज एव च
परस्परांशगमनमिष्टतश्च विधीयते १०७
षाट्स्वर्यमृषभापेतं कार्यं गान्धर्ववेदिभिः
पञ्चमार्षभहीनं तु पाञ्चस्वर्यं तु तत्र वै १०८
षाड्जश्चाप्यृषभश्चैव गान्धारश्च बली भवेत्
गान्धारस्य च बाहुल्यं मन्द्रस्थाने विधीयते १०९
सर्वेऽशाः षड्जमध्यायामपन्यासास्तथैव च
षड्जश्च मध्यमश्चापि न्यासौ नार्यौ प्रयोक्तृभिः ११०
गान्धारसप्तमापेतं पाञ्चस्वर्यं विधीयते
षाडवं सप्तमापेतं कार्यं चात्र प्रयोगतः १११
सर्वस्वराणां सञ्चार इष्टास्तु विधीयते
षड्जग्रामाश्रिता ह्येता विज्ञेयाः सप्त जातयः ११२
अतः परं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः
गान्धार्याः पञ्च एवांशा धैवतर्षभवर्जिताः ११३
षड्जश्च पञ्चमश्चैव ह्यपन्यासौ प्रकीर्तितौ
गान्धारश्च भवेन्न्यासः षाडवं चर्षभं विना ११४
धैवतर्षभयोर्हीनं तथा चौडवितं भवेत्
लङ्घनीयौ च तौ नित्यमार्षभाद्धैवतं व्रजेत्
विहितस्त्विति गान्धार्याः स्वरन्यासांशगोचरः ११५
लक्षणं रक्तगान्धार्या गान्धार्या एव यत्स्मृतम्
धैवतो बलवानत्र दौर्बल्यं तस्य लोपतः ११६
गान्धारषड्जयोश्चात्र सञ्चारश्चार्षभाद्विना

ग्रपन्यासस्तथा चैव मध्यमस्तु विधीयते  ११७
गान्धारोदीच्यवांशौ तु विज्ञेयौ षड्जमध्यमौ
पाञ्चस्वर्यं न चैवात्र षाट्स्वर्यमृषभं विना  ११८
कार्यश्चान्तरमार्गश्च न्यासोपन्यास एव च
षड्जोदीच्यवतीवत्तु पाञ्चस्वर्येण जातुचित्  ११९
मध्यमाया भवन्त्यंशा विना गान्धारसप्तमौ
एत एव ह्यपन्यासा न्यासश्चैव तु मध्यमः  १२०
गान्धारसप्तमापेतं पाञ्चस्वर्यं विधीयते
षाडवं चाप्यगान्धारं कर्तव्यं तु प्रयोगतः  १२१
षड्जमध्यमयोश्चात्र कार्यं बाहुल्यमेव हि
गान्धारलङ्घनं चात्र कार्यं नित्यं प्रयोक्तृभिः  १२२
मध्यमोदीच्यवा पूर्णा ह्यंश एकस्तु पञ्चमः
शेषो विधिस्तु कर्तव्यो गान्धारोदीच्यवां गतः  १२३
द्वावंशावथ पञ्चम्यामृषभः पञ्चमस्तथा
स निषादावपन्यासौ न्यासश्चैव तु पञ्चमः  १२४
मध्यमावत्तु कर्तव्ये षाडवौडुविते तथा
दौर्बल्यं चात्र कर्तव्यं षड्जगान्धारमध्यमैः  १२५
कुर्यादप्यत्र सञ्चारं पञ्चमस्यार्षभस्य च
गान्धारगमनं चैव कार्यं त्वल्पश्च सप्तमः  १२६
ग्रथ गान्धारपञ्चम्याः पञ्चमोंऽशः प्रकीर्तितः
तारगत्या तु षड्जोऽपि कदाचिन्नातिवर्तते  १२७
ऋृषभः पञ्चमश्चैव ह्यपन्यासौ प्रकीर्तितौ
न्यासश्चैव तु गान्धारो सा च पूर्णस्वरा सदा
पञ्चम्या यश्च गान्धार्याः सञ्चारः स विधीयते  १२८
पञ्चमश्चार्षभश्चैव गान्धारोऽथ निषादवान्
चत्वारोंऽशा भवन्त्यान्ध्रय्रामपन्यासास्त एव हि  १२९

गान्धारश्च भवेन्न्यासः षड्जापेतं तु षाडवम्
गान्धारार्षभयोश्चापि सञ्चारस्तु परस्परम्  १३०
सप्तमस्य च षष्ठस्य न्यासो गत्यनुपूर्वशः
षड्जस्य लङ्घनं चात्र नास्ति चौडुवितं सदा  १३१
नन्दयन्त्याः क्रमान् न्यासापन्यासांशाः प्रकीर्तिताः
गान्धारो मध्यमश्चैव पञ्चमश्चैव नित्यशः  १३२
षड्जो लोप्यश्च लङ्घ्यश्च नान्ध्रीसञ्चरणं भवेत्
लङ्घनं ह्यृषभस्यापि तच्च मन्द्रगतं स्मृतम्  १३३
तारगत्या तु षड्जस्तु कदाचिन्नातिवर्तते
गान्धारो वा ग्रहः कार्यस्तथा न्यासश्च नित्यशः  १३४
कार्मारव्याः स्मृता ह्यंशा ऋार्षभः पञ्चमस्तथा
धैवतश्च निषादश्चाप्यपन्यासास्त एव तु
पञ्चमश्च भवेन् न्यासो हैनस्वर्यं न चात्र तु  १३५
गान्धारस्य विशेषेण सर्वतो गमनं भवेत्  १३६
कैशिक्यास्तु तथा ह्यंशाः सर्वे चैवार्षभं विना
एत एव ह्यपन्यासा न्यासौ गान्धारसप्तमौ  १३७
धैवतेंऽशे निषादे च न्यासः पञ्चम इष्यते
ऋपन्यासः कदाचित्तु ऋृषभोऽपि विधीयते  १३८
ऋार्षभे षाडवं चात्र धैवतर्षभवर्जितम्
तथा चौडुवितं कुर्याद् बलिनौ चान्त्यपञ्चमौ  १३९
दौर्बल्यमृषभस्यात्र लङ्घनं च विशेषतः
ऋंशवत् कल्पितश्चान्यैः षाडवे तु विधीयते
षड्जमध्यावदत्रापि सञ्चारस्तु भवेदिह  १४०
एवमेता बुधैर्ज्ञेया जातयो दशलक्षणाः
यथा यस्मिन् रसे याश्च गदतो मे निबोधत  १४१
इति भरतीये नाट्यशास्त्रे जातिविकल्पनं

नामाध्यायोऽष्टाविंशतितमः

अथैकोनत्रिंशोऽध्यायः

षड्जोदीच्यवती चैव षड्जमध्या तथैव च
मध्यपञ्चमबाहुल्यात्कार्या शृङ्गारहास्ययोः १
षाड्जी त्वथार्षभी चैव स्वस्वरांशपरिग्रहात्
वीररौद्राद्भुतेष्वेते प्रयोज्ये गानयोक्तृभिः २
निषादेंऽशे तु नैषादी गान्धारे षड्जकैशिकी
करुणे तु रसे कार्या जातिगानविशारदैः ३
धैवती धैवतांशे तु बीभत्से सभयानके
ध्रुवाविधाने कर्तव्या जातिर्गाने प्रयत्नतः
रसं कार्यमवस्थां च ज्ञात्वा योज्या प्रयोक्तृभिः
षड्जग्रामाश्रिता ह्येताः प्रयोज्या जातयो बुधैः ४
अतः परं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः
गान्धारीरक्तगान्धार्यौ गान्धारांशोपपत्तितः
करुणे तु रसे कार्ये निषादेंऽशे तथैव च ५
मध्यमा पञ्चमी चैव नन्दयन्ती तथैव च
गान्धारपञ्चमी चैव मध्यमोदीच्यवा तथा
मध्यमपञ्चमबाहुल्यात् कार्याः शृङ्गारहास्ययोः ६
कार्मारवी तथा चान्ध्री गान्धारोदीच्यवा तथा
वीरे रौद्रेऽद्भुते कार्याः षड्जर्षभांशयोजिताः
कैशिकी धैवतांशे तु बीभत्से सभयानके ७
एकैव षड्जमध्या ज्ञेया सर्वरससंश्रया जातिः
तस्यास्त्वंशाः सर्वे स्वरास्तु विहिताः प्रयोगविधौ ८
यो यदा बलवान् यस्मिन् स्वरो जातिसमाश्रयात्
तत्प्रवृत्तं रसे कार्यं गातं गेये प्रयोक्तृभिः ९

मध्यपञ्चमभूयिष्ठं गानं शृङ्गारहास्ययोः
षड्जर्षभप्रायकृतं वीररौद्राद्भुतेषु च १०
गान्धारः सप्तमश्चायं करुणे गानमिष्यते
तथा धैवतभूयिष्ठं बीभत्से सभयानके ११
एकैव षड्जमध्या विज्ञेयाऽखिलरसाश्रया जातिः
तस्यास्त्वंशाः सर्वे स्वराश्च विहिताः प्रयोगविधौ १२
सर्वेष्वंशेषु रसा नियमविधानेन सम्प्रयोक्तव्याः
काकल्यन्तरविहिता विशेषयुक्तास्तु बलवन्तः
एवमेता बुधैर्ज्ञेया जातयो नाट्यसंश्रयाः १३
पाठ्यप्रयोगविहितान् स्वरांश्चापि नोबिधत
हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ
षड्जर्षभौ च कर्तव्यौ वीररौद्राद्भुतेष्वथ १३-१
गान्धारश्च निषादश्च कर्तव्यौ करुणे रसे
धैवतश्च प्रयोगज्ञैर्बीभत्से सभयानके १३-२
अत ऊर्ध्वं प्रवक्ष्यामि वर्णालङ्कारलक्षणम्
आरोही चावरोही च स्थायिसञ्चारिणौ तथा
वर्णाश्चत्वार एवैते ह्यलङ्कारास्तदाश्रयाः १४
आरोहन्ति स्वरा यत्रारोहीति स तु संज्ञितः
स्थिराः स्वराः समा यत्र स्थायी वर्णः स उच्यते
सञ्चरन्ति स्वरा यत्र स सञ्चारीति कीर्तितः १६
शारीरस्वरसम्भूतास्त्रिस्थानगुणगोचराः
चत्वारो लक्षणोपेता पर्णास्तत्र प्रकीर्तिताः १७
यत्र चैवावरोहन्ति सोऽवरोही प्रकीर्तितः १७-२
एवं लक्षणसंयुक्तं यदा वर्णोऽनुकर्षति
तदा वर्णस्य निष्पत्तिर्ज्ञेया स्वरसमुद्भवा १८
एते वर्णास्तु विज्ञेयाश्चत्वारो गीतयोजकाः

एतान् समाश्रितान् सम्यगलङ्कारान् निबोधत १९
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च
प्रसन्नमध्यश्च तथा क्रमरेचित एव च
प्रस्वारश्च प्रसादश्च सप्तैते स्थायिवर्णगाः २०
अथ सञ्चारिजान् भूयः कीर्त्यमानान्निबोधत
मन्द्रस्तथा प्रसन्नादिः प्रेङ्खितो बिन्दुरेव च
सन्निवृत्तः प्रवृत्तश्च रेचितः कम्पितः समः २१
कुहरश्चैव वेणुश्च रञ्जितो ह्यवलोकितः
आवर्तकः परावृत्तः सञ्चारिण्यश्चतुर्दश २२
निष्कर्षोऽभ्युच्चयश्चैव हसितो बिन्दुरेव च
प्रेङ्खोलितस्तथाक्षिप्तो विस्तीर्णोद्घटितस्तथा २३
ह्लादमानः सम्प्रदानः सन्धिः प्रच्छादनस्तथा
प्रसन्नादिः प्रसन्नान्त इत्यारोहे त्रयोदश २४
विधूतश्च त्रिवर्णश्च तथोद्वाहित एव च
उद्गीतश्च तथा वेणिर्विज्ञेया ह्यवरोहिणः २५
सप्तरूपगता ज्ञेया अलङ्कारा बुधैस्त्विमे
नैते ध्रुवास्विष्टाः श्रुतिवर्णप्रकर्षणात् २६
न हि वर्णप्रकर्षस्तु ध्रुवाणां सिद्धिरिष्यते
श्येनो वाऽप्यथवा बिन्दुर्ये चान्येऽति प्रकर्षिणः २७
ते ध्रुवाणां प्रयोगेषु न कार्याः स्वप्रमाणतः
तद्ध्रुवाणां प्रयोगे तु कार्या ह्यारोहिणः स्वराः २८
यस्मादर्थानुरूपा हि ध्रुवा कार्याऽर्थदर्शिका
वर्णानां तु पुनः कार्यं कुशत्वं पदसंश्रयम् २९
येऽत्र प्रयोगे गच्छन्ति तांश्च वर्णान् निबोधत्
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ३०
प्रसन्नमध्यमश्चैव बिन्दुः कम्पितरेचितौ

तारश्चैव हि मन्द्रश्च तथा तारतरः पुनः
प्रेङ्खोलितस्तारमन्द्रौ मन्द्रतारः समस्तथा ३१
सन्निवृत्तः प्रवृत्तश्च प्रसादोऽपाङ्ग एव च
ऊर्मिः प्रङ्खोऽवलोकश्च इत्येते सर्ववर्णगाः ३२
स्थायिवर्णादृते चैषां सम्प्रवक्ष्यामि लक्षणम्
क्रमशो दीपितो यः स्यात्प्रसन्नादिः स कथ्यते ३३
व्यस्तोच्चारित एवैष प्रसन्नान्तो विधीयते
आद्यन्तयोः प्रसन्नत्वात्प्रसन्नाद्यन्त इष्यते ३४
प्रसन्नमध्यो मध्ये तु प्रसन्नत्वादुदाहृतः
सर्वसाम्यात् समो ज्ञेयः स्थितस्त्वेकस्वरोऽपि यः ३५
आदिमध्यलयो यत्र स चोर्मिरिति संज्ञितः
श्रुतयोऽन्त्याद् द्वितीयस्य मृदुमध्यायताः स्वराः ३६
आयतत्वं भवेन्नीचे मृदुत्वं तु विपर्यये
स्वे स्वरे मध्यमत्वं च मृदुमध्यमयोस्तथा
दीप्तायते करुणानां श्रुतीनामेष निश्चयः ३७
बिन्दुरेककलो ज्ञेयः कम्पितश्च कलाद्वयम्
गतागतप्रवृत्तो यः स प्रेङ्खोलित इष्यते ३८
यस्तु कण्ठे स्वरोऽघः स्यात् स तु तारः प्रकीर्ततः
उरोगतस्तथा मन्द्रो मूर्ध्नि तारतरस्तथा ३९
क्रमागतस्तु यस्तारः षष्ठ पञ्चम एव वा
तारमन्द्रप्रसन्नस्तु ज्ञेयो मन्द्रगतः स च ४०
लङ्घयित्वा परान् मन्द्रात् परां तारगतिं गतः
मन्द्रतारप्रसन्नस्तु विज्ञेयो ह्यवरोहणात् ४१
प्रसन्नान्तः स्वरो यत्र प्रसादः स तु संज्ञितः
अपाङ्गकिस्तु विज्ञेयः स्वराणामथ सञ्चरात् ४२
रेचितः शिरसि ज्ञेयः कम्पितं तु कलात्रयम्

कण्ठे निरुद्धपवनः कुहरो नाम जायते ४३
एवमेते त्वलङ्कारा विज्ञेया वर्णसंश्रयाः
अथ गीतीः प्रवक्ष्यामि छन्दोऽक्षरसमन्विताः ४४
शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव
अविभूषितेव च स्त्री गीतिरलङ्कारहीना स्यात् ४५
प्रथमा मागधी ज्ञेया द्वितीया चार्धमागधी
सम्भाविता तृतीया तु चतुर्थी पृथुला स्मृता ४६
त्रिनिवृत्तप्रगीता या गीतिः सा मागधी स्मृता
अर्धतः सन्निवृत्ता च विज्ञेया ह्यर्धमागधी ४७
सम्भाविता च विज्ञेया गुर्वक्षरसमन्विता
पृथुलाख्यः च विज्ञेया नित्यं लघ्वक्षरान्विता ४८
एतास्तु गीतयो ज्ञेया ध्रुवायोगं विनैव हि
गान्धर्व एव योज्यास्तु नित्यं गानप्रयोक्तृभिः ४९
गीतयो गदिताः सम्यग्धातूंश्चैव निबोधत
विस्तारः करणश्च स्यादाविद्धो व्यञ्जनस्तथा
चत्वारो धातवो ज्ञेया वादित्रकरणाश्रयाः ५०
सङ्घातोऽथ समवायजश्च विस्तारजोऽनुबन्धकृतः
ज्ञेयश्चतुष्प्रकारो धातुर्विस्तारसंज्ञश्च ५१
विधयस्तु स्मृतास्तस्य पूर्वं विस्तार एव च
सङ्घातसमवायौ तु विज्ञेयौ तौ द्विकत्रिकौ ५२
पूर्वश्चतुर्विधस्तत्र पश्चिमोऽष्टविधः स्मृतः
करणानां विशेषेण विज्ञेयौ तौ पृथक् पृथक् ५३
अधश्चोर्ध्वं च विज्ञेयावधरोत्तरजौ स्वरौ
सङ्घातजो विधिस्त्वेष विज्ञेयो वादनं प्रति ५४
द्विरुत्तरो द्विरधरस्त्वधरादिश्चोत्तरावसानश्च
ज्ञेयस्तथोत्तरादिः पुनरप्यधरावसानश्च ५५

समवायजस्तथा स्यात् त्रिरुत्तरस्त्रिरधरश्च विज्ञेयः
द्विरधरोत्तराधरान्ती द्विश्चोत्तरविरामश्च ५६
उत्तरमुखो द्विरधरो द्विरुत्तरावसानश्च
मध्योत्तरो द्विरधरो द्विरुत्तरोऽप्यधरमध्यश्च ५७
अनुबन्धस्तु ज्ञेयो व्याससमासाच्च नियतमेषां हि
एवं चतुर्दशविधो विस्तारो धातुराख्यातः ५८
रिभितोच्चयनीरिभितो ह्रादस्तु तथानुबन्धः स्यात्
पञ्चविधो विज्ञेयो वीणावाद्ये करणधातुः ५९
त्रिकपञ्चसप्तनवकैर्यथाक्रमं संयुतो भवेद्वाद्ये
सर्वैरनुबन्धकृतैर्गुर्वन्तः स्यात्करणधातुः ६०
क्षेपः प्लुतोऽतिपातोऽतिकीर्णमनुबन्धसंज्ञितश्चैव
आविद्धो विष्टेयो धातुर्वै पञ्चविध एव ६१
द्विस्त्रिचतुष्कनवकैः प्रहारैः क्रमशः कृतैः
आविद्धधातुर्विज्ञेयः सानुबन्धविभूषितः ६२
व्यञ्जनधातोः पुष्पं कलतलनिष्कोटितं तथोन्मृष्टम्
रेफोऽनुबन्धसंज्ञोऽनुस्वनितं बिन्दुरवमृष्टम् ६३
कनिष्ठाङ्गुष्ठसंयुक्तं पुष्पमित्यभिसंज्ञितम्
अङ्गुष्ठाभ्यां समं तन्त्र्योः स्पर्शनं यत्कलं तु तत् ६४
वामेन पीडनं कृत्वा दक्षिणेनाहतिस्तले
सव्याङ्गुष्ठप्रहारस्तु निष्कोटितमिहोच्यते ६५
प्रहारो वामतर्जन्या उद्धृष्टमिति संज्ञितम्
सर्वाङ्गुलिसमाक्षेपो रेफ इत्यभिसंज्ञितः ६६
तलस्थानेऽधस्तन्त्रीणामनुस्वनितमुच्यते
गुर्दक्षरकृता तन्त्री बिन्दुरित्यभिसंज्ञितः ६७
कनिष्ठाङ्गुष्ठकाभ्यां तु दक्षिणाभ्यामधोमुखम्
तन्त्रीषु त्रिप्रहारं चाप्यवमृष्टं प्रकीर्तितम् ६८

व्याससमासादेषामनुबन्धः सार्वधातुको ज्ञेयः
इति दशविधः प्रयोज्यो वीणायां व्यञ्जनो धातुः ६९
इत्यत्र धातवः प्रोक्ताश्चत्वारो लक्षणान्विताः
तिसृणामपि वृत्तीनां येषु वाद्यं प्रतिष्ठितम् ७०
तिस्रस्तु वृत्तयश्चित्राद्दक्षिणावृत्तिसंज्ञिताः
वाद्यगीतोभयगुणा निर्दिष्टास्ता यथाक्रमम् ७१
तिस्रो गीतिवृत्तयः प्राधान्येन ग्राह्याः । चित्रा वृत्तिर्दक्षिणा चेमि । तासां
तालगीतिलययतिमार्गप्राधान्यानि यथास्वं व्यञ्जकानि भवन्ति ।
तत्र चित्रायां सङ्क्षिप्तवाद्यतालद्रुतलयसमायतिरनागतग्रहाणां
प्राधान्यम् । तथा वृत्तौ गीतवादित्रद्विकलतालमध्यलयस्रोतो-
गतायतिः समग्रहमार्गाणां प्राधान्यम् । दक्षिणायां गीतिचतुष्क-
लतालविलम्बितलयगोपुच्छायत्यतीतग्रहमार्गाणां प्राधान्यम् ।
सर्वासामेव वृत्तीनां ललिताद्यास्तु जातयः
धातुभिः सह संयुक्ता भवन्ति गुणवत्तराः ७२
एतेषां धातूनां समवायाज्जातयस्तु जायन्ते
स्यात्स्वादुदात्तललितरिभितघनसंज्ञाश्चतस्रस्तु ७३
तत्रोदात्ता विस्तारधातुविषया ह्युदात्तत्वात्
ललिता व्यञ्जनघातोर्ललितत्वादेव सम्प्रयोक्तव्या ७४
आविद्धधातुविषया रिभिता लघुसञ्चयाद् विनिर्दिष्टा
करणविषया च घनसंज्ञा गुरुलघुसञ्चयात्तु स्यात् ७५
त्रिविधं गीते कार्यं वाद्यं वीणासमुद्भवं तज्ज्ञैः
तत्त्वं ह्यनुगतमोघः स्थानैककरणसमायुक्ताः ७६
लयतालवर्णपदयतिगीत्यक्षरभावकं भवेत् तत्त्वम्
गीतं तु यदनुगच्छत्यनुगतमिति तद्भवेद्वाद्यम् ७७
आविद्धकरणबहुलं ह्युपर्युपरिपाणिकं द्रुतलयं च

अनपेक्षितगीतार्थं वाद्यं त्वोघे विघातव्यम्  ७८
एवं ज्ञेया वैणे वाद्यविधाने तु धातवस्तज्ज्ञैः
वक्ष्याम्यतः परमहं निर्गीतविधानसमवायम्  ७९
आश्रावणा तथाऽऽरम्भो वक्त्रपाणिस्तथैव च
सङ्घोटना तथा कार्यं पुनश्च परिघट्टना  ८०
मार्गासारितमेत्तत् स्याल्लीलाकृतमथापि च
आसारितानि च तथा त्रिप्रकारकृतानि तु  ८१
एतानि तु बहिर्गीनान्याहुर्वाद्यविदो जनाः
सतालानि ह्यतालानि चित्तवृत्तौ कृतानि तु  ८२
प्रयोजनं च विज्ञेयं पूवरङ्गविधिं प्रति
एतेषां सम्प्रवक्ष्यामि लक्षणं सनिदर्शनम्  ८३
आस्त्रावणा नाम
विस्तारधातुविहितैः करणैः प्रविभागशो द्विरभ्यस्तैः
द्विश्चापि सन्निवृत्तैः करणे पचयैः क्रमेण स्यात्  ८४
गुरुणी त्वादावेकादशकं चतुर्दशं सपञ्चदशम्
सचतुर्विंशकमेवं द्विगुणीकृतमेतदेव स्यात्  ८५
लघुनी गुरु चैव स्यादथाष्टमं गुरु भवेत्तथा च पुनः
षट् च लघूनि ततोऽन्त्ये गुर्वाद्याश्रावणायां तु  ८६
त्रिःशम्योपरिपाणौ तालावप्येवमेव चैकिकवान्
समपाणौ द्वे शम्ये तालावप्येवमेवाथ  ८७
भूयः शम्यातालाववपाणावुत्तरस्तथा चैव
चञ्चत्पुटस्तथा स्यादेवं ह्याश्रावणातालः  ८८
अत्रोदाहरणम्
झण्टुं जगति यवलितक जम्बुक झण्टुं तिति च लघु च झण्टुं तिति चा ।
दिङ्गले गणपतिपशुपतिजम्बुक दिङ्गले वरभुज दिगिनिगि चा ।

तिति चादिनि निगिचा पशुपति नीतिचा ॥
अथारम्भः
दीर्घाण्यादावष्टौ द्वादश च लघूनि नैधनं चैव
चत्वारि गुरूणि तथा ह्रस्वान्यष्टौ च दीर्घं च ८९
लघुसंज्ञानि चतुर्धा निधनं द्विगुणीकृतानि दीर्घे द्वे
अष्टौ लघूनि नैधनमित्यारम्भेऽक्षरविधानम् ९०
अत्रोदाहरणम्
झण्टुं झण्टुं झण्टुं झण्टुं जगति यवलितक दिगिनिगिचा
दिङ्गले दिङ्गले तिति झझलकुचझकुझलजम्बुक तितिचा
गणपति झण्टुं झण्टुं सुरपति पशुपति चा
अस्य तु वाद्यम्
कार्यं त्रिपर्वरहितैरुद्वहनैरप्यथ समवरोहैः
तलरिभितह्लादयुतैः करणैर्विस्तारभूयिष्ठैः
अपचययुक्तैर्द्विस्त्रिस्तथा निवृत्तैर्द्विरभ्यस्तैः
आरम्भोऽप्यवतरणस्त्रिपर्वयुक्तैश्च कर्तव्यः
तालस्त्रिकलस्त्वादौ शम्यककला कलाद्वये तालः
द्विकला च पुनः शम्या तालो द्विकलश्च कर्तव्यः ९१
त्रिकलश्च सन्निपातः पुनः पितापुत्रकश्च षट्पूर्वः
चञ्चत्पुटस्तथा स्यादारम्भे तालयोगस्तु ९२
अस्य तु वाद्यम्
कार्यं त्रिपर्वरहितैरुद्वहनैरुद्वहनैरप्यथ समवरोहैः
तलरिमितह्लादयुतैः करणैर्विस्तार भूयिष्ठैः ९३
अपचययुक्तैर्द्विस्त्रिस्तथा निवृत्तैर्द्विरभ्यस्तैः
आरम्भोह्ऽप्यवतरणस्त्रिपर्वतुक्तैश्च कर्तव्यः ९४
अथ वक्त्रपाणिः
गुरूणि पञ्च ह्रस्वानि षङ्गुरुश्च चतुर्गुणः

गुरुणी द्वे लघु त्वेकं चत्वार्यथ गुरूणि हि ९५
चत्वार्यथ लघूनि स्युस्त्रीणि दीर्घाणि चैव हि
लघून्यष्टौ च दीर्घं च वक्त्रपाणौ भवेद्विधिः ९६
अत्रोदाहरणम्
दिङ्गले झण्टुं जम्बुक जगति य झण्टुं दिङ्गले
घेन्दुं घेटो घाटो मट्टुनकिटि इनं दुङ
घदुगदुकिटमटनम्
अस्य वाद्यम्
आविद्धकरणयुक्तो व्यङ्गः स्याडेकप्रवृत्तौ वा
अल्पव्यञ्जनधातुर्वाद्यविधिर्वक्त्रपाणौ तु ९७
द्विकले मन्द्रके यत्तु शम्यातालादिपातम्
तत्सर्वं वक्त्रपाणौ तु कार्यमष्टकलान्वितम् ९८
तस्याधस्तात्पुनः कार्यं पञ्चपाणिचतुष्टयम्
वक्त्रपाणेरयं तालो मुखप्रतिमुखाश्रयः ९९ इति
अथ सङ्घोटना
गुरुणी लघून्यथाष्टौ दीर्घं द्विगुणं तथा च कर्तव्यम्
लघदीर्घे लघु च पुनश्चतुर्गुणं सम्प्रकर्तव्यम् १००
पुनरष्टौ ह्रस्वानि स्युरिह तथा नैधनं च कर्तव्यम्
सङ्घोटनवस्तुविधौ ह्रस्वगुरुविधिः समुद्दिष्टः १०१
सङ्घोटनाया उदाहरणं प्रकल्प्य कृतम्
दिङ्गले जगति य वलति कतेचातिचःतिझ लधु चझल पशुपतिचा ।
अस्या वाद्यविधिः
अधिदण्डं हस्ताभ्यां वीणां विनिगृह्य दक्षिणाङ्गुल्या
अङ्गुष्ठाभ्यां च तथा कार्यं सङ्घोटनावाद्यम् १०२
सङ्घोटयेत् स्वरं वादिना तु संवादिना तथाधिबलम्
समवायिभिश्च शेषैरनुवादिभिरल्पकैश्चांशैः १०३

विस्तारचित्रकरणैर्द्विस्त्रिर्विनिवर्तितैर्द्विरभ्यस्तैः
उपचययुक्तैः क्रमशो वदन्ति सङ्घोटनावाद्यम्
तालोऽस्या गदितस्तज्ज्ञैः शीर्षवत्पञ्चपाणिना १०४
अथ परिघट्टना
दीर्घाण्यादावष्टौ लघूनि कुर्यात् पुनर्द्विगुणितानि
ह्रस्वान्यपि चत्वारि द्विगुणानि स्युः सतोर्घाणि १०५
षोडश लघूनि च स्युः सह तिधनेचैव कार्याणि
एष परिघट्टनायां गुरुलघुवस्तुक्रमः प्रोक्तः १०६
एतस्यामप्युदाहरणं प्रकल्प्य कृतम् ।
दिङ्गले दिङ्गले दिङ्गले दिङ्गले जगति य वलति क ।
तितिझलकुचझलदिगिनिगि गणपति चा
चलति क गणपति पशुपतिसुरपति चा
वाद्यं चास्यास्तज्ज्ञैः सोद्वहनं हस्तलाघवात् कार्यम्
व्यञ्जनधातुसमुत्थं नानाकरणाश्रयोपेतम् १०७
सम्पिष्टकवच्चास्यास्तालः करणैस्तु धातुसंयुक्तैः
गुरुलघुयोगादेवं विहितः कार्यो बुधैर्नित्यम् १०८
मार्गासारितवाद्यं विस्ताराविद्धकरणसंयुक्तम्
सकलैः सतलैः करणैरथ गुरुलघुसञ्चयश्चायम् १०९
चत्वारि गुरूणि स्युर्लघूनि चत्वारि च द्विगुणितानि
गुरुणी लघून्यथाष्टौ गुरुणी चेत्येतत् विधा योज्यम्
अथवा
चत्वारि तु गुरूणि स्युर्ह्रस्वान्यष्टौ भवन्ति हि
गुरुणी नव ह्रस्वानि दीर्घमन्त्यमथापि च
अत्रोदाहरणम्
दिङ्गले झण्टुं जगति य
थलितक झण्टुं तिति

झलकुच झलतितिचालति चा
बालासारितवच्चैब तालोऽस्य परिकीर्तितः १९०
श्रवणमघुराणि लीलाकृतांन्यभितृतपरिसृतान्तरकृतानि
तान्यप्यर्थवशादिह कर्तव्यानि प्रयोगविधौ १११
अथासारितानि ज्येष्ठमध्यकनिष्ठानि तालप्रमाणनिर्दिष्टानि तानि
तालविधाने वक्ष्यामः ।
एवमेतत्स्वरगतं ज्ञेयं वीणाशरीरणम्
विपञ्चीवाद्ययुक्तानि करणानि निबोधत ११२
रूपं कृतं प्रतिकृतं प्रतिभेदो रूपशेषमोघश्च
षाष्ठी वै प्रतिशुष्का त्वेवं ज्ञेयं करणजातम् ११३
वीणावाद्यद्विगुणं गुरुलाघववादनं भवेद्रूपम्
रूपं प्रतिभेदकृतं प्रतिकृतमित्युच्यते वाद्यम् ११४
युगपत्कृतेऽन्यकरणं प्रतिभेदो दीर्घलाघवकृतः स्यात्
कृतमेकस्यां तन्त्र्यां प्रतिशुष्का नाम विज्ञेया ११५
वीणावाद्यविरामेऽप्यविरतकरणं तु रूपशेषः स्यात्
आविद्धकरणयुक्तो ह्युपर्युपरिपाणिकस्त्वोघः ११६
कार्यं ध्रुवाविधाने प्रायेण हि कोणवाडनं तज्ज्ञैः
स्थानप्राप्यर्थचेद्यत्तत्र भवेदयं नियमः ११७
तच्चौघतुल्यकरणं वाच्यं कार्यं विपञ्चयास्तु
सप्ततन्त्री भवेच्चित्रा विपञ्ची णु भवेन्नव
कोणदाना विपञ्ची स्याच्चित्रा चाङ्गुलिवादगात् ११८
ततवाद्यविधानमिदं सर्व प्रोक्तं समासयोगेन
वक्ष्याम्यतश्च भूयः सुषिरातोद्यप्रयोगं तु ११९

इति भारतीये नाट्यशास्त्रे ततातोद्यविधानं नामाध्याय
एकोनत्रिंशत्तमः

## अथ त्रिंशोऽध्यायः

आतोद्यं सुषिरं नाम ज्ञेयं वंशगतं बुधैः
वैण एव विधिस्तत्र स्वरग्रामसमाश्रयः १
नव वंशास्तु विज्ञेयास्त्रिस्थानस्वरगोचराः
तेषां चैव हि वंशानां स्थाने स्थाने त्रिकत्रयम्
यथा बन्धलयस्तेषां स्वरा ज्ञेयाः समासतः
द्विकत्रिकचतुष्कास्तु ज्ञेया वंशगताः स्वराः
कम्पमानार्थमुक्ताश्च व्यक्तमुक्तास्तथैव च २
तत्रोपरि यथा ह्येकः स्वरो वैणस्वरान्तरे
प्राप्नोत्यन्यत्वमेवेह तथा वंशगतोऽपि हि ३
द्विकस्त्रिकश्चतुष्को वा श्रुतिसंख्यो भवेत्स्वरः
अनीरणात्तु शेषाणां स्वराणां श्रुतिमपि संभवम्
स्वराणां च श्रुतिकृतं चतुर्द्विस्त्रित्वलक्षणम्
अङ्गुलीवादनकृतं तच्च मे सन्निबोधत ४
व्यक्तमुक्ताङ्गुलिस्तत्र स्वरो ज्ञेयश्चतुःश्रुतिः
कम्पमानाङ्गुलिश्चैव त्रिश्रुतिः परिकीर्तितः
द्विकोऽर्थाङ्गुलिमुक्तः स्यादिति श्रुत्याश्रिताः स्वराः ५
एते स्युर्मध्यमग्रामे भूयः षड्जाश्रिताः पुनः
व्यक्तमुक्ताङ्गुलिकृताः षड्जमध्यमपञ्चमाः ६
ऋषभो धैवतश्चापि कम्पमानाङ्गुलीकृतौ
अर्धमुक्ताङ्गुलिश्चैव गान्धारोऽथ निषादवान् ७
स्वरसाधारणे चापि काकल्यन्तरसंज्ञके
निषादगान्धारकृते षड्जमध्यमयोरपि ८
विपर्यया सन्निकर्षे श्रुतिलक्षणसिद्धितः
वैणकण्ठप्रवेशेन सिद्धा एकाश्रिताः स्वराः ९
यं यं गाता स्वरं गच्छेत्तं तं वंशेन वादयेत्

शारीर वैणवंश्यानामेकीभावः प्रशस्यते १०
अविचलितमविच्छिन्नं वर्णालङ्कारसंयुतं विधिवत्
ललितं मधुरं स्निग्धं वेणोरेवं स्मृतं वाद्यम् ११
एवमेतत्स्वरगतं विज्ञेयं गानयोक्तृभिः
अतः परं प्रवक्ष्यामि धनातोद्यविकल्पनम् १२
इति भरतीये नाट्यशास्त्रे सुषिरातोद्यलक्षणं नामाध्यायस्त्रिंशः

## अथैकत्रिंशोऽध्यायः

वाद्यं तु यद्धनं प्रोक्तं कलापातलयान्वितम्
कालस्तस्य प्रमाणं हि विज्ञेयं तालयोगतः १
या लौकिकी कला काष्ठा निमेषश्च स्मृता बुधैः
न सा तालकला ज्ञेया ह्यन्यैषां तालगाः कलाः २
त्रिविधा सा च विज्ञेया त्रिभार्गनियताद्भुतैः
चित्रे द्विमात्रा कर्तव्या वृत्तौ सा द्विगुणा स्मृता ३
चतुर्गुणा दक्षिणे स्यादित्येवं त्रिविधा कला
निमेषाः पञ्च मात्रा स्यात् मात्रायोगात्कला स्मृता
निमेषाः पञ्च विज्ञेया गीतकाले कलान्तरम् ४
ततः कलाकालकृतो लय इत्यभिसंज्ञितः
त्रयो लयास्तु विज्ञेया द्रुतमध्यबिलम्बिताः ५
यस्तत्र तु लयो मध्यस्तत्प्रमाणा कला भवेत्
कलाकालप्रमाणेन ताल इत्यभिसंज्ञितः ६
त्रिविधा सा च विज्ञेया त्रिमार्गनियताऽद्भुतैः
चित्रे द्विमात्रा कर्तव्या वृत्तौ सा द्विगुणा स्मृता
चतुर्गुणा दक्षिणे स्यादित्येवं त्रिविधा कला
त्र्यश्रश्च चतुरश्रश्च स तालो द्विविधः स्मृतः
द्विविधस्यापि तालस्य त्वेका प्रकृतिरिष्यते

तथा योनिद्वयं चात्र कीर्त्यमानं निबोधत ७
चच्चत्पुटश्च विज्ञेयस्तथा चाचपुटो बुधैः
चतुरश्रस्तु विज्ञेयस्तालश्चच्चत्पुटो बुधैः ८
त्र्यश्रश्चाचपुटः प्रोक्तो गुरुलघ्वक्षरान्वितः
आदौ गुर्वक्षारं ज्ञेयं लघुमो गुरु चैव हि
त्र्यश्रः स खलु विज्ञेयस्तालश्चाचपुटो बुधैः ९
आदौ द्वे गुरुणी यत्र लघु च प्लुतमेव च
स विज्ञेयः प्रयोगज्ञैस्तालश्चच्चत्पुटाश्रयः १०
सन्निपातस्ततः शम्या तालः शम्या तथैव च
एवमेककलं शुद्धो योज्यश्चच्चत्पुटो बुधैः ११
शम्यातालौ द्विरभ्यस्तौ तालः शम्या तथापि वा
सन्निपातादिके ज्ञेयः शम्यादिश्च तथा परः १२
तालादिश्च त्रिभिर्भेदैर्युतश्चच्चत्पुटो भवेत्
शम्यादिकस्तु विज्ञेयस्तज्ज्ञैरासारितादिषु १३
तालादिकस्तथा प्रोक्तो विद्वद्भिः पाणिकादिषु
चच्चत्पुटस्य ये भावाः सन्निपातादयश्च ये
त एव भेदा विज्ञेया बुधैश्चाचपुटे पृथक् १४
सन्निपातादिकस्त्वस्य बलवानितरौ तथा
षट्कलोऽष्टकलश्चैव तालो ह्यस्मात्प्रवर्तते १५
द्विःप्रकारः पुनश्चायं निःशब्दः शब्दवांस्तथा
अनयोमिश्रभावात्तु र्मि स्तालः प्रकीर्तितः १६
शम्यातालप्रवेशेन त्र्यश्रोऽन्योऽपि विधीयते
षट्पितापुत्रककृतः पञ्चपाणिरुदाहृतः १७
आद्यं प्लुतं द्वितीयं च लघु यत्राक्षरं भवेत्
तृतीयं च चतुर्थं च गुरुणी पञ्चमं लघु १८
प्लुतान्तः षट्पितापुत्रो गुरुलाघवसंयुतः

पञ्चपाणिः स विज्ञेयः षट्पातास्तु षडक्षरः १९
सन्निपातस्ततस्तालः शम्यातालस्तथैव च
शम्या चैव हि तालश्च षट् पातास्तस्य कीर्तिताः २०
तालादिस्त्यश्रभेदोऽन्यः सम्यक्वेष्टकसंज्ञितः
गुरुपञ्चाक्षराश्रन्तप्लुतमात्रासमन्विता २१
त्र्यश्रं सर्वगुरुं कृत्वा निष्क्रामं त्वत्र योजयेत्
शम्याद्वयं ततस्त्वेष उद्धट्टः कथितो बुधैः २२
व्युदस्य युग्ममोजश्च पञ्चताला भवन्ति हि
मिश्रा गीताङ्गसंयुक्ता ज्ञेया ह्युद्धट्टकादयः २३
कलाः पञ्च तथा सप्त पुनर्नव च कीर्तिताः
दशैकादश चैवैते सङ्कीर्णाः समुदाहृताः २४
न ह्येषामुपयोगोऽस्ति सप्तरूपे ध्रुवासु वा
प्रवृत्तादिषु कर्तव्या एते भूयः प्रयोक्तृभिः २५
यथाक्षरोऽथ द्विकलस्तथा चैव चतुष्कलः
एवमेककलो ज्ञेयः शुद्धाश्चच्चत्पुटा बुधैदिकः
त्रयो भेदा हि तालस्य द्विगुणाः स्मृताः २६
चतुरश्रस्त्रिभिर्भेदैस्तालस्तु परिकीर्तितः
चतुष्कलो ह्यष्टकलः कलाः षोडश चैव हि २७
त्र्यश्रस्तालस्तु षड्भेदस्त्रिकलः षट्कलस्तथा
कला द्वादश चैव स्यात् चतुर्विंशतिरेव च २८
चत्वारिंशत्तथाष्टौ च तथा षरागवतिः कलाः
तालो नवविधश्चायं समासात् परिकीर्तितः २९
तत्रावापोऽथ निष्क्रामो विक्षेपोऽथ प्रवेशनम्
चतुर्विकल्प इत्येव निःशब्दः परिकीर्तितः ३०
शम्या तालो ध्रुवश्चैव सन्निपातस्तथा परः
इति शब्देन संयुक्तो विज्ञेयोऽपि चतुर्विधः ३१

एतेषामेव वक्ष्यामि हस्ताङ्गुलिविकल्पनम्
उत्तानाङ्गुलिसङ्कोच आवाप इति संज्ञितः ३२
निष्क्रामोऽधोगतस्य स्यादङ्गुलीनां प्रसारणात्
तस्य दक्षिणतः क्षेपो विक्षेप इति संज्ञितः ३३
निवर्तनं च हस्तस्य प्रवेशोधोमुखस्य तु
यदा चतुष्कलो योगस्तदा त्वेष विधिः स्मृतः ३५
निष्क्रामश्च प्रवेशश्च द्विकले परिकीर्तितौ
आवापनिष्क्रामकृतो द्विकलो योग इष्यते ३५
एषामन्तरपातास्तु पातसंज्ञाः प्रकीर्तिताः
शम्या तालस्तु विज्ञेयः सन्निपातस्तथैव च ३
सव्यहस्तनिपातः स्याच्छम्या तालस्य वामतः
हस्तयोऽस्तु समः पातः सन्निपात इति स्मृतः ३७
कला या त्रिविधा प्रोक्ता तस्याः पातो ध्रुवः स्मृतः
यथाक्षरस्य तालस्य स च गुर्वक्षरः स्मृतः ३८
यथाक्षरकृतैः पातैस्तालो ज्ञेयो यथाक्षरः
गुर्वक्षरैश्च विश्लिष्टैः स एव द्विकलो भवेत् ३९
द्विर्भावाद्द्विकलस्यापि विज्ञेयोऽथ चतुष्कलः
त्र्यश्रश्च चतुरश्रश्च षट्कलोऽष्टकलः स्मृतः ४०
ध्रुवाणां च भवेत्तालस्तं च वक्ष्यामि तत्त्वतः
कनिष्ठाङ्गुलिनिष्कामः शम्या चैव ततो भवेत् ४१
कनिष्ठानामिकाभ्यां तु निष्कामोऽतो विधीयते
ततश्च तालः कर्तव्यः शम्या चैव तु पञ्चमी ४२
प्रवेशो मध्यमाषष्ठः कर्तव्यस्तर्जनीकृतः
निष्क्रामः सन्निपातोऽन्ते नित्यमष्टकलो भवेत् ४३
एष युग्मे कलापातविकल्पोऽङ्गुलिभिः कृतः
कनिष्ठाङ्गुलिनिष्क्रामः प्रथमा तु कला भवेत् ४४

शम्यापातो द्वितीया च तृतीया ताल एव च
शम्या ततश्चतुर्थी तु पञ्चमी तर्जनी क्रमात् ४५
षष्ठश्च सन्निपातः स्यादेष वै षट्कलो विधिः
एष त्र्यश्रे कलापातविकल्पोऽङ्गुलिभिः कृतः ४६
कनिष्ठाङ्गुलिनिष्क्रामः प्रवेशश्च ततो भवेत्
कनिष्ठानामिकास्थानं ततस्तालस्तृतीयकः ४७
शम्या तालश्चतुर्थी तु निष्क्रामो मध्यमाकृतः
षष्ठस्तालस्ततो ज्ञेयो निष्क्रामस्तर्जनीकृतः ४८
शम्याष्टमी ततस्तालो नवमी तु कला स्मृता
कनिष्ठिकाप्रवेशस्तु दशमी तु कला भवेत् ४९
निष्क्रामश्चैव तर्जन्या तदनन्तरमिष्यते
सन्निपातस्तथान्ते ग कलाद्वादशके भवेत् ५०
एष त्वावापविक्षेपव्यवधानेन पण्डितैः
विधिश्चतुष्कलौ ज्ञेयः प्रागुक्ताङ्गुलिभिः कृतः ५१
द्विकलश्चतुष्कलश्च पादभागः प्रकीर्तितः
चत्वारः पादभागास्तु मात्रेति परिचोद्यते ५२
चच्चत्पुटस्य तालस्य तथा चाचपुटस्य च
पञ्चपाणेश्च विहिता भेदा ह्येते पृथक् पृथक् ५३
एवमेष कलातालः समासात् परिकीर्तितः
आसारिते वर्धमाने गीतेष्वपि हि यः स्मृतः ५४
अथासारितकानां तु सम्प्रवक्ष्यामि लक्षणम्
छेदश्चच्चत्पुटस्यादौ कृत्वा तु गुरुलाघवम् ५५
पञ्चपाणिं ततः कुर्याद्द्विरभ्यस्तं प्रयोगवित्
यथाक्षरं तु सर्वत्र यथावद्विनिवेशयेत् ५६
शम्या तालः पुनश्चैव शम्यातालमथापि च
आद्येऽक्षरे सन्निपातं पञ्चपाणेश्च योजयेत् ५७

तालं शम्या च तालं च शम्यातालौ ततः परम्
एष एव द्वितीयेऽपि पञ्चपाणौ विधिः स्मृतः ५८
प्लुतच्छेदे तु तस्येडः सन्निपातः प्रयोक्तृभिः
एवं यथाक्षरं ज्ञेयं कनिष्ठासारितं बुधैः ५९
यथाक्षरस्याक्षरैश्च तालपातान्निबोधत
चत्कारे तु भवेच्छम्या द्वितीये ताल एव च ६०
पुकारे तु पुनः शम्या रकारे ताल एव च
एवं चच्चत्पुटो ज्ञेयः पञ्चपाणिरतः परम् ६१
षट्कारे सन्निपातः स्यात् पिकारे ताल एव च
ताकारे तु भवेच्छम्या पुकारे ताल एव च ६२
त्रकारे तु भवेच्छम्या ककारे ताल एव च
द्वितीयोऽप्येवमेव स्यात् सन्निपातस्ततः परम् ६३
गुर्वक्षराणां विश्लेषादेवमेव तु मध्यमम्
विश्लेषितानामेषां तु द्विर्भावे या कला भवेत्
पातान्ते सा प्रयोक्तव्या यथावदनुपूर्वशः ६४
द्विर्भावान् मध्यमस्यैव ज्येष्ठमित्यभिधीयते
मध्यमस्य विधानेन न्यसेच्च द्विगुणाः कलाः ६५
सन्निपातैर्निपातैश्च तेषां वस्तु प्रकीर्तितम्
समासलक्षणं चैव गदतो मे निबोधत ६६
अष्टौ तालास्तु षट्शम्याः सन्निपातास्त्रयस्तथा
आसादिते विधिर्ह्येष एकैकं परिकीर्तितम् ६७
चत्वारस्तु गुणा युग्मे त्र्यश्रे षट्परिकीर्तिताः
द्वितीये पञ्चपाणौ तु सार्धाः षट्परिकीर्तिताः
अन्ते च सन्निपातः स्यात् सर्वेषामप्ययं विधिः ६८
आसारितानां संयोगो वर्धमानकमुच्यते
उत्पत्तिं लक्षणं चास्य गदतो मे निबोधत ६९

निहत्य दानवं घोरं रुद्रेणामिततेजसा
नृत्तमुत्पादितं पूर्वं चित्रं ताण्डवसंश्रितम् ७०
अथ भूतगणैः सर्वैस्तस्मिन् काले महात्मभिः
वर्धमानमिदं दृष्टं पिण्डीबन्धैर्विभूषितम् ७२
परितुष्टश्च तद्दृष्ट्वा सपत्नीको वृषध्वजः
प्रददौ च वरं श्रेष्ठं सह देव्या गणाधिपैः ७२
लक्ष्यलक्षणसम्पत्या मार्गयुक्तिविधिक्रमैः
वर्धमानप्रयोक्तारो यास्यन्ति शिवगोचरम् ७३
एवमेतन् मया दृष्टं पिण्डीबन्धनिमित्ततः
अधुना तु प्रवक्ष्यामि लक्षणं शृणुत द्विजाः ७४
वृत्तिदक्षिणचित्रेषु मार्गेषु विनियोजितम्
द्विविधं वर्धमानं स्यात्स्वप्रमाणविनिर्मितम् ७५
अतालं च सतालं च वर्धमानं द्विधा स्मृतम्
चतस्रः कण्डिकाश्चैवं तावन्त्यासारितानि तु ७६
ध्रुवकेण कलाभिश्च कण्डिका देवकल्पिताः
वर्धमानशरीरे तु क्रियते मार्गयोजना ७७
आद्या नवकला तु स्यादष्टाभिस्तत्परा स्मृता
दश षट् च तथा चैव तृतीया कण्डिकेष्यते ७८
चतुर्थी कण्डिका चैव द्वात्रिंशत्तु कलाः स्मृताः
कलाभिरेवं निर्दिष्टाः कण्डिका वर्धमानके
केवलं मार्गसम्भूतातालयोगाङ्गवर्जिताः ७९
एकद्वित्रिचतुर्योगात्ताभिरासारितानि तु
वर्धमाने प्रसूयन्ते मार्गतालाङ्गयोगतः ८०
प्रथमां कण्डिकां कृत्वा बालतालप्रयोजिताम्
अन्तिमार्धकलाहीनं कुर्यादेवं कनिष्ठकम् ८१
द्वितीयं कण्डिकां कृत्वा प्रथमा सकला यदि

योज्यते पूर्वतालेन तदा तत् स्याल्लयान्तरम् ८२
वर्धमान विना चित्रे न हि वृत्तौ लयान्तरम्
बहिर्वा वर्धमाने वा कनिष्ठं न हि दक्षिणे ८३
द्विगुणाक्षरसंयोगादन्यमार्गनियोजनात्
नृत्तकालविशेषाच्च बालादन्यल्लयान्तरम् ८४
तृतीया स द्वितीया च प्रथमा चैव तत्कला
द्विकलं योगमाश्रित्य मध्यमासारितं तु तत् ८५
चतुर्थीमादितः कृत्वा चतस्रः कण्डिका यदा
चतुष्कले नियोज्यन्ते ज्येष्ठमासारितं तु तत् ८६
प्रयोगस्तु यदा स्तेषां पिण्डीबन्धैर्विकल्प्यते
प्रत्येकं ह्यङ्गविन्यासस्तदा तेषां पृथक्पृथक् ८७
मुखं प्रतिमुखं चैव देहं संसरणं तथा
अङ्गान्येतानि चत्वारि सर्वेष्वासारितेषु च ८८
उपोहनं मुखं तेषां युग्मं प्रतिमुखं भवेत्
ओजः शरीरसंहारावयमङ्गविधिः क्रमः ८९
इत्येवं चतुरङ्गानि ज्ञेयान्यासारितानि तु
चतुरासारितैर्बद्धं विज्ञेयं वर्धमानकम् ९०
वर्णताललयग्रन्थवा द्यादिनयवर्धनात्
पात्राणां वृद्धियोगाच्च वर्धमानकमुच्यते ९१
वर्धमानशरीरस्य भवेदासारितस्य च
कार्यकारणमादेन परस्परविकल्पनम्
यथा वृक्षाद्भवेद्बीजं बीजाद्वृक्षस्य सम्भवः
अन्योन्यहेतुसंयोगात्प्रत्येतव्यस्तथेह तु ९३
योगादेककलात् सूचे कनिष्ठकलयान्तरे
द्विकलान्मध्यमं चैव ज्येष्ठं चैव चतुष्कलात् ९४
चच्चत्पुटपरिवर्तः शम्यादि द्वौ च पञ्चपाणिकृतौ

अन्ते च सन्निपातः पातविधिरयं कनिष्ठस्य ९५
अयमेव तालयोगो विशेषसिद्धिस्तु पूर्वनिर्दिष्टा
भवतीह लयान्तरिते शब्दाद्भेदो लयाच्चैव ९३
उत्तरता लातृ कत्वा द्वौ तिस्त्रः संकलाः परित्यज्य
एतत्पातविधानं मध्यमकासारिते प्रोक्तम् ९७
ज्येष्ठस्य भवति नियमादादौ सैका चतुष्कला चात्र
मात्राद्वन्द्वयुताऽन्यत् कृत्वा तौ द्वौ च परिवर्तौ ९८
बालं नवकलं येषां न तेषां साधु सम्मतम्
सन्निपाताङ्गविन्यासो घटेत न हि शास्त्रतः ९९
पुनश्चैवाङ्गविन्यासः कलानियमतः कृतः
अथ तत्र मुखं तालध्रुवपातैरेव नियमितान् मानम् १००
तस्य कलामात्राक्षरगुरुलघुवर्णस्थितिं वक्ष्ये
ज्येष्ठस्य कला ह्यष्टौ मुखं भवेन्मध्यमस्य सप्तकलम् १०१
षड्भिर्लयान्तरे स्यात्पञ्चैव कलाः कनिष्ठस्य
आदावन्ते गुरुणी मध्ये च लघूनि बालतः प्रभृति १०२
अष्टौ द्वादश षोडश विंशतिरपि चाक्षराणि स्युः
आसारितोपवहनेष्वादावा रणानि युक्तानि १०३
तान्यक्षराणि चक्ष्ये यानि पुरा ब्रह्मगीतानि
झण्टुं जगति यदि गिनिगि झण्टुं प्रथमलयान्तरं वापि
तितिझल कुचझल मध्ये तितिकुचवृद्धं भवेज्ज्येष्ठं १०४
इत्यक्षरपतनकलागुरुलघुवर्णस्थितिविभक्तः
आसारितमुखसंज्ञित उपवहनविधिर्विनिर्दिष्टाः
एवमेतत्सविस्तारं कथितं वर्धमानकम् १०५
चत्वारस्तु गुणा युग्म ओजे षट् परिकीर्तिताः
द्वितीये पञ्चपाणौ तु सार्धाः षट् परिकीर्तिताः
कनीय एवं कर्तव्यमक्षरैस्तालमानतः १०६

यथा
देवं देवैः संस्तुतनमितम्
दैत्यैर्यक्षैर्नागैः पितृभिः प्रणमितचरणम्
त्रैलोक्यहेतुभीशं रुद्रं शरणमहमुपगतः १०७
अष्टावेव गुणाः कार्याः पूर्वताले यथाविधि
द्वादशैव तु कर्तव्याः षट्पितापुत्रके गणाः १०८
अर्धत्रयोदश गणास्तृतीये वस्तुसंज्ञके
एवमक्षरविन्यासो मध्यमासारिते स्मृतः १०९
यथा
भूताधिपतिं भगनेत्रहरं देवैर्वन्द्यं सुरमखमयनम्
रौद्रं भयदं गजवर्मपटं शम्भुं त्र्यक्षं ज्वलननिमजटम्
भुजगपरिकरं त्रिदशगणवरं दैत्यैर्नित्यं परिपठितचरितम्
उमापतिं नमितमभिमतसुखदं शरणं सुरनुतमहमिह समुपगतः ११०
कार्याः षोडश युग्माख्ये ताले तु प्रथमे गणाः
चतुर्विंशतिरोजाख्य द्वितीये वस्तुसंज्ञके १११
चतुर्विंशतिरर्धं च तृतीये वस्तुसंज्ञके
ज्येष्ठेऽप्यासारिते कार्य एवमक्षरसञ्चयः ११२
यथा
अमरं प्रवरं मदनाङ्गहरं भुवनैकनाथममयप्रदम्
त्रिपुरनाशकरं देवं तमहं प्रणमतसुरपितृगणनतचरणम्
पृथिवी सलिलं ज्वलनं पवनं सूर्यश्चन्द्रो यजमानो व्योमाख्यः
कार्यः
मुनिभिर्यस्य प्रोक्तस्त्रैलोक्यगुरुं तमचिन्त्यमजं विद्यानिलयं
भैरवरूपम्
खट्वाङ्गकपालधरं स्थित्युत्पत्तिप्रलयनिमित्तम्
चन्द्रार्धधरं तिलकार्धधरं मुण्डार्धधरं रशनार्धधरम्

बहुभिर्विकृतैः विविधैर्विकटैर्वेद्यं त्रि विमुखैः तैः
प्रमथैः परिवृतमहमीशं सुखदं सततं प्रणतः ११३
आसारितानां सर्वेषां त्रयो भेदाः प्रकीर्तिताः
यथाक्षरं द्विसंख्यातं त्रिसंख्यातमथापि च ११४
तालच्छेदाद् द्विगुणितैः समवर्णगणैः कृतम्
अनिवृत्ताक्षरपदं यथाक्षरमिति स्मृतम् ११५
निवृत्या यत्समायुक्तं द्विसंख्यातं तदुच्यते
निवृत्तिद्वयसंयुक्तं त्रिसंख्यातमपीष्यते ११६
चतुष्कादौ चतुर्मात्रा यथोक्तगुरुलाघवाः
यथायोगं गणाः कार्या गीतेष्वासारितेषु च ११७
अक्षरैर्या चतुर्मात्रा द्विमात्रा वर्णतस्तु सा
चित्रे कला बुधैर्ज्ञेया वृत्तौ सा द्विगुणा स्मृता ११८
वृत्तौ या वर्णमात्राभिश्चतुर्मात्रा प्रकीर्तिता
द्विगुणा दक्षिणे सा तु कला ज्ञेया प्रयोक्तृभिः ११९
न मार्गभेदोऽक्षरेषु कश्चिदप्युपपद्यते
वर्णमात्राद्विगुणना द्वर्णभेदः प्रकीर्तितः १२०
यथाक्षरेषु भूयिष्ठं गीतेष्वासारितेषु च
विधिरेष समुद्दिष्टो वर्णतालसमाश्रयः १२१
द्विसङ्ख्याते निवृत्तिस्तु कार्या यस्यार्थयोगतः
द्विसङ्ख्यातार्थयोगेन त्रिसङ्ख्यातेऽपि चेष्यते १२२
न चित्रे द्वित्रिसङ्ख्यातं कदाचिदपि योजयेत्
न च वृत्तौ त्रिसङ्ख्यातं गीतं वासारितं बुधः १२३
त्रिसंख्यातं दक्षिणे स्याद् द्विसंख्यातं च वार्तिके
चित्रे यथाक्षरं प्रोक्तमिति मार्गविनिश्चयः १२४
यथाक्षरं तु सर्वेषु मार्गेषु परिकीर्तितम् । इति केचित्
दक्षिणेनैव गत्वादौ निवृत्तौ वृत्तिवद्व्रजेत् १२५

चित्रवच्च यथान्यायं त्रिसंख्याते विधिः स्मृतः
अनेनैव विधानेन द्विसंख्यातमपीष्यते १२६
वृत्तौ वा दक्षिणे वापि प्रयोगस्य सदैव तु
वस्त्वादौ वस्तुमध्ये वा वस्त्वन्ते वा निवृत्तयः १२७
प्रयोक्तव्या बुधैर्नित्यं विचार्याङ्गबलाबलम्
निवृत्तौ तु कला न्यूना यदा वस्तुवशाद्भवेत् १२८
अकलापातनात्तस्या वर्णः कार्यो निवृत्तिमान्
वर्णालङ्कारसौभाग्यं विच्छेदं करणस्य च १२९
तत्त्वादीनां प्रयोगश्च निवृत्तीनां प्रयोजनम्
वर्णतालाक्षराणां तु संयोगोऽयं मया स्मृतः १३०
आसारितेषु गीतेषु वर्धमानेषु चैव हि
वर्धमानं तु विज्ञेयं चतस्रः कण्डिका बुधैः १३१
विशाला सङ्गता चैव सुनन्दा सुमुखी तथा
उपोहनं विशालायाः कलाः पञ्च भवेदिह १३२
षट्सङ्गताया विज्ञेयाः सुनन्दायास्तु सप्तकम्
सुमुख्याश्चोपवहनं नित्यमष्टकलं भवेत् १३३
आदौगुरुद्वयं कार्यं चतुर्दश लघून्यथ
उपोहने विशालायाः पुनरन्ते गुरुः स्मृतम् १३४
यथा
झण्टुं जगति यवलितकदिगिनिगिकुचकुलतिति चा
चतुर्भिरधिकैर्ह्रस्वैर्गुरुत्रयसमन्वितैः
सङ्गतायास्तु विज्ञेय उपोहनविधिः क्रमात् १३५
यथा
झण्टुं जगति य वलितकदिगिनिगितितिझलतितिचा
चतुर्भिरधिकैरेवं लघुभिर्गुरुसंयुतः
सुनन्दाया अपि ज्ञेयो ह्युपोहनविधिर्बुधैः १३६

यथा
झएटुं जगति यवलितकदिगिनिगितितझलकुचझलतितिचा
षट्त्रिंशतिर्लघूनि स्युः सुमुख्याश्च गुरूणि तु
उपोहनविधाने तु ज्ञेयानि मुनिसत्तमाः १३७
यथा झएटुं जगति यवलितकदिगिनिगितितिजलकुचजलतिति चा
उपोह्यन्ते स्वरा येन तेन गीतं प्रवर्तते
तस्मादुपोहनं ज्ञेयं शुष्काद्यरसमन्वितम् १३८
अथवोपोह्यते यस्मात् प्रयोगः सूचनादिभिः
तस्मादुपोहनं ह्येतद्गानभाएडसमारयम् १३९
शम्यातालौ द्विरभ्यस्तौ सन्निपातोऽन्त्य एव च
उपोहने विशालायास्तालोऽयं परिकीर्तितः १४०
द्विकलः सङ्गतायाश्च तालश्चाचपुटो भवेत्
त्रिकलो युक्ततालादिः सुनन्दायास्तथैव च १४१
चच्चत्पुटश्च द्विकलः सुमुख्याः स्यादुपोहने
उपोहने द्विरभ्यस्तैस्ततः कार्या तु कएडका १४२
एतान्युपोहनानीह चत्वारि गदितानि तु
आनुपूर्व्यात्प्रयोगं तु कएडकानां निबोधत १४३
शम्या तालौ पुनः शम्या ततस्तालो यथाक्रमम्
त्रिकलः सन्निपातश्च विशालायाः प्रकीर्तितः १४४
चच्चत्पुटस्य द्विकलः सङ्गताया अपि स्मृतः
चतुष्कल्पः सुनन्दाया स एव गदितो बुधैः १४५
सन्निपातद्वयोपेतो द्विमात्रस्तु प्रयोक्तृभिः
कार्यश्चतुष्कलो युग्मः सुमुख्याश्च यथाक्रमम् १४६
वर्धमानस्य तालोऽयं कएडकानां पृथक्पृथक्
मया प्रोक्तः पुनश्चैव संहतानां निबोधत १४७
पूर्वं विशाला कर्तव्या सङ्गता तदनन्तरम्

सङ्गताया ग्रहं कृत्वा विशाला पुनरिष्यते १४८
कनिष्ठासारिते तालो यो मया परिकीर्तितः
स एव सर्वः कर्तव्यः प्रथमे कण्डिकाद्वये १४९
सुनन्दा सङ्गता चैव विशाला च यथोदिता
सुनन्दाया ग्रहं कृत्वा ततश्चैवं प्रयोजयेत् १५०
मध्यमासारिते तालो यो मया परिकीर्तितः
सोऽस्य त्रयस्य कर्तव्यः सुनन्दाद्यस्य योक्तृभिः १५१
सुमुखी च सुनन्दा च सङ्गता प्रथमा तथा
सुमुख्यास्तु ग्रहं कृत्वा यथोक्तं सम्प्रयोजयेत् १५२
ज्येष्ठासारितके तालो निःशब्दः शब्दवांस्तथा
स सर्व एव कर्तव्यो बुधैश्चतसृणामपि १५३
संयोगे कण्डिकानां तु तालोऽयं परिकीर्तितः
एवमासां समायोगाद् वर्धमानकमिष्यते १५४
बालं नवकलं ज्ञेयं दशसप्तलयान्तरम्
मध्यमं तु त्रयस्त्रिंशत् पञ्चषष्टिस्तथोत्तरम् १५५
कलानां वृद्धिमासाद्य त्वक्षराणां च वर्धनात्
लयस्य वर्धनाच्चापि वर्धमानकमुच्यते १५६
आसारितेषु गीतेषु वर्धमानेषु चैव हि
द्विगुणस्तालयोगेन कार्यो ह्यक्षरजो विधिः १५७
समाप्तावन्तरचितः सन्निपातो यदा भवेत्
अन्त्या कला द्विमात्रा तु तदा ज्ञेया प्रयोक्तृभिः १५८
एवमेतन्मया प्रोक्तं वर्धमानस्य लक्षणम्
आसारितानां वक्ष्यामि विस्तरं लघुलक्षणम् १५९
अन्यूनायां कलायां तु ध्रुवं प्राज्ञो निवेशयेत्
अथ तालाक्षरवशाच्छेषान् पातांश्च योजयेत् १६०
प्लुते लघ्वक्षरे चैव ध्रुवे साम्यं न विद्यते

न विद्यते त्रिभिः पातैः समत्वमुपनीयते १६१
तालैश्च सन्निपातैश्च शम्याभिश्च ध्रुवेण च
कनिष्ठासारितं कार्यं मध्यमं ज्येष्ठमेव च १६२
द्विगुणोत्तरया वृद्ध्या ह्यस्यैव तु मध्यमं विधातव्यम्
प्रस्तारेण कलानां शम्यातालान्तरोपेतम् १६३
पूर्वं शम्या कार्या द्विगुणस्तालः कलाद्वये शम्या
पुनरेककलस्तालस्त्रिकलः स्यात्सन्निपातश्च १६४
त्रिकलोऽन्यस्मिंस्तालः शम्यैककला कलाद्वये तालः
द्विकला च पुनः शम्या तालः कलिकश्च कर्तव्यः १६५
त्रिकलश्च सन्निपातो भूयो विधिरेष एव कर्तव्यः
द्वादश कलास्तृतीये तस्यान्ते सन्निपातश्च १६६
प्रथमस्त्वष्टकलः स्याद् द्वादशकलिका तथा परे ज्ञेये
अन्तश्च सन्निपातो मध्यस्यासारितः प्रोक्तः १६७
ये पूर्वमङ्गुलिकृताः प्रवेशनिष्कामसंज्ञया गदिताः
ते सर्वे कर्तव्या मध्ये त्वासारिते तज्ज्ञैः १६८
अथ ज्येष्ठे तु कर्तव्यं शम्यातालकलान्वितम्
शरीरं हि बुधैर्नित्यं पञ्चषष्टिकलान्वितम् १६९
तस्यावापोऽथ निष्क्रामो विक्षेपोऽथ प्रवेशनम्
अङ्गुलीनां तु कर्तव्यं कलामानं चतुष्कलम् १७०
पूर्वं शम्या कार्या चतुष्कलोऽन्त्यो भवेत्ततस्तालः
शम्या चतुष्कला स्यात्तालो द्विकलस्तथा चैव १७१
कायस्य सन्निपातोऽपि षट्कलः षट्कलश्च तालः स्यात्
द्विकला च पुनः शम्या चतुष्कलः स्यात् पुनस्तालः १७१
शम्या चतुष्कला स्यात्तालो द्विकलस्ततश्च कर्तव्यः
पुनरेव सन्निपातश्च षट्कलः संविधातव्यः १७३
विधिरेष एव कृत्स्नः पुनस्तृतीयेऽपि सन्निपाते तु

पुनरेवैषामङ्गुलिविक्षेपान् सम्प्रवक्ष्यामि १७४
पूर्वं शम्या तथाऽऽवापो निष्क्रामश्च ततः पुनः
विक्षेपोऽथ पुनस्तालः पुनरावाप एव च १७५
अनामिकाकनीयस्योर्निष्क्रामश्च पुनस्तयोः
द्वाभ्यां सहैव विक्षेपः शम्या चावाप एव च १७३
मध्यमायां ततस्तालो विक्षेपोऽथ प्रवेशनम्
आवापश्च ततः कार्यस्तर्जनीनिष्क्रमः पुनः १७७
विक्षेपश्च पुनः कार्यः सन्निपातस्तथैव च
कलाः सप्तदशोपेताः सन्निपातो भवेदयम् १७८
आवापश्च पुनः कार्यः कनीयस्या च निर्गमः
विक्षेपश्च प्रवेशश्च त्वावापश्च ततः पुनः १७९
अनामिकाकनीयस्योस्ततस्तालो भवेत्पुनः
विक्षेपश्च पुनस्ताभ्यां ततः शम्या प्रकीर्तिता १८०
आवापश्च पुनः कार्यो मध्यमानिष्क्रमात् पुनः
विक्षेपश्च पुनः कार्यस्ततस्तालं नियोजयेत् १८१
आवापश्च पुनः कार्यस्तर्जनीनिर्गमः पुनः
विक्षेपः पञ्चदशकः शम्यया सह कीर्तितः १८२
आवापश्च कनीयस्यास्ततस्तालं नियोजयेत्
विक्षेपश्च प्रवेशश्च पुनरावाप एव च १८३
प्रदेशिन्या च निष्क्रामो विक्षेपश्च पुनः स्मृतः
सन्निपातस्ततश्चैव चतुर्विंशतिको भवेत् १८४
तृतीयः सन्निपातस्य त्वेष एव विधिः स्मृतः
एवं ज्येष्ठस्य विज्ञेयस्तालोङ्गुलिविकल्पितः १८५
प्रथमः षोडशकलश्चतुर्विंशतिकस्तथा
द्वितीयश्च तृतीयश्च सन्निपातकलाधिकः १८६
प्रत्येकं पतनान्येषु दश सप्त भवन्ति हि

शम्यातालकृतानीह सन्निपातकृतानि च १८७
षट्शम्यमष्टतालं त्रिसन्निपातं त्रिवस्तु चाप्येवम्
सप्तदशयुग्मयुक्तं विद्यादासारितं सर्वम् १८८
आसारितानामित्येवं गदितं लक्षणं मया
गीतानां वस्तुकानां च प्रयोगपरिकल्पनम् १८९
अतः परं प्रवक्ष्यामि गीतानां वस्तुकेष्वपि
विवधैककवृत्तानि त्रीण्यङ्गानि समासतः १९०
सर्वेषामेव गीतानां वस्तुष्ववयवेष्वपि
विवधैककवृत्तानि त्रीण्यङ्गानि भवन्ति हि १९१
एककं तु विदार्येका ते चोभे विवधः स्मृतः
षट्परं त्र्यवरं वृत्तं द्व्यङ्गं संहरणं च तत् १९२
विवधैककयोः प्रायोर्मद्रके तु प्रयोजनम्
प्रकर्याश्चापि वस्त्वर्धे पादे रोविन्दकस्य च १९३
रोविन्दकोत्तराभ्यां तु वृत्तमुल्लोप्यके तथा
पाणिकायां बहिर्गीते लास्ये चैवं प्रकीर्तितम् १९४
प्रवृत्तमवगाढं च द्विविधं वृत्तमुच्यते
आरोहित्वादवगाढं प्रवृत्तमवरोहतः १९५
आरोहणं च द्विविधं प्रवृत्तमवरोहतः
आरोहणं च द्विविधं तथा चैवावरोहणम् १९६
न्यासापन्यासविहितं मार्गान्तरकृतं तथा
त्र्यवरैका दशवरा विदार्यः परिकीर्तिताः १९७
चतुर्विंशतिरेतासां प्रमाणं परमं स्मृतम्
अध्यर्धार्धतृतीयाश्च सन्निपाताः प्रमाणतः १९८
उल्लोप्यके विदारी तु स्मृता वैहायसे तथा
विवधेन च ताः कार्या युग्मवृत्तेन चैव हि १९९
न ह्यर्धसन्निपातेऽस्या भवेदङ्गसमापनम्

गीतानि सप्त
मद्रकोल्लोप्यके चैव तथा चैवापरान्तकम् २००
प्रकर्योवेणुकं चैव रोविन्दकमथोत्तरम्
द्विविधं मद्रकं ज्ञेयं चतुर्वस्तु त्रिवस्तु च २०१
शीर्षकेण समायुक्तं तत्तु ज्ञेयं त्रिवस्तुकम्
पञ्च षट् सप्त तानि स्युः शीर्षकं चापरान्तके २०२
प्रकर्यामथ चत्वारि त्रीणि चाभ्यधिकानि वा
प्रकर्यास्तु प्रकीर्णत्वात्ताद्रूप्यमिति वर्णितम् २०३
रोविन्दकं तु सप्ताङ्गं षोडशाङ्गं परं स्मृतम्
पादौ द्वौ समवर्णौ तु एककावत्र कीर्तितौ २०४
प्रवृत्तं विवधश्चापि तस्य चादौ प्रयोजयेत्
ततो देहं ततोऽङ्गानि यथायोगं नियोजयेत् २०५
आकारश्चास्य मध्ये स्यादाकारश्चान्ततः स्मृतः
अविकल्पितमङ्गेऽस्य शीर्षकं सम्प्रयोजयेत् २०६
सप्ताङ्गं द्वादशाङ्गं वा प्रोक्तमावेणकं बुधैः
तत्र द्व्यन्तं तु सप्ताङ्गं त्र्यन्तं द्वादशकं स्मृतम् २०७
पादः सन्धिर्माषघातो वज्रं सम्पिष्टकं तथा
एककं चतुरस्त्रं च तथा चैवोपवर्तनम् २०८
उपपातः प्रवेणो च द्व्यङ्गं संहरणं तथा
अङ्गानि द्वादशाङ्गस्य स्मृतान्योवेणकस्य च २०९
सम्पिष्टकोपपाताभ्यां प्रवेणीभ्यां च वर्तितम्
उपवर्तनहीनं च सप्ताङ्गं परिकीर्तितम् २१०
निवर्तनं च सप्ताङ्गे तुल्यवर्णपदं स्मृतम्
अन्तयोर्द्वादशाङ्गे तु तथान्वपदमिष्यते २११
उल्लोप्यकेऽपि चाङ्गानामेष एव विधिः स्मृतः
अवगाढं प्रवृत्तं च माहाजनिकमेव च २१२

त्र्यङ्गोऽन्तः स्यात्तथा द्व्यङ्गो माहाजनिकवर्जितः
स्थितप्रवृत्तसंयोगादेकाङ्गो वापि कीर्त्यते २१३
एकाङ्गे संविधातव्यं माहाजनिकमेव तु
द्व्यङ्गं स्थितं प्रवृत्तं वाऽप्येकाङ्गं वा प्रकीर्तितम् २१४
द्व्यङ्गे व्याससमासाभ्यां बहुधा तु विधिः स्मृतः
ओवेणकस्य संहारो द्व्यङ्ग एकाङ्ग एव च २१५
एकको विवधो वापि कार्यो द्व्यङ्गे ततः सदा
उल्लोप्यके तु चान्तानामेष एव विधिः स्मृतः २१६
स्थितं प्रवृत्तं च तथा माहाजनिकमेव च
त्र्यङ्गोऽन्तः स्यादथ द्व्यङ्गो माहाजनिकवर्जितः २१७
एकाङ्गोऽपि विधातव्यो माहाजनिकसंयुतः
एवं व्याससमासाभ्यां बहुधाङ्गविधिः स्मृतः २१८
चतुरश्रस्तथा त्र्यश्रो मिश्रश्चान्तः प्रकीर्तितः
ओवेणकस्य संहारो द्व्यङ्ग एकाङ्ग एव च २१९
नादौ न मध्ये संहारे नित्यं चैव प्रयुज्यते
एकको विविधो वापि कार्यो ह्यन्ते प्रयोक्तृभिः २२०
उल्लोप्यकं षडवरं विंशत्यङ्गं परं स्मृतम्
तच्च संहरणे कार्यं मुखप्रतिमुखाचितम् २२१
वैहायसकसंयुक्तं तेनापि च विवर्जितम्
त्रिष्वङ्गेष्ववरं ज्ञेयं परं स्याद् द्वादशस्वपि २२२
एकाङ्गं षट्परं ज्ञेयं वैहायसिकमेव च
अस्य चांशत्रयेऽतीते प्रयोगमुपपादयेत् २२३
उल्लोप्यकोत्तराभ्यां तु मुखप्रतिमुखे स्मृते
ततोऽङ्गानां समासो वा विस्तरो वा विधीयते २२४
मुखप्रतिमुखे चैव ज्ञेये विवधसंज्ञके
वृत्तं प्रतिमुखे च स्यादनयोस्तु समासतः २२५

उल्लोप्यके तथा शाखा सोत्तरा सापरान्तके
प्रतिशाखा तथा चैव सवर्णान्यपदा स्मृता २२६
उत्तरं द्वादशपरं षडङ्गोऽवरमिष्यते
आकारपादहीनेन समं रोविन्दकेन च २२७
अन्ते चाप्यविशेषेण स्थाप्यमस्य तु शीर्षकम्
एवमङ्गविधिः कार्यः सप्तरूपे प्रयोक्तृभिः २२८
अतः परं प्रवक्ष्यामि गीतानां वस्तुकल्पनम्
गुरुच्छेद्याष्टकं कृत्वा न्यस्येल्लध्वष्टकं पुनः २२९
तत्रोपवहनं कार्यं प्रथमे तु गुरुद्वये
गुर्वक्षरे तृतीये तु ततः स्यात् प्रत्युपोहनम् २३०
गुर्वक्षरे चतुर्थे तु शम्या कार्या तु पञ्चमे
षष्ठसप्तमयोस्तालः शम्या गुर्वक्षरेष्टमे २३१
ततोऽर्धकलिकान् पातान् कुर्याल्लध्वक्षरेषु तु
गुर्वक्षरे तालगते पातास्तु कलिका मताः २३२
शम्यातालौ तालशम्ये तेषु कुर्यात्क्रमेण तु
तालं शम्यां च तालं च सन्निपातं तथैव च २३३
एवमेककले ज्ञेयं कलायोगस्तु भद्रके
गुरुविश्लेषणादेतद् द्विकलं परिकीर्तितम् २३४
विश्लेषणे कला यत्र पूर्वं पूर्वं निवेशयेत्
द्विकले मद्रके चैव त्रिकलं स्यादुपोहनम् २३५
कलिकं द्विकलं वापि नैव वा प्रत्युपोहनम्
द्विर्भावाद्विकलस्यैव विज्ञेयं तु चतुष्कलम् २३६
सप्तमे लघुनि त्वन्ते द्विर्भावोऽस्मिन् विधीयते
चतुष्कलेऽत्र विहितः कलाष्टकमुपोहनम् २३७
एका द्वे वा चतस्रो वा तथा स्यात् प्रत्युपोहनम्
यथाक्षरस्य कर्तव्यं मद्रकस्य तु शीर्षकम् २३८

चतुष्कलः पञ्चपाणिर्द्विकलः द्विकलः स्मृतः
चतुष्कलस्तु कर्तव्यो मद्रके तु चतुष्कले २३९
त्रिवस्तु त्रिप्रमाणं च त्र्यश्रतालसमुद्भवम्
इत्युक्तं मद्रकं पातैस्त्रयोदशभिरन्वितम् २४०
गुर्वक्षराणि चत्वारि चत्वारि च लघून्यथ
तृतीये च चतुर्थे च शम्यातालौ लघून्यपि २४१
तालं शम्यां च तालं च सन्निपातं च योजयेत्
लघ्वक्षरैककलिकैः पातैः सम्यक् प्रयोजयेत् २४२
यथाक्षरं बुधैरेतद्विज्ञेयमपरान्तकम्
आदौ कलोपवहनं विश्लेषाद् द्विगुणं भवेत् २४३
द्विकले कलिकं ज्ञेयं द्विकलं चाप्युपोहनम्
कलिकं कलिकं चेष्टं तथैव प्रत्युपोहनम् २४४
एतदेव द्विगुणितं विज्ञेयं तु चतुष्कलम्
लघ्वक्षरे तृतीये तु द्विर्भावेऽन्त्या कला स्मृता २४५
त्र्यश्रतालसमुद्भूतं पातैः षड्भिर्विभूषितम्
चतुःशाखाख्यमित्येतद्गदितं चापरान्तिके २४६
यथा शाखा तथैवास्य प्रतिशाखा विधीयते
पश्चिमार्धसमा सा तु तथैवान्यपदा स्मृता २४७
शिरश्चैककलेनापि कर्तव्यं पञ्चपाणिना
वृत्तौ निवृत्तयोगश्च गते वस्तुचतुष्टये २४८
शाखायां प्रतिशाखायां विशेषः पश्चिमे त्वयम्
षट्कलापातसंयुक्ते तालिके तु ततः स्मृते २४९
तथैककलयुक्तेऽस्ति विधिवत् पञ्चपाणिना
यथाक्षरेणैव भवेदनयोरुपवर्तनम् २५०
उपोहनं च वस्त्वर्थे द्विकलं प्रत्युपोहनम्
दक्षिणे तु तथा वृत्तौ चतुष्कलमपीष्यते

द्विकलं दक्षिणे कार्यं वृत्तौ चैव चतुष्कलम्  २५१
त्र्यश्रतालसमुद्भूतं पातैः षड्भिर्विभूषितम्
चतुःशाखाख्यमित्येतद् गदितं चापरान्तिके
यथा शाखा तथैवास्य प्रतिशाखा विधीयते
पश्चिमार्धसमा सा तु तथैवान्यपदा स्मृता
शिरश्चैककलेनापि कर्तव्यं पञ्चपाणिना
वृत्तौ निवृत्तयोगश्च गते वस्तुचतुष्टये
उल्लोप्यकं तु द्विगुरु द्विलघ्वन्तेऽथ गुर्वथ
शम्या तालो द्विरभ्यस्तो सन्निपातोऽन्त्य एव च  २५२
प्रत्यक्षरकृतैः पादैः पञ्चभिः समलङ्कृतम्
चतुरश्रं सुविच्छेदमेतज्ज्ञेयं यथाक्षरम्  २५३
पूर्वोक्तेन विधानेन द्विचतुष्कलमिष्यते
अस्य चाङ्गत्रयेऽतीते वैहायसकमिष्यते  २५४
तदेकाङ्गावरं ज्ञेयं द्वादशाङ्गपरं स्मृतम्
प्रमाणाद् द्वादशकलं तथा पातमथापि च  २५५
अस्य तु द्विकला शम्या तालस्त्रिकल एव च
द्विकला च पुनः शम्या तालश्चैककलः स्मृतः  २५६
ततः शम्या ततस्तालः सन्निपातस्ततः पुनः
शाखेयं प्रतिशाखा तु नित्यमन्यपदा स्मृता  २५७
यदा त्वस्य भवेदन्तस्तदन्ता हरणं बुधैः
यथाक्षरेण नियमात् संहार्यं पञ्चपाणिना  २५८
स्वतालेनान्तहीनस्य संहार्यः परिकीर्तितः
त्रिप्रकारनिवृत्तस्तु त्र्यङ्गोऽन्तस्त्रिविधः स्मृतः  २५९
त्र्यश्रश्च चतुरश्रश्च मिश्रश्च परिकीर्तितः
स्थितप्रवृत्ते तस्याङ्गं माहाजनिकमेव च  २६०
स्यात्पञ्चपाणितालेन तदन्ताहरणं यदा

तदा स्थितं भवेद्युग्मं तस्य पातविधिस्त्वयम्  २६१
शम्याऽपि द्विकला कार्या तालोऽपि द्विकलः स्मृतः
चतुष्कलः सन्निपातः प्रवृत्तमत ईष्यते  २६२
अस्य तु द्विकला शम्या तथा चैककला पुनः
चञ्चत्पुटस्तु तालादिः सन्निपातस्ततः परम्  २६३
स्थितं तालेन कर्तव्यं माहाजनिकमस्य तु
निवृत्ततालः कर्तव्यः प्रवृत्तस्यापि तत्त्वतः  २६४
अत्र तालविधिश्चेष्ठः प्रायशस्तूपवर्तने
आदावुद्धट्टकः कार्यः परिवर्तक एव च  २६५
युग्मे हि मिश्रतालत्वाद् युग्मे ह्यन्तः प्रयुज्यते
विवधैककसंयुक्तः पूर्वं पश्चाद्विधिः स्मृतः  २६६
यथावदन्ततालोऽयं युग्मो मिश्रश्च कीर्तितः
अतः परं प्रवक्ष्यामि त्र्यश्रमन्यविधिं पुनः  २६७
शम्या तु द्विकला पूर्वं ततस्तालो विधीयते
त्रिकलः सन्निपातश्च प्रवृत्तं वाप्यतः परम्  २६८
प्रवृत्तमस्य कर्तव्यं यथावत्परिवर्तनम्
यथाक्षरप्रयुक्तेन नियमात्पञ्चपाणिना  २६९
अस्यापि स्थिततालेन माहाजनिकमिष्यते
निवृत्ततालः कर्तव्यस्तथाऽत्रापि निवृत्तिमान्  २७०
युग्मौजमिश्रतालत्वान् मिश्रोऽप्यन्तः प्रयुज्यते
विवधैककसंयुक्तः सर्वश्चान्तविधिः स्मृतः  २७१
व्यङ्गमेकाङ्गमपि वा स्थितं कार्यं समासतः
तत्र युग्मं भवेद्व्यङ्गं त्र्यश्रमेकाङ्गमेव च  २७२
प्रवृत्तमपि विज्ञेयं व्यङ्गमेकाङ्गमेव वा
माहाजनिकमेकाङ्गं त्र्यङ्गं संहरणं स्मृतम्  २७३
स्थितादिकः प्रवृत्तान्त एवमन्तविधिर्बुधैः

उल्लोप्यके समायोज्य ऊहापोहविशारदैः २७४
प्रकरी वस्तु षरामात्रं पाताश्चैकान्नविंशतिः
वस्तु प्रमाणं कर्तव्यं तथैव च चतुष्कले २७५
न यथाक्षरयोगेन न चापि द्विकलं स्मृतम्
आद्यमात्राद्वयस्यान्तः शम्यातालान्वितो भवेत् २७६
मात्रात्रयस्य चान्तस्य शम्यैकैकान्ततः स्मृता
चतुर्थ्यां द्वादशस्तालः पञ्चम्यां चाष्टमो मतः २७७
षष्ठ्यां तु द्विकला शम्या तालश्च द्विकलो भवेत्
पुनश्च द्विकलस्तालः शम्या च द्विकला पुनः २७८
शम्या तालश्च तालश्च शम्या तालस्तथैव च
शम्या तालः सन्निपात इति वस्तु प्रकीर्तितम् २७९
यदा त्वर्धचतुर्थानि वस्तूनि प्रकरी भवेत्
पश्चिमार्धपदस्यैव तदर्थं प्राङ् निवेशयेत् २८०
कनिष्ठासारितेनास्य कार्यं संहरणं ततः
पादः पूर्वः समः कार्यस्त्वपरान्तकशाखया २८१
ओवेणके द्वितीयेऽपि तस्यैव प्रतिशाखया
अनित्यः शीर्षके तालो माषघातस्ततः परम् २८२
षट्पातो द्वादशकलस्त्वस्य पातविधिस्त्वयम्
कर्तव्या द्विकला शम्या तालो द्विकल एव च २८३
पुनश्च द्विकलस्तालः शम्या च द्विकला पुनः
पुनश्चैककलस्तालः सन्निपातः कलात्रये २८४
प्रायेण माषघातश्च विवधाङ्गः प्रकीर्तितः
सन्निपातश्च पश्चार्धे कदाचिदुपवर्तनम् २८५
अस्य स्यात्कलिकेनैव तद्योज्यं पञ्चपाणिना
सन्धिर्यथाक्षरेणैव कर्तव्यं पञ्चपाणिना २८६
एककं विवधो वापि तस्याङ्गं समुदाहृतम्

अन्तस्य चतुरश्रस्य प्रवृत्ते यो विधिः स्मृतः
विवधोङ्गेन तेनैव चतुरश्रकमिष्यते २८७
सन्धिवद्वज्रतालश्च द्विधा सम्पिष्टकं मतम्
सप्ताङ्गे द्वादशकलं द्वादशाङ्गैर्दशैव तु २८८
निष्क्राममादितः कृत्वा शम्यास्तिस्रः प्रयोजयेत्
तालत्रयं ततश्चैव शम्यातालौ ततः परम् २८९
शम्यातालौ ततः कार्यो सन्निपातोऽन्त्य एव च
ओवेणके तु सप्ताङ्गे सम्पिष्टकमिदं मतम् २९०
द्विः शम्यातालयोगेन द्वादशाङ्गेऽपि चेष्यते
पाता नवैकादश वा सम्पिष्टकमुदाहृतम् २९१
वज्रवत्सम्प्रयोक्तव्यमुपवर्तनमेव च
युक्ता विवधवृत्ताभ्यां प्रवेणी द्विविधा स्मृता २९२
पञ्चपाणिस्तु कर्तव्यं प्रवेणयाश्च यथाक्षरः
द्विकलो वापि मिश्रो वा प्रयोगो द्वादशानुगः २९३
अन्ते चास्याः प्रकर्तव्यं कदाचिदुपवर्तनम्
पञ्चपाणिविधानेन यथोक्तेनैव तद्भवेत् २९४
द्वितीयपादतालेन ह्यवपातश्च कीर्त्यते
वज्रतालेन कर्तव्यमन्ताहरणमस्य तु २९५
रोविन्दके तु षण्मात्राः पाताश्चैकान्नविंशतिः
अथार्धेऽन्ते च मात्राणां पञ्चानां पात उच्यते २९६
तालः शम्या च तालश्च शम्या तालस्तथैव च
पञ्चानामपि मात्राणां विधिरेष यथाक्रमम् २९७
चतुर्दशोऽपि पञ्चम्या मात्रायास्ताल उच्यते
चतुष्कलाऽन्त्यया तुल्या षष्ठी मद्रकमात्रया २९८
इति पादस्तथा चाष्टौ कला ह्याद्याह्युपोहनम्
ततश्चैव प्रयोक्तव्यं द्विकलं प्रत्युपोहनम् २९९

घातश्चेत् सन्निपातश्च विवधैककयोजिताः
वर्णानुकर्षोऽष्टकलस्त्वन्यः प्रस्वार उच्यते ३००
तुल्यवर्णोपवहनो द्वितीयः पाद इष्यते
शरीरतालः कर्तव्यः प्रस्वारोऽस्य विशेषतः ३०१
द्विकलेनैव कर्तव्यो विशेषात् पञ्चपाणिना
कलाद्वादशनिर्दिष्टं प्रमाणं चास्य तत्त्वतः ३०२
रोविन्दकशरीरं तु षट्कलोपोहनं स्मृतम्
विवधो वाऽपि वृत्तं वा तस्यादौ परिकीर्त्यते ३०३
आकारवृत्तमस्य स्याच्चतुष्कं त्रिकमेव वा
तस्योपरि यथेष्टं स्यादधस्तादङ्गयोजनम् ३०४
आविशेषनिवृत्तं तु शीर्षकं सम्प्रयोजयेत्
यथाक्षरेण तच्चैव कर्तव्यं पञ्चपाणिना ३०५
आकारैककमस्यान्ते प्रवृत्तं नियमाद्भवेत्
इति रोविन्दकं प्रोक्तं स्यादुत्तरमतः परम् ३०६
मुखप्रतिमुखे स्यात्तामुल्लोप्यकवदुत्तरे
उत्तरं संप्रवक्ष्यामि यथाविहितलक्षणम् ३०७
अस्येदमुत्तरस्थाय मुखं प्रतिमुखं भवेत्
उल्लोप्यकवदस्यादौ मात्रा चैका चतुष्कला ३०८
रोविन्दकवदाकारगणवर्जं प्रयोजयेत्
शाखा षडङ्गाऽधरा स्याद् द्वादशाङ्गा परा स्मृता ३०९
षट्पाता द्वादशकला शाखा ज्ञेया प्रमाणतः
तस्यां तु द्विकलस्तालः शम्या चैककला भवेत् ३१०
पुनश्चैककलस्तालः सन्निपातः कलात्रये
शाखावत्प्रतिशाखा तु भवेदन्यपदा तु सा ३११
अविशेषनिवृत्तिश्चाप्यस्यान्तो नियतो भवेत्
अन्ते चास्य विशेषेण मध्ये चैव तु शीर्षकम् ३१२

तालोऽयं दक्षिणे मार्गे सप्तरूपस्य कीर्तितः
य एव दक्षिणे तालो वृत्तावपि स कीर्त्यते  ३१३
कलार्धं तु कला तत्र विशेषोऽन्त्यश्च कीर्त्यते
अर्धयोगस्तु तत्कालादर्धकालः प्रकीर्तितः  ३१४
उल्लोप्यकोत्तरमुखे हित्वा युग्मैककं तथा
चतुष्कलं स्याद् द्विकलं त्रिकलं च यथाक्षरम्  ३१५
रोविन्दकोल्लोप्यकयोर्मद्रकोत्तरयोस्तथा
शरीरेषु विधिर्ह्येष शेषेषु प्रकृतिर्भवेत्  ३१६
प्रकृतावपि नेयं स्याद् द्विकले तु चतुष्कलम्
कालेनैवं भवेद्वृत्तावर्धयोगश्चतुष्कले  ३१७
वृत्तौ चतुष्कलो योगो दक्षिणे स्यात्कदाचन
न मद्रकोल्लोप्यकयोर्मुखोपवहनेषु तु  ३१८
यो दक्षिणे तालविधिर्वृत्तौ च समुदाहृतः
चित्रे व्यस्ते समस्ते वा तावुभौ परिकीर्तितौ  ३१९
शाखानिवृत्तादन्यत्र चित्रं तूभयमार्गिकम्
इति मार्गत्रयेऽप्येतत्सप्तरूपं प्रकीर्तितम्  ३२०
द्विविधा प्रकृतिश्चास्य कुलकं छेद्यकं तथा
एकार्धं कुलकं तत्र पृथक् छेद्यकमिष्यते  ३२१
निर्युक्तं पदनिर्युक्तमनिर्युक्तं तथैव च
त्रिविधं चापि विज्ञेयं सप्तरूपं प्रयोक्तृभिः  ३२२
बहिर्गीताङ्गशाखाभिर्युक्तं निर्युक्तमिष्यते
बहिर्गीताङ्गहीनं चाप्यनिर्युक्तमिति स्मृतम्  ३२३
बहिर्गीतविहीनं तु पदनिर्युक्तमिष्यते
इत्येतत्सप्तरूपस्य प्रकृतं त्रिविधं स्मृतम्  ३२४
अष्टाङ्गात् षोडशाङ्गाच्च युग्मौजौ वा प्रमाणतः
इति युक्ते तु कर्तव्या मात्रायुक्ता तु पाणिका  ३२५

सर्वेषामपि गीतानामन्ते छन्दकमिष्यते
चतुरश्रस्तु सत् त्र्यश्रो नवाङ्गो युक्त एव तु ३२६
चतुष्पदा तथैकाङ्गा त्र्यङ्गा वा परिकीर्तिता
अङ्गैर्व्यस्तैः समस्तैर्वा युग्मौजा वा प्रमाणतः ३२७
एकस्या वा बहूनां वा द्वयोर्वाथ प्रयोजितम्
तथा शृङ्गारभूयिष्ठा त्रिविधा स्याच्चतुष्पदा ३२८
प्रवृत्ताख्या द्रुतलया स्थिताख्या तु विलम्बिता
स्थितप्रवृत्तसंज्ञा च ज्ञेया मध्यलया तथा ३२९
लास्यमित्येव यत् पूर्वं मया वः परिकीर्तितम्
लक्षणं तस्य वक्ष्यामि प्रयोगं च यथाक्रमम् ३३०
लसनाल्लास्यमित्युक्तं स्त्रीपुम्भावसमाश्रयम्
एकार्धं पृथगर्धं च तदङ्गैस्तु प्रकीर्तितम् ३३१
भाणवच्चैकहार्यं स्यादूह्यवस्तु तथा भवेत्
तत्र गेयपदं तावत्प्रथमं परिकीर्त्यते ३३२
स्थापिते भाण्डविन्यासे पटे चैवापकर्षिते
ब्रह्मणस्त्रिषु पार्श्वेषु चासने सम्प्रकल्पिते ३३३
मार्जितेषु मृदङ्गेषु प्रयुक्ते च त्रिसाम्नि तु
मार्गासारितकं कुर्यात्तन्त्रीवेणुविभूषितम् ३३४
भाण्डवाद्येन संयुक्तं ततश्चासारितं बुधैः
परिवर्तैस्त्रिभिर्युक्तमतश्चोपोहनं भवेत् ३३५
त्र्यश्रेण द्विकलेन स्यात्ततश्च परिधावनम्
प्रयोक्तव्यं प्रयोगज्ञैः परिवर्तनमेव च ३३६
परिवर्तनके चैव पुंवाक्यं प्राक् प्रयोजयेत्
पुरुषोऽत्र त्रिवाक्यः स्याच्चतुर्वाक्यङ्गना स्मृता ३३७
कार्यं तथाऽवसानं च प्रत्यर्थं परिधानके
इत्येतत्प्रथमं त्वङ्गं लास्ये गेयपदं स्मृतम् ३३८

स्थितपाठ्यस्य वक्ष्यामि विधानं चाप्यतः परम्
वृत्तमेकमथ द्वे वा योजयेत् पञ्चपाणिना ३३९
ततः परं ते भूयोऽपि युग्मतालेन वा स्मृते
अवसानं च कर्तव्यं त्वरितं पञ्चपाणिना ३४०
द्विकलेनेति विज्ञेयं स्थितपाठ्यं प्रयोक्तृभिः
उपोह्य तालं त्र्यश्रं तु बृहद्वृत्त समैस्तथा ३४१
आसीनपाठ्यं युञ्जीत सर्वैर्भावैस्तु पौरुषैः
गेयं चतुर्भिः पादैस्तु समैरर्धवशानुगैः ३४२
आसीनपाठ्ये कर्तव्यं विधिवत्पञ्चपाणिना
अतीते युग्मतालेन श्लोकः कार्यस्तथाऽपरः ३४३
अष्टौ दश द्वादश वा पदानि तु ततः परम्
कुर्यादुतरतालेन ततो निर्वहणं पुनः ३४४
एतदासीनपाठ्यस्य विधानं परिकीर्तितम्
स्यात्पुष्पगण्डिका नाम यतङ्गं तन्निबोधत ३४५
तत्रैकं पौरुषं श्लोकं समवृत्तं प्रयोजयेत्
चतुर्भिः सन्निपातैश्च ज्ञेयं चच्चत्पुटाश्रयम् ३४६
पादे पादे तु तस्येष्टं वाद्यं नृत्तं तथैव च
अतश्चान्ये स्मृतं वृत्ते खञ्जनर्कुटसंज्ञिते ३४७
अन्ते निर्वहणं चास्याः शीर्षकं पञ्चपाणिना
आविद्धचार्यङ्गहारैरुद्धतैस्तत्र योजयेत् ३४८
ज्योत्स्नायां मदिरायां वा सलिले दर्पणेऽपि वा
छायां सन्दृश्य कान्तस्य प्रहर्ष्याथ विभूषितम् ३४९
नृत्तं प्रासादक्रीडार्थं लेहादिभिरलङ्कृतम्
त्र्यङ्गं प्रच्छेदकं तत्र विद्याल्लास्यप्रयोगवित् ३५०
चच्चत्पुटस्य तालेन तस्य प्रक्रीडितं भवेत्
मात्रावृत्तसमैः पादैः श्लोकबन्धो भवेदथ ३५१

बह्वक्षरार्थसंयुक्तं तोटकं पञ्चपाणिना
द्विकलेन प्रकर्तव्यं मिश्रेणैककलेन वा ३५२
नाराचकं च कर्तव्यं गुरुप्रायाक्षरान्वितम्
यथाक्षरेण त्र्यश्रेण सन्निपातैस्तथाष्टभिः ३५३
विविधैककसंयुक्तं कैशिकीजातिमाश्रितम्
त्र्यङ्गविच्छेदकं विद्याद्युक्तं प्रक्रीडितादिभिः ३५४
अनिष्ठुरश्लक्ष्णपदं गान्धारीजातिमाश्रितम्
चञ्चत्पुटेन योक्तव्यं त्रिमूढं द्विकलेन तु ३५५
चतुष्षष्टिः सन्निपातास्तस्मिंश्चैव प्रकीर्तिताः
यथामार्गकलोपेता विदारीविवधान्विताः ३५६
अङ्गहारान् सविष्कम्भान् नैव चात्र प्रयोजयेत्
केवलं पौरुषैर्भावैर्वाक्यं नाटचायितेन यत् ३५७
नर्कुटं खञ्जकं चैव त्रिविधं न प्रयोजयेत्
सैन्धवीमाश्रितां भाषां ज्ञेयं सैन्धवकं बुधैः ३५८
रूपवाद्यादिसंयुक्तं युग्मतोलकृतं तथा
वितस्ताऽऽलिप्तमार्गेण सैन्धवं वाद्यमिष्यते ३५९
ना पाठयं स्वल्पमप्यत्र प्रकुर्वीत विचक्षणः
मुखप्रतिमुखोपेतं तथा चाचपुटाश्रयम् ३६०
यथाक्षरैः सन्निपातैस्तथा द्वादशभिर्युतम्
नैकयुक्तिविचित्रार्थं पौरुषं भावमाश्रितम् ३६१
एकाङ्गं शीर्षकं गत्या द्विमाढं परिकीर्तितम्
उत्तमोत्तमके त्वादौ नर्कुटं सम्प्रयोजयेत् ३६२
श्लोकं विचित्रार्थपदं तथा चैवोपपादयेत्
ततश्च वस्तुकं कार्यमपरान्तकशाखया ३६३
यथाक्षरेण कार्यं तु शीर्षकं पञ्चपाणिना
उत्तमोत्तमकं प्रोक्तं हेलावृत्तिविभूषितम् ३६४

कोपप्रसादबहुलं सविक्षेपैरुपक्रमैः
संलापरचितैर्नित्यमुक्तप्रत्युक्तमिष्यते ३६५
वज्रार्धेन प्रकर्यास्तु तस्य तालविधिः स्मृतः
ततस्तु शीर्षकं कार्यं संयुक्तं पञ्चपाणिना ३६६
उक्तप्रत्युक्तमेवं हि यथोक्तं परिकीर्तितम्
एवमेतद् बुधैर्ज्ञेयं गानं तालप्रमाणतः ३६७
ऋग्गाथापाणिकादीनां सप्तरूपं प्रकीर्तितम्
यस्तु तालं न जानाति न स गाता न वादकः ३६८
तस्मात्सर्वप्रयत्नेन कार्यं तालावधारणम्
अङ्गभूता हि तालस्य यतिप्राणिलयाः स्मृताः ३६९
त्रयो लयास्तु विज्ञेया द्रुतमध्यविलम्बिताः
छन्दोऽक्षरपदानां हि समत्वं यत्प्रकीर्तितम् ३७०
कलाकलान्तरकृतः स लयो मानसंज्ञितः
श्रोतोगता च गोपुच्छासमा चात्र विधाय च ३७१
लयप्रवृत्तवर्णानामक्षराणामथापि वा
नियमो या यतिः सा तु गीतवाद्यसमाश्रया ३७२
समपाणिश्च विज्ञेयो ह्यवपाणिस्तथैव च
तथैवोपरिपाणिश्च गीतवाद्यसमाश्रयः ३७३
लयेन यत्समं वाद्यं समपाणिः प्रकीर्त्यते
ध्रुवाद्यदवकृष्टं स्यात्सोऽवपाणिः प्रकीर्तितः ३७४
लयस्योपरि यद्वाद्यं पाणिः स उप इष्यते
ततः स्थितिलयो यो वै सन्निपातो विधीयते ३७५
स तु मध्यलयं प्राप्य सन्निपातद्वयं भवेत्
द्रुतं चापि लयं प्राप्य सन्निपातचतुष्टयम् ३७६
यावत्तत्रोन्तरकृतार्द्रुतमध्य लयो हि सः
सोऽवपाणिस्तु विज्ञेयस्तज्ज्ञैर्द्रुतलयाश्रयाः

अत ऊर्ध्वं प्रमाणं तु लकानां न विधीयते ३७७
इत्येष लक्षणविधिर्निर्दिष्टो गानयोक्तृभिः
अत ऊर्ध्वं प्रवक्ष्यामि ध्रुवाणामङ्गकल्पनम् ३७८
इति भारतीये नाट्यशास्त्रे तालाध्याय एकत्रिंशः

अथ द्वात्रिंशोऽध्यायः

ध्रुवासंज्ञानि यानि स्युर्नारदप्रमुखैर्द्विजैः
गीताङ्गानि तु सर्वाणि विनियुक्तान्यनेकशः १
या ऋचः पाणिका गाथाः सप्तरूपाङ्ग एव च
सप्तरूपप्रमाणं हि तद्ध्रुवेत्यभिसंज्ञिमम् २
एभ्यस्त्वङ्गान्यथोद्धृत्य नानाच्छन्दःकृतानि तु
ध्रुवात्वं यानि गच्छन्ति तानि वक्ष्याम्यहं पुनः ३
मुखं प्रतिमुखं चैव वैहायसकमेव तु
स्थितप्रवृत्ते वज्रं च सन्धिः संहरणं तथा ४
प्रस्तारो माषघातः स्यादुपर्वतनमेव च
उपघातः प्रवेणी च चतुरश्रं सुशीर्षकम् ५
सम्पिष्टमन्ताहरणं माहाजनिकमेव च
ध्रुवाणामङ्गसंज्ञानि पञ्चानामपि नित्यशः ६
एकवस्तु ध्रुवा ज्ञेया द्विवस्तु परिगीतिका
त्रिवस्तु मद्रकं ज्ञेयं चतुर्वस्तु चतुष्पदा ७
ध्रुवावर्णास्त्वलङ्कारा यतयः पाणयो लयाः
ध्रुवमन्योन्यसम्बद्धा यस्माद् तस्मात् ध्रुवाः स्मृताः ८
ध्रुवास्तु पञ्च विज्ञेया नानासंस्थानसंश्रयाः
एतासां सम्प्रवक्ष्यामि सप्तरूपाङ्गकारणम् ९
उपवृत्तं प्रवृत्तं च प्रावेशिक्यां प्रकीर्त्यते
वज्रं च शीर्षकं चैव शीर्षिकायां विनिर्दिशेत् १०

प्रस्वारो माषघातश्च माहाजनिकमेव च
प्रवेणी ह्युपपातश्च अङ्कितायामथापि च  ११
मुखप्रतिमुखोपेता ह्यवकृष्टा विधीयते
वैहायसान्ताहरणे स्थितायां सम्प्रकीर्त्यते  १२
संहारश्चतुरश्रश्च नकुटे खञ्जके तथा
सन्धिः प्रस्वारसंयुक्ता अन्तरायां स्मृता तथा  १३
यान्यङ्गानि कलाश्चैव गीतकान्तर्गतानि तु
तानि छन्दोगतैर्वृत्तैर्विभाव्यन्ते ध्रुवास्वथ  १४
त्र्यश्रश्च चतुरश्रश्च तालः कार्यो ध्रुवात्मकः
षट्कलोऽष्टकलश्चैव यस्तु पूर्वं प्रकीर्तितः  १५
पूर्वेषामेव गीतानां यान्यङ्गानि स्मृतान्यथ
तेषां वृत्तविधौ कार्यमेककं विवधोऽथवा  १६
एककं तु विदार्यैको ते चोभे विवधः स्मृतः
षट्परं त्र्यवरं वाऽपि विदार्या वृत्तमिष्यते
पदवर्णसमाप्तिस्तु विदारीत्यभिसंज्ञिता  १७
एतेषां चापि वक्ष्यामि विधिं प्रकृतिसम्भवम्
ज्येष्ठानां वृत्तसंयुक्तं कुर्यादादौ तथैव च
विवधं चैव मध्यानां नीचानामेककं तथा  १८
त्र्यश्रं वा चतुरश्रं वा योगं ज्ञात्वा प्रयोगजम्
तेन प्रमाणयोगेन ध्रुवा कार्याऽवसानिकी  १९
गायत्र्याश्चापि शक्वर्याश्चान्तरे वा व्यवस्थिता
तेन पादप्रमाणेन ध्रुवा कार्याऽवसानिकी  २०
शक्वर्याश्चाति कृत्याश्च येऽन्तरे चावसानिकी
तेषां मात्रार्धविहिता ध्रुवा पादमया स्मृता  २१
यतिच्छन्दोविधानेन गुरुलघ्वक्षरान्वितः
कार्यो मात्राप्रमाणेन ध्रुवापादोऽवसानिकः  २२

मध्यमोत्तमयोः कार्या चतुरश्रावसानिकी
मध्याधमानां कर्तव्या त्र्यश्रा चैवावसानिकी २३
अथ पूर्णपदी या तु तस्या वृत्तं प्रवेशजम्
तत्रेष्टवृत्तप्रामाण्याद्ध्रुवा कार्या प्रमाणतः २४
ध्रुवास्तु पञ्च विज्ञेया नानावृत्तसमुद्भवाः
यथास्थानरसोपेता ह्युत्तमाधममध्यमाः २५
कनीयसीग्रहा काचित् सन्निपातग्रहाऽपरा
तथाऽऽकाशग्रहा काचित्त्रिविधा तु ध्रुवा स्मृता २६
प्रावेशिकी तु प्रथमा द्वितीयाऽक्षेपिकी स्मृता
प्रासाधिकी तृतीया च चतुर्थी चान्तरा ध्रुवा
निष्क्रामिकी च विज्ञेया पञ्चमी वृत्तकर्मणि
आसामेव प्रवक्ष्यामि छन्दोवृत्तसमन्वितम्
गान्धर्वं यन् मया प्रोक्तं स्वरतालपदात्मकम्
पदं तस्य भवेद्वस्तु स्वरतालानुभावकम् २७
यत्स्यादक्षरसम्बद्धं तत्सर्वं पदसंज्ञितम्
निबद्धं चानिबद्धं च येन तेन द्विधा स्मृतम् २८
अतालं च सतालं च द्विप्रकारं तदुच्यते
सतालं च ध्रुवाऽर्थेषु निबद्धं सर्वसाधकम् २९
यत्तु बाक्करणोपेतं सर्वातोद्यानुरञ्जकम्
अतालेन निबद्धं च पदतालं प्रकीर्तितम् ३०
नियताक्षरसम्बद्धं छन्दोयतिसमन्वितम्
निबद्धं तु पदं ज्ञेयं सतालपतनाक्षरम् ३१
अनिबद्धाक्षराणि स्युर्यान्य जातिकृतानि तु
आतोद्यकरणैस्तेषां विधानमभिनिर्मितम् ३२
अपदान्यनिबद्धानि तालेन रहितानि तु
आतोद्येषु नियुक्तानि तानि तानि तु रञ्जयेत् ३३

यानि चैवं निबद्धानि छन्दोवृत्तविधानतः
ध्रुवारूपाणि पूर्वाणि तानि वक्ष्यामि तत्त्वतः ३४
अत्युक्तं च प्रतिष्ठं च मध्यं गायत्रमेव च
एताः स्थितावकृष्टास्तु त्र्यस्रा ज्ञेयास्तु जातयः ३५
उष्णिगनुष्टुब्बृहती पङ्क्तिश्चेतीह जातयः
एताः प्रासादिकीनां तु त्र्यश्रा ज्ञेया यथाक्रमम् ३६
अनुष्टुब्बृहती चैव जगत्यथ विलम्बिता
ध्रुता च चपला चैवमुद्गता कृतिरेव च
ध्रुवाणां जातयो ह्येताः प्रयोगेषु प्रकीर्तिताः ३७
प्रावेशिकीनां जातीनामुद्धतानां निबोधत
पङ्क्तिस्त्रिष्टुप्सजगती तथाऽतिजगती पुनः
शक्वरी चेति निर्दिष्टा उद्धतानां तु जातयः ३८
सर्वासामेव जातीनां त्रिविधं वृत्तमुच्यते
गुरुप्रायं लघुप्रायं गुरुलघ्वक्षरं तथा ३९
गुरुप्रायाऽवकृष्टा स्याल्लघुप्राया द्रुता तथा
गुरुलघ्वक्षरप्रायाः शेषाः कार्या ध्रुवास्तथा ४०
वृत्तान्योजकृतानि स्युर्दुःखे यानि भवन्ति हि
तानि द्रुतासु योज्यानि लघुयुग्मकृतानि तु ४१
यानि चाल्पाक्षराणि स्युरल्पच्छन्दःकृतानि तु
तानि स्थितावकृष्टासु कार्या ह्याक्षेपिकीषु च ४२
गुर्वादिस्तु गुरुः कार्यो लघ्वादिश्च लघुस्तथा
ये त्वोजच्छन्दसां युक्ता ज्ञेया ते क्षेपिकी तथा
यान्योजयुग्मछन्दांसि ज्ञेयान्याक्षेपिकी तथा
लघुयुग्मकृता याऽस्या स्थिता साऽऽक्षेपिकी भवेत् ४३
विषमांशाक्षराणि स्युः पदैरर्थवशानुगाः
शम्यातालेन ता योज्या वर्णेनाकर्षितेन तु ४५

जातीनां त्वथ सर्वासां छन्दोऽवृत्तनिदर्शनम्
स्थानप्रमाणसंज्ञाभिर्गदतो मे निबोधत ४६
गुरुर्गाथांशको यत्स्यात्सर्वपादेषु दृश्यते
श्रीरिति ख्यातनामा सा कीर्तिता प्रथमा ध्रुवा ४७
यथा
देवं शर्वमीशं वन्दे ४८
मध्यलघुनाथ विद्युत्पादे पादे समं विभक्तेन
आदिलघुना धृतिः स्याद्गणेन योज्या हि मात्रेण ४९
यथा
शङ्करः शूलधृत् पातु मां लोककृत् ५०
लघुः स्यात् पदादौ त्रिके या धृतिः सा ५१
यथा
उमेशः सुरेन्द्रस्तवायुः करोतु ५२
लघुनि गुरु वा कथिता रजनी ५३
यथा
विरहे मदनः अधिकं दहति ५४
एता नृत्ते च गीते च ज्ञेया वै गीतजातयः
प्रतिष्ठासुप्रतिष्ठाभ्यां भूयो वक्ष्यामि लक्षणम् ५५
द्वितीयं लघु सर्वत्र चतुर्णां यत्र दृश्यते
सा प्रतिष्ठा बुधैर्ज्ञेया सुप्रतिष्ठा द्वयेन तु ५६
प्रतिष्ठा यथा
सोसअन्तो अङ्गआइं वादि वादो पुप्फवाही ५७
सुप्रतिष्ठा यथा
एदिसुए ऊसइआ अज्जइं मां हंसवहू ५८
लघुनी प्राग् गुरुणी द्वे यदि पादे भ्रमरी सा ५९
यथा

वनसराडे ग्रदिमत्तो वराहत्थी परिखिराणो ६०
प्रथमं च तृतीयं च यस्याः स्याच्चतुरक्षरे
पादे लघ्वक्षरे नित्यं सा जयेत्यभिसंज्ञिता ६१
यथा
हिमाहए वरांतरे ग्रग्रं गग्रो पविराराग्रो ६२
चतुर्णां यत्र पादानां तृतीयं च भवेल्लघु
विज्ञेया सुप्रयोगज्ञैर्विजया नाम नाम्रतः ६३
यथा
मारुल्लवो नज्ञन्तग्रो मेहागमे संबद्दग्रो ६४
पादे पादे तु स्यात् सर्वैर्दीर्घैर्वृत्तेऽस्मिन् दृष्टा विद्युद्भ्रान्ता ६५
मेहा गज्ञन्ता लोग्रं छादन्तो तोयं मुंचन्ता संपत्ता मेहा ६६
ग्राद्यप्रे द्वे यत्र तु ह्रस्वे ना खलु नाम्ना भूतलतन्वी ६७
यथा
मेहणिरुद्धं पेक्खिग्र चन्द्रं सोग्रइ तारा ग्रंसुकिलिराणा ६८
यदि च गुरुः पदनिधने भवति हि सा कमलमुखी ६९
यथा
पवनहदो सलिलघणो भमइ णहे उवफमसो ७०
प्रथमं च तृतीयं च त्वन्तं चैव यदा गुरु
दृश्यते प्रतिपादं तु सा ज्ञेया वागुरा यथा ७१
मेहणिरुद्धग्रो णडजोह्णग्रो णिच्चणिप्पहो एस चन्दग्रो ७२
द्वितीयं नैधनं यत्र दीर्घाणि सर्वतः
सुप्रतिष्ठाकृते पादे शिखा ज्ञेया तु सा यथा ७३
वळाहएहिं पगज्जिदेहिं णहं समंता परुराण ग्रंव ७४
लघुनि त्वादौ चरणे यस्या गदिता नाम्ना घनपङ्क्ति सा ७५
यथा
तडिसंखुद्धं स्वसम्बद्धं जलधाराहिं रुददीवब्भम् ७६

एतास्तु जातयो ज्ञेया सुप्रतिष्ठाध्रुवास्वथ
अत ऊर्ध्वं प्रवक्ष्यामि गायत्रीपरिकल्पनम् ७७
आद्ये पुनरन्त्ये पादे गुरुणी चेत्
ज्ञेया तनुमध्या गायत्रसमुत्था ७८
यथा
वज्जाहअकूटो धाउज्भरसोत्तो एसो गिरिअो भूमिंविपतदीव ७९
आद्यं चतुर्थमन्त्यं च गुरूण्येतानि यस्य तु
गायत्र्यधिकृते पादे ज्ञेया सा मालिनी यथा ८०
दीसदि पुराणओ पुब्ददिसामुहे
जोह्ला समागओ पुरिणमचन्दओ ८१
गुरुयुगमन्ते यदि परमस्या इह कथिता सा मकरकशीर्षा ८२
यथा
इह सिसिरंमि मदजणणंमि पमदवणंमि विलसदि वादो ८३
लघुनी चतुर्थं चरणे तु यस्याः
भवतीह सा वै विमला तु नाम्ना ८४
कमलाअरेसुं भमरोणदेसुं सम सुद्धवत्ती विहआणवमत्ती ८५
यस्याःस्युश्चरणे त्रीण्यादौ निधनम्
दीर्घाणीह तु सा वीची नाम ८६
यथा
गज्अन्तो जलदा णच्चन्ते सिहिणो गायन्ते भमरा रम्मे पाडसए ८७
त्रिलघुरादितो यदि च पञ्चमं भवति पादतः प्रकथिता गिरा ८८
यथा
जलदनादअं सुणिअ कुंजरो णददि काणणे वडिगआउरो ८९
आद्ये चतुर्थकमन्त्ये तथा गुरु
यस्यास्तु पादतो ज्ञेया हि सा जला ९०
यथा

एसा हि वाउणा विक्खित्तमुत्तश्रं
दट्ठूण पादवं हंसी परुणिणश्रा ९१
त्रीण्यादौ यदि स्युरन्ते द्वे च दीर्घे
ज्ञेया सा विधिज्ञैर्नाम्ना द्वे सुनन्दा ९२
यथा
एदे गज्जमाणा श्रब्भं छादयन्ता
भीमा काळमेहा उव्वेदं जणन्ति ९३
श्राद्यं चतुर्थे च त्वन्त्यमुपान्त्यं च
यत्र गुरूणि स्युः सुललिता ज्ञेया ९४
यथा
साह सुसब्भावं किंसि पिह कुद्धा
मा चिरसम्बद्धं पेच्छसि सब्भावम् ९५
लघुनी गुरु च द्विगुणं यदि चेच्चरणे चरणे कथिता नलिनी ९६
यथा
पवणाहतका तरुणा तरश्रो कुसुमागमए विश्रसन्ति विश्र ९७
त्रीण्यादौ तु यदि चान्त्यं चाऽपि गुरु
नाम्ना वै कथिता पङ्क्तिः सा तु यथा
यथा
एषा हंसवहू विद्धा काणणदो कान्तं संगहुवा गन्तुं उत्सहिश्रा
स्याद् द्वितीयं ह्रस्वं सर्वमन्त्यं दीर्घम्
यत्र पादे पादे नीलतोया वै सा ९८
यथा
मेहवुन्दं वादो विक्खिरन्तो वादि
दूसहो श्रावादि पादवाणं लासो ९९
गायत्र्या जातयो ह्येता विज्ञेयाः समवृत्तजाः
श्रत ऊर्ध्वं प्रवक्ष्यामि उष्णिग्जातिविकल्पनम् १००

गुरु निधनगतं यदि भवति सदा
भवति हि चपला द्रुतगतिरपि सा  १०१
यथा
सुरुचिरनयणं तव वग्रणमिदम्
रमणि रतिकरं मम मदजणणम्  १०२
तृतीयं पञ्चमं चैव गुरुर्यत्र तु नैधनम्
सदा तूष्णिकृते पादे तन्वी सा नामतो यथा  १०३
यथा
पिग्रवादिवादग्रो सुवसन्त काळए
पिग्रकामुग्रो विग्र मदणं जणेतग्रो  १०४
गुरुणा लघुना चैव समं नीता तु या ध्रुवा
छन्दस्युष्णिहि वृत्तज्ञैर्विज्ञेया कामिनी यथा १०५
ग्राद्यमन्तपञ्चमे स्यात्तृतीयमेव च
पादतो गुरूणि वै यस्य सा शिखा तु वा  १०६
इत्येके पठन्ति
पेक्खिवऊण ग्राग्रदं माहवं च इङ्ग्रो
पादवं वणोळळग्रो वादि वामवादग्रो  १०७
ग्राद्ये पुनरन्त्ये च यस्या गुरुणी पादे
ज्ञेया भ्रमरमाला नाम्ना प्रकथिता सा  १०८
यथा
हंसागमनधीरं कासं सुग्रविचित्रम्
एवं सरदिकाले रम्मं सरसि तोयम्  १०९
ग्राद्यचतुर्थगते ग्रन्त्यतमं च गुरु
यत्र सदा चरणे सा खलु भोगवती  ११०
यथा
चक्कसनामवहू कान्तसहाइ णिग्रा

णिम्मळ अम्मि जळे हिंडदि संगदिआ १११
आदौ यदि गुरुणी अन्त्यं निधनगतम्
ज्ञेया मधुकरिका उष्णिह्यभिकथिता ११२
एसा पिअअ लदा रम्मा भमरजया
काले मदजणणे जादा कुसुमवदी ११३
अन्त्यं च निधनं च गुरूणि स्युः
सुभद्रा नामतो यथा ११४
वणम्मि सुक्खरुक्खे पणट्ठपतोये
करेणुआ विहणो उवेइ मत्तहत्थी ११५
यदि तु भवन्त्येवं यदि यदि दीर्घाणि
त्रिगुरुरिह प्रोक्ता भवति तु मत्तेयम् ११६
यथा
जलभरसंभंतो खिदिधरमूलंमि
पिअजुवदीसत्तो पविचरिदो हत्थी ११७
यदि हि गुरूण्यन्ते चरणविधो त्रीणि
तत इह विज्ञेया कुसुमवती नामा
इति पाठान्तरम्
द्वितीयं सतृतीयं तथाद्ये इह दीर्घम्
यदि त्रयं तु पादे भवेत्सा तु चित्रा ११८
यथा
महामेहविदाणं बलाकाकुलबद्धम्
महाभीमणिणादं पदिरणं गगणम्मि ११९
यदि चतुर्थमन्त्यं गुरु तथैव षष्ठम्
भवति सा तु नाम्ना निगदिता मनोज्ञा १२०
यथा
कुसुमगन्धवाही सलिलरेणुपुण्णो

रमणि वादि वादो मणसिजं जणन्तो १२१
द्वितीयं च चतुर्थं च अन्त्योपान्त्ये तथैव च
यत्र पादे तु दीर्घाणि उष्णिक् सा तु विलम्बिता १२२
यथा
गइंदतोअखोआ पटीपरित्थहंसा
भमन्तचक्कवाआ नदी गआ समुद्दम् १२३
प्रथमं यत्र पादे लघुनी पञ्चमं च
कथिता सा तु दीप्ता सततं चेदमुष्णिक् १२४
यथा
पवनो पुष्फहारी अइसीदो समन्ता
सिसिरे वादि काले मम सोअं जणंतो १२५
आद्यमथ पञ्चमं दीर्घमथ नैधनम्
यत्र यदि नाम चेच्चञ्चलगतिस्तु सा १२६
यथा
मेहमलमुत्थओ निम्मलगहाउलो
सोहदि णहंगणे णिम्मलकरो ससी १२७
एतास्तु जातयो ज्ञेयाः स्थिताः प्रासादिकीष्वथ
अतःपरं प्रवक्ष्यामि त्वनुष्टुब्लक्षणं पृथक् १२८
लघुनी गुरुलघुनी लघुनि गुरु च यदि
चरणे नियतगतौ कथिता विमलजला १२९
यथा
विकचाम्बुजहिसिरे भमरावलिमुहले
बहुणिम्मलसखिले विहगो सरदिभमइ सरे १३०
पञ्चमं नैधनं चैव पादे स्यातां तु यत्र वै
नित्यमानुष्टुभे दीर्घे विज्ञेया ललितेति सा १३१
यथा

कुसुमसुग्रंधिग्रए मणसिजदीवणए
प्रमदवणंगणए विलसदि हंसवहू १३२
यदि च खलु षष्ठकाल्लघुगण इहादितः
पुनरपि च सप्तमं लघु भवति सा मही १३३
यथा
बहुकुसुममोहिए कमलवणसंडए
सहग्ररसहाइणी परिसरदि हंसिग्रा १३४
लघुगण इव षट्के यदि भवति मुखे तु
चरणगतिविधौ सा मधुकरसदृशाख्या १३५
यथा
विविधवणविचारी पमदवणसुग्रंधी
कुसुमवणविबोधी लसदि सरदि वादो १३६
यदि खलु पञ्चमकं पुनरपि चान्त्यतमम्
गुरु चरणे तु भवेद्भवति हि सा नलिनी १३७
यथा पुलिनतलंगणए कमलिणिवासणिग्रा
पजब हि वासगिहं पग्ररदि सारसिग्रा १३८
प्राग् यदि निधनगतं स्यादथ गुरुस्त तम्
यत्र हि चरणविधौ सा खलु भवति नदी १३९
यथा
हंसकुलसंमुदिदे सारसरुदमुहळे
मत्तमहुग्ररगणे हिरडति महुग्ररिग्रा १४०
ग्रनुष्टुब्जातयो ह्येताः प्रावेशिक्यः प्रकीर्तिताः
स्त्रीणामुत्तममध्यानामवकृष्टा निबोधत १४१
ग्राद्ये चतुर्थमपि चान्त्ये दीर्घाणि यत्र चरणे
प्रावेशिकी तु बृहती सा नाम्ना तथैव रुचिराख्या १४२
यथा

राहुपराश्रहदसोहं चंदं गाहिराग समिऊरा
तारागगो विहदसोहो तेजस्सुएहि रुददिव्व १४३
यदि पञ्चमं हि सतृतीयं गुरुणी पदान्तरचिते द्वे
प्रमितेति सा भवति नाम्ना ह्यवकृष्टजातिरिह पङ्क्तिः १४४
यथा
घणगब्भगेहपरिखित्तो श्ररुणप्पहापिहिदसोहा
गश्रणंगणेऽपिहिदरस्सि ण विभादि जोह्नरहि इन्दू १४५
यदि खलु षष्ठमथान्त्ये भवतो गुरुणी चरणयोगे
स्थितिलयकृता नु जगतीयं भुवि निगदिता विगतशोका १४६
यथा
जलहरविहाणपिहिश्रङ्गो रविकिरणजालहदसोहो
गहमुहविणिग्गश्रविवरागो श्रसु विसदि श्रत्थगिरिमिन्दू १४७
श्राद्ये चतुर्थमपि चाष्टममक्षरं चैकादशं यदि भतेत्तु गुरु
सा त्रैष्टुभे भवति पादविधौ विश्लोकजातिरवकृष्टगता १४८
मेहत्थिश्रो रविकराभिहदो तारागणेहि विधुरे गमिदो
श्रत्थं उवेदि श्ररणाभिहदो चन्दो गहम्मि रश्रणीसहिश्रो १४९
श्राद्ये चतुर्थे दशमं नैघनं ह्यष्टमं तथा
यत्र दीर्घाणि पादे स्युस्तद्वृत्तं ललितं स्मृतम् १५०
यथा
एसो पमत्तगश्रदूमिदाणणो दीणो पफुळ्ळवनवादवचाळिदी
वासाभिवद्धचळणो गश्राणुगो रम्मं वणं गश्रवरो
पलायदि १५१
यदि पञ्चमं हि सतृतीयनैघनं नवमं द्वितीयमपि तस्य तादृशम्
चरणे गुरूणि यदि सातिपूर्विका जगती बुधैर्निगदिता सा मता
मनोवती
यथा

घणसन्तदायदबिदाणमम्वरं अवलिम्विऊ रमणीमुहे ससी
गहगाहसंकुइदमन्दजोह्नओ ण विराजदे सवदि किं पधाविओ
एतास्तु जातयो ज्ञेयाः स्थितानां हि प्रयोगजाः
आक्षेपिक्यवकृष्टानां सम्प्रवक्ष्यामि लक्षणम् १५२
सुप्रतिष्ठादिकं छन्दस्त्ववकृष्टासु योजयेत्
वृत्तान्यन्यानि यानि स्युर्देवस्तुत्याश्रयाणि तु १५३
अक्षराणां निवेशं तु यतयः पाणयस्तथा
अवकृष्टास्तु यस्याः स्युरवकृष्टा भवेत्तु सा १५४
स्थायिवर्णा स्थितलया कलान्तरकृताक्षरा
समपाणियतिश्चैव ह्यवकृष्टा विधीयते १५५
अवकृष्टध्रुवाणां हि कलान्तरकलासु च
अक्षराणां निवेशस्तु वृत्तजात्यां विधीयते १५६
अल्पवर्णान्तरा चैव ह्यवकृष्टा विधीयते
प्रावेशिक्यास्तु संक्षेपः करणानां परिग्रहात् १५७
एवं ज्ञेयोऽवकृष्टानां जातीनां वृत्तसम्भवः
अत ऊर्ध्वं प्रवक्ष्यामि द्रुतानामपि लक्षणम् १५८
मुखे तु दोधकं कृत्वा शेषं ह्रस्वैस्तु योजयेत्
युग्ममोजं विमिश्रं च तथैव लघुसञ्चयः १५९
जगत्यादिर्भवेत् सा तु तथाऽतिघृतिनैधना
तथाभूता च च्छन्दोभिर्नानावृत्तसमुद्भवा १६०
अष्टावादो यस्याः सान्त्यं स्यान्नवमं
दीर्घाणि स्थाप्ये शिष्टे च द्वे लघुनी
वृत्तं ह्येतज्ज्ञेयं तज्ज्ञैर्वृत्तविधौ
गीते ह्येवं नित्यं विक्रान्ता जगती १६१
यथा
एसो मेहो नाणद्दंतो धूमणिहो

विज्जुज्जुत्तो धाराएहिं भूमिदलम्
जावाबद्धो भीमुव्विग्गो हत्थिणिहो
विरणाकत्र्याविज्झो पीणाअन्तो णादिगअो १६२
अष्टावादौ दीर्घाणि स्युस्त्वतिजगती
अन्त्यं दीर्घं सा विज्ञेया मदनवती १६३
यथा
एसो मेहो णाणद्धंतो सबइणिहो
सद्दारन्तो विज्जुज्जोआ भमदि दुदम् १६४
पञ्च त्वादै यत्र हि गुर्वष्टमनवमम्
अन्त्यं दीर्घं सा खलु नाम्ना विमलगतिः
यथा
एसो अंसं अंसुसहस्सो पवणसखो
जाळाळोळो धूमसमिद्धो भमदि वणे ॥
आद्यचतुर्थे पञ्चमषष्ठे नवदशमे
पादविभक्तौ यत्र तु दीर्घ निधनकृते ।
तत्र तु बोध्या पञ्चदशाख्ये भुवि हि सदा
भूतलतन्वी वृत्तविधानेत्यभिविहिता १६५
यथा
पादपसंडं कम्प प्रमाणो पटुरिणदो
सेलतडेसुं पक्खलमाणो विसमवदि
रेणुसमूहं उद्धअमाणो रुणकविलो
वाअदि वादो चराडपवाही गगणवले १६६
आद्यचतुर्थकसप्तममन्त्यं दशमपरे
यत्त गुरूरायथ सा सुकुमारेत्यभिगदिता १६७
यथा
मेहसमूहणिबद्धविदाणं जलमतिदम्

सौइ इंदधणुञ्जबमज्झं गगणदलम्  १६८
यदि खलु पञ्चममष्टममन्त्यं दशमपरे
चरणगतानि गुरूणि तु माला भवति तदा  १६९
यथा
असणिरवाहदपादवकूडो धरणिधरो
पगलिअकंदरनिज्झरसानुरवो मुहुलो
विवहविहंगमसेविअकुंजो जहजलदो
परहुअचंपअगीअसणाहो हसदि विअ  १७०
तृतीयं च चतुर्थं च सप्तमं चाष्टमं तथा
नवमं द्वादशं चैव नैधनं सत्रयोदशम्  १७१
यत्र दीर्घाणि पादे तु ध्रु तिच्छन्दःसमाश्रये
सा ज्ञेया गीतकविधौ ध्रुवा स्खलितविक्रमा  १७२
दिवसं सूरसणाहं खे विअ चन्दो कुमुदवणे
उदिदो दीसदि एसो दप्पेणबिम्बाकिदिसादिसी
गहणे मेहविमुक्खे सोम्मसहाओ रतिसुहगो
वहलं विक्खिरमाणौ सारदो जोह्णं पजति दुदम्  १७३
पञ्चमं ह्यष्टमं यत्र त्रयोदशमथापि च
गुरूण्यष्टादशं चैव द्रुता वै चपला तु सा  १७४
यथा
एवणविघुणिणदपङ्कजकुसुमं सरसि जळं
कमलिणिवत्तपसाहिदसुभहं फलिहणिहं
वलदतरंतविदाहिदकुसुमं चलितगद-
क्खभिदविहङ्गविकम्पिदमुहलं हसदि विअ  १७५
पादे पञ्चममन्त्ये च दीर्घ द्वादशमेव च
यदाऽतिधृत्यां सा ज्ञेया चपला मुखसंहिता  १७६
यथा

पिअसहि आइअगअणदले चपलतरमुही
पविचरदे मदसुरभिमुही सुरवरयुवदी १७७
एता ह्यष्टौ परित्याज्या ध्रुवाणां मूलजातयः
आभ्यौ विनिस्सृताश्चान्या युग्मौजां विषमाः पराः १७८
एतास्तु जातयो ज्ञेया द्रुतानां वृत्तसंश्रयाः
देवानां पार्थिवानां च ह्यौपम्यगुणसंश्रयाः १७९
सप्तदशद्वादशकैरेकादशपञ्चमाष्टमतृतीयैः
गुरुभिर्यस्याः पादः ता ज्ञेयाऽऽद्विप्तिका नाम १८०
गुर्वादिरथलघ्वादिर्युग्मौजावथवेतरा
एतद्द्रुतगता या तु विज्ञेया सा ध्रुवा द्रुता १८१
आदौ द्वे गुरु निधने त्रीणि यस्याः पादेष्वथ चतुर्गुरूणियस्या स्युः
ज्ञेया वृत्ते खलु बृहतीसंस्था नाम्ना सा कथितलता ॥
यथा
एसो मेहो सिहरिनिहो नीलो धारापातैरतिभअगो भूमिम्
आपूरयन् पटुतरसन्नादो तोयापूर्णो गगनतल आभाति ॥
आद्ये ह्यथ निधने त्रीणि पादेऽथ यदि गुरूणि स्युः
ज्ञेया खलु बृहती नित्यं नाम्ना कनकलताऽऽद्विप्तिका १८२
यथा
एसो गगणदळे मेहो
भीमो भअजणणो दिड्ढो
भूमिं नवजलधाराहिं
सिञ्चन्तो भुवनतलं जादि १८३
भूमिं नवजलधाराभिः सिञ्चन् भुवनतलं याति ॥
यदि खलु पञ्चममन्त्ये चरणविधौ च गुरूणि भवन्ति तु
सा शशिलेखा भुवि बहती प्रथिता सा १८४
यथा

गिरिवरधा खुभिदमहरागवसहस्सपणादम्
पटुपवणेन विधूदं भमदि बलाहअजूहम्  १८५
यदि तु खलु षष्ठमन्त्यं गुरु भवति पादयोगे
इति विगदितादिवृत्ते सततमविचालिता सा  १८६
यथा
शशिकिरणलम्बहारा उडुगणकदावदंसा
गहगणकदङ्गसोहा जुवदि विअ भादि राई  १८७
यदि खलु चरणविधौ लघुवसुगणकमिदम्
भवति हि खलु बृहती मणिगुणनिकरकृता  १८८
यथा
ऋदु गणकुसुमवदी गहगणकिदतिळका
रजनि करमभिमुखी च यदि विअ असु णिसा  १८९
चत्वार्यादौ गुरु निधनं ह्रस्वानि स्युर्यदि च तथा
नाम्ना ज्ञेया जगति हि सा सिंहाक्रान्ता खलु बृहती  १९०
यथा
आकम्पन्तो गगनदळं विक्खेवन्तो घरणिदळम्
विज्जुज्जोदा अवविहवो एसो मेही पविचरिदो  १९१
बृहत्या जातयो ह्येता विज्ञेया वै प्रवेशजाः
अत ऊर्ध्वं प्रवक्ष्यामि पङ्क्तिजातिविकल्पनम्  १९२
आद्यचतुर्थे परनिधने यत्र गुरूणि प्रतिचरणम्
गीतविधाने भवति हि सा पङ्क्तिकृता वै सुरदयिता  १९३
यथा
पङ्कअसराडे विमळजले सारससंघे समणुगदो
कुन्दणिकासो ससिधवळो हंसजुवाणो परिभमिदो  १९४
दीर्घाणि ह्यथ निधनगतं त्रीणि स्युर्यदि चरणविधौ
सा ज्ञेया कुसुमसमुदिता पङ्क्तिश्चेदपि च कुमुदिनी  १९५

यथा
वाजन्तो कुमुमसमुदितो वादन्तो कुसुमसुरहिणो
सोसंतो पिग्ररहितजणं संपत्तो ग्रसु णवभरदो १९६
सप्तममाद्यचतुर्थयुतं यत्र हि नैधनमेव गुरु
पादविधौ यदि पङ्क्तिकृता सा कथिता खलु दोधकवत् १९७
यथा
एस समुरणग्रमच्चरके मेहरवं सुणिऊण गग्रो
रोसवसेण समुज्ञळिदो हिंडति काणणए कुविदो १९८
त्रीण्यादौ तु गुरुणि यदा स्युः षष्ठं चान्त्यमुपान्त्यतमं च
सा ज्ञेया खलु पादविधाने पङ्क्तिः सा तु कृतोद्धतनाम्ना १९९
यथा
ग्रब्भं ग्रम्बुधरेहि पिणद्धं विज्ञुज्ञोग्रखणंतरदीवम्
वादाघणिणदकंपिददन्तं उप्पादेदिव हत्थिसमूहम् २००
ग्राद्यचतुर्थे नैधनके न पञ्चषष्ठे यत्र तु दीर्घे
वृत्तसमुत्था सङ्कथिता सा पङ्क्तिरथैषा गीतकबन्धे २०१
यथा मेहसमूहं पीणबळाकं विज्ञूपळिकं पेक्खिग्र एसो
उद्दितरोसो भीमणिणादो धावदि हत्थी रुक्खवणम्मि २०२
यदि खलु पञ्चममन्त्यं चरणविधावपि दीर्घं स्यात्
भवति तथाष्टममन्त्ये विपुलभुजा भुवि सा ज्ञेया २०३
यथा
जलहरणादसमुव्विग्गो पगळितगण्ड्डुमहाणादो
वणगहणं कुविदो हत्थी सरभसगव्विदकं याति २०४
एतास्तु जातयः प्रोक्ताः पङ्क्त्यामेव समासतः
ग्रतःपरं प्रवक्ष्यामि त्रिष्टुब्जातिविकल्पनम् २०५
ग्रादाविह यदि खलु गुरुणी नित्यं निधनमपि च परतः
वृत्ते कविभिरपि निगदिता त्रिष्टुभ् चपलगतिरिह सदा २०६

यथा
एदे खिदिघरवरसदिसा भीमा पडुपहसमरवा
मीळासिदखगकिदरसणा मेहा णहदळमभिपडिवा २०७
यदि खलु मध्ये त्वथ गुरुणी पुनरपि चान्त्यं गुरु चरणे
भवति हि नित्यं रुचिरमुखी कमलदलाक्षीति हि कषिता २०८
यथा
परिधुणमाणो किरणपडं अभिरुहमाणो उदअगिरिम्
उडुगणबन्धू कुसुदसहो उदयति चन्दो गगनदले २०९
यदि खलु पञ्चमकाष्टमके पुनरपि चान्त्यमकं तु गुरु
चरणविधाविह वृत्तविधौ भवति हि सा द्रुतपादगतिः २१०
यथा
गगनतलंगणहिंडणओ किरणसहस्सविहूसिदओ
विहुणिअमेहपडं तमसू विसइ ससी गअणे विदुअम् २११
यदि खलु षष्ठं गुरुयुगलं निधनगतं चाप्यथ गुरुकम्
भवति हि सैवं चरणविधौ मुखचपला त्रिष्टुभिरचिता ॥
यथा
कुसुमसुअन्धी सुअपवणो विचरदि रम्मे णलिणिमने
तरुवरळासे पमदवणे वहुकुसुमे स्सिरणवसरदे ॥
तृतीयमन्त्यं चतुर्थं च पञ्चमं षष्ठमेव च
गुरुणी त्रैष्टुभे पादे यत्र सा विमला यथा २१२
यथा
कुसुमाकिरणे णिम्मळसळिळे णळिणीसंडे छप्पदमुहळे
सवहूमज्झे सारसमुदिते समदो हत्थी सोमविचरिदो २१३
चतुर्थं पञ्चमं पूर्वमन्त्योपात्ये तथैव च
गुरूणि त्रैष्टुभे पादे यत्र सा रुचिरा यथा २१४
मेहविदाणं अवघुणमाणो कम्पअमाणो सगअवणाइम्

तोअसमूहं अवकिरमाणो वाअदि वादो कुविद इवासू २१५
यदि खलु चरणे तु सप्तमं पुनरपि नवमं सनिधनम्
गुरु तदपरवक्त्रमुच्यते नियतमिति निदर्शनं यथा २१६
गिरितडविवरे विघुणिणदो असणिघनरवेण कम्पअम्
अभिपददि दुदं महीदळं पटुतरणिणादो महारवो २१७
त्रिष्टुभो जातयो ह्येता जगत्यास्तु निबोधत
अष्टमं नैधनं चैव गुरूणि चरणे यदि
वृत्ते तु जगती सा तु ज्ञेया कमललोचना २१८
यथा
दिअगणमुनिगणविवड्ढिअतेओ
पविततकिरणसहस्सपिणद्धो
विधुणिअतिमिरपडं जगदीवो
उदयति गगणदळे असु सूरो २१९
यदि खलु लघुगण इह निहितं
पदि यदि गुरु निधनगतम्
भवति हि खलु गतिरतिचपला
त्वरितगतिरधिकमतिजगती २२०
यथा
विधुणिअ जळधरमसिदपडं
दिअगणमुनिवरपरिपडिदो
उदअगिरिसिहरतटमुकुटे
विचरदि गगणतळमसु रवि २२१
यदि खलु पञ्चमनिधनगते द्वे चरणविधौ भवति हि गुरुणी तु
अतिजगती भुवि कथितगुणा सा मदकलितेव निगदितनामा २२२
यथा
गगनतलंगणमभिरुहमाणो रजतमहागिरिसिहररूवो

रजतमश्रो विश्र पिश्रकळसोसू पविचरिदो विश्रणिखि चन्दो २२३
एतास्तु जातयो ज्ञेयाः प्रावेशिक्यो द्रुतास्तथा
समवृत्तपदानां तु वर्धमानं निबोधत २२४
एतासां लक्षणं पूर्वं सर्वमुक्तं विधानतः
प्रतिष्ठादि यथाच्छन्दः सम्यक् पदविभागतः २२५
यथा प्रतिष्ठा
मेहरवं णवसरदे
णिसमिश्र कुद्धो भवइ गश्रवरो २२६
सुप्रतिष्ठा
विज्जुकसाहि श्रभिहतं व
रुददिव गगश्रं पसमिश्रगहतारम् २२७
गायत्री
मेघरवधातुकरनङ्गगुहचन्दश्रं सकरंरुददि किश्र णहदळम् २२८
उष्णिक्
पुल्लिश्रतरुसराडे सुरभिपयणहदे
विश्ररदि पमदवणे हंसो ससश्ररिपरिवुदो २२९
वर्धमानं मयैवं तु त्र्यश्राणामपि कीर्तितम्
पुनश्च चतुरश्राणामेवमेवं निबोधत २३०
श्रनुष्टुप्
ताराबन्धवसणाहो विक्खिरमाणो मेहपडम्
किरणसहस्सविहूसिदी उदयदि एसो रश्रणिश्ररो २३१
बृहती
एसो सुमेरुवणतम्मि दिश्र देवसिद्धपरिगीदो
सुरहिसुश्रंघवणचारी पविचरदिवि णहंगणदूतवातो २३२
पङ्क्तिः
पादपसराडं कम्पश्रमाणो सुरहिसुश्रन्धसुवासिदश्रो

उपवणतरुगणलासगओ विअरति वरतणु वणपवणो २३३
त्रिष्टुप्
कुमुदवनस्स विहूसणओ विघुणिअतिमिरपडं गगणे
उदअगिरिसिहरमहिरुहन्तो रअणिकरो उदयदि विमळकरो २३४
जगती
दिअवरमुनिगणसंवुदओ तविअसुवराणपिराडसमदेहओ
गगणदलंगणमभिरुहमाणो विअरदि एस दिवसकरो २३५
एतास्तु जातयो ज्ञेयाश्चतुरश्रविवर्धिताः
अत ऊर्ध्वं प्रवक्ष्यामि गणमात्राविकल्पनम् २३६
त्र्यश्रायां तुगणाः पञ्च सन्निपातो विधीयते
अष्टो च चतुरश्रायाः सन्निपातो भवेत्तथा २३७
द्वौ पादौ सन्निपातश्च ध्रुवाणां परिकीर्तिताः
द्रुतं च शीर्षकं चैव हित्वान्यानि भवन्ति वै २३८
अक्षरपिराडस्त्र्यश्रे पञ्चादिर्नवपरश्च विज्ञेयः
अष्टादिश्चतुरश्रे त्रयौदशपरस्तु विज्ञेयः २३९
सर्वगुरुश्चाष्टादिस्त्रयोदशपरश्च सर्वलघुः
एष त्र्यक्षरपिराडो विज्ञेयो वै ध्रुवाविधानज्ञैः २४०
गणमात्रांशविकल्पं व्याख्यास्यामि द्रुतायाश्च
अर्धषष्ठगणैः पादैः सन्निपातो द्रुतास्वघ २४१
मात्रा द्वाविंशतिश्चैव गुरुलघ्वक्षरान्विताः
शीर्षकाणामनियमो भवेत् पादविधानतः २४२
नानावृत्तसमुत्पन्नं कुर्याद्धि शीर्षकं बुधः
गुर्वादिरथलघ्वादिर्युग्मः सर्वलघुस्तथा २४३
चतुर्मात्रा गणो ज्ञेयः पूर्वच्छन्दोविकल्पितः
अर्धाष्टवगणाः पादाः शीर्षकस्य भवन्ति वै २४४
चतुर्मात्राश्च विज्ञेया युग्मौजाक्षरकैः पदैः

शीर्षकस्यैकविंशत्या षड्विंशतिपरस्तथा २४५
अक्षराणां भवेत् पिण्डः पादे ह्येकत्र निश्चयात्
युग्मा ओजा मिश्रा वादौ कार्या गणास्तु चत्वारः
नियतं शीर्षविधाने पश्चाल्लघुसंचयः नार्यः २४६
त्रीणि गणा यस्य मुखे त्रीण्येव हि यस्य चावसानानि
मध्ये चेद् गुरुणी द्वे तच्चपलं शीर्षकं भवति २४७
पूर्वार्धेऽथ चतुर्ह्रस्वा मिश्रा गणास्तु चत्वारः
पादे भवन्ति नियतं पश्चाल्लघुसंचयः शेषः २४८
एकद्विकलं त्रिकला चतुष्कलाः षट्कलास्तथोष्टकला
कार्या ध्रुवाविधाने प्रासादिक्यन्तराक्षेपैः २४९
त्र्यश्रे विरामस्त्रिकलश्चतुरश्रे चतुष्कलः
प्रावेशिक्या ध्रुवायास्तु नैष्क्रामिक्यास्तथैव च २५०
विरामो द्विकलोऽप्यन्तमन्तरायाः समासतः
पादान्ते द्विविरामस्तु क्षिप्तायाश्च प्रकीर्तितः
स्थितायाश्च तथा ह्यर्थे प्रासादिक्यास्तथैव च २५१
कलाकलार्धयोगेन गुरुलघ्वक्षरान्विताः
त्रयो ध्रुवाणां विज्ञेयाः संयोगा वृत्तसंश्रयाः
सर्वदीर्घः सर्वलघुर्गुरुह्रस्वाक्षरस्तथा २५२
गुरुप्राया स्थिता कार्या लघुप्राया द्रुता तथा
गुरुलघ्वक्षरप्राया प्रासादिक्यन्तरा तथा २५३
एवं ध्रुवाणां कर्तव्या जातयो वृत्तसम्भवाः
अत ऊर्ध्वं प्रवक्ष्यामि शीर्षकाणां तु लक्षणम् २५४
आद्यमन्त्यं तृतीयं च पञ्चमं सप्तमाष्टमे
गुरूणि यस्याः पादे तु सा श्येनो तु कृतौ यथा २५५
यथा
सागरं समुधुणंतो रप इव लघुगदिरभिभवदि

पव्वदा समाहणंतो तरुसु च जणग्रदि भयमतुलम्
रेणुजालमुक्खिवन्तो दिवसकरकिरणो
बोधग्रं पजासु कामं विखरदि वरतनु सुहपवणो २५६
प्रकृत्यां पञ्चमान्त्ये तु ह्यष्टमैकादशे गुरू
द्वादशं चेति विज्ञेयं नामतश्चपला यथा २५७
मुनिगणमराडविबन्धिदग्रोजो विघुणिग्र तिमिरपडम्
कमलवणाइं विबोधिग्रमाणो गहगणपरिगणदो
भुजगसहस्सविबन्धिदपासो वितवितकणकवपू
उदग्रदि संपदि राविदलोग्रो वरतणु दिवसकरो २५८
पञ्च त्वादौ यत्र तु दीर्घं नवममपि च गुरुसमयकृतं
दीर्घं चान्त्यं चाष्टममन्यल्लघु विरचितमिह चरणविधौ
वृत्ते ज्ञेया जगतिरपीयं बहुविधनिचयचितविहिते
क्रौञ्चं नाम्ना छन्दसि चोक्ता द्विजगणमुनिगणपठिता २५९
यथा
एसो चन्दो णिम्मलजोह्ना विधुणिग्र घणमसिदपटणिहं
लोकानन्दो लोकपदीवो उडुगणगहप्पणसमणुगदो
वासादाणं कारश्रमाणो सितपडणिवसनमिव विपुलम्
लोकालोकं रञ्जग्रमाणो विचरदि वरतणु गगणमसू २६०
ग्राद्यचतुर्थं पञ्चमषष्ठं नवममथ च निधनगतं
ये च ततोऽन्ये येषु लघुत्वं यदि भवति च चरणमतिविधौ
सा निकृतिः स्यात्पुष्पविवृद्धा द्विजगणमुनिगणपरिपठिता
नामविकल्पाद्वृत्तकृता वैश्वशतलुलितमिह नभसि नदी २६१
पुप्फविदाणं उद्धुणमाणो रव इव पटुतरगतिरभिपतति
पक्खळमाणो मेहतडेसुं तरुसु च गणयदि भयमतुळम्
उम्मिसहस्सं उद्धुणमाणो सरसखुभिदसळिळकळकळो
भीमणिणादो चराडपवाही विग्ररदि वरतणु सुहपवणो २६२

अन्त्यं च पञ्चमं षष्ठं सप्तमं दशमं परम्
वृत्ते सङ्कृतिसंज्ञे तु सा भ्रान्ता नामतो यथा  २६३
किरणसहस्सं विक्खिरमाणो फलिहमणिरुचिरधवळणिहो
कुमुदवणाइं वोहअमाणो कुमुददळनिअरसदिसवपू
गहगणबन्धू लोकपदीवो उडुगणगहणसमणुगदो
उदयति चन्दो रोहिणिकन्तो णवसरदमुदितसुखजणणो  २६४
आद्यमन्त्यं चतुर्थं च सप्तमं दशमं तथा
गुरूण्येकादशं चैव संकृतौ वृत्तसंश्रयम्  २६५
सघून्यन्यानि शेषाणि पादे यस्मिन् भवन्ति तु
तज्ज्ञेयं शीर्षकं तज्ज्ञैः स्खलितं नामतो यथा  २६६
वातसमुद्धतवीचितरङ्गो स्फटिकनिकरसदृशजले
पङ्कजरेणुपरागपिशङ्गे लुलितकमलकुवलयदले
मोटितकल्पतरूत्थितशाखे सुरयुवतिनयनसमनुसृतः
क्रीडति दानसुगन्धिमहोच्चैः सुरगज इह सुरसरिः  २६७
अष्टावादौ दीर्घाणि स्युर्यदि च पुनरपि हि भवति बहु लघुगणो
भूयश्चान्ते दीर्घं त्वेकं यदि भवति पदि पदि पुनरपि च तथा
मत्ताक्रीडा विद्युन्मालेत्यपि च विविधकविभिरपि बहुभिरुदिता
नाम्ना छन्दोवृत्ते देवीत्यभिकृतिगतिविधिषु च नियतमभिहिता  २६८
यथा
एसो मेहो सेलाभोयो असणिमुरजपटुपटहसमरओ
णाणाविज्जुज्जोआलोओ घणपडळनिचयजळधरसमणुगदो
णाणाषरणो तोउग्गारी चरितदवळखगविचरितकुसुमयमो
संजा अन्तो ळोअं याते गिरिरिव गिरिणिवह इव सुभसलिळळो
२६९
पञ्चमं द्वादशं चेवं दीर्घमन्त्यं त्रयोदशम्
उत्कृत्यां तु भवेत् पादे वृत्तं वेगवती यथा  २७०

गगणतलंगणमभिरुहमाणो उडुगणगहगणसमणुगदो
युवतिजणाणं सुरुचितरूवो सुखितदयितजणमदणकरो
किरणसहस्सविसुरचितवन्दो रजतगिरिसिहरसदिसवपू
उदग्रदि संपदि ग्रसु जगदीवो कुमुदवणरुचिरविमळकरो २७१
एता ह्यष्टौ बुधैर्ज्ञेयाः शीर्षकाणां तु जातयः
पुनर्नर्कुटकानां तु सम्प्रवक्ष्यामि लक्षणम् २७२
ग्रष्टौ नर्कुटकानां तु विज्ञेया जातयो बुधैः
दर्शनं लक्षणं त्वासां नामानि च निबोधत २७३
रथोत्तरं बुद्बुदकमुद्गतं वंशपत्रकम्
शिवाक्षरा हंसवती हंसास्यं तोटकं तथा २७४
प्रथमं च तृतीयं च सप्तमं नवमान्त्यके
गुरूणि त्रैष्टुभे यत्र नर्कुटं तद् रथोत्तरम् २७५
यथा
एसिका कमलगब्भगेहके
रेणुपिञ्जरितचारु गतिया
सारदे मदकलोपकूजिदा हिरडदे सरवरम्मि छप्पदी २७६
पञ्चमं सप्तमं चैव नैधनं च गुरूरायथ
पादे तु बृहतीसंस्थे यत्र बुद्बुद्यकं यथा २७७
यथा
तडिगुणबन्धणिद्धग्रो सिदखगपंतिसोहिदो
णहसि गजो समुग्गग्रो विचरदि एस मेहग्रो २७८
ग्रन्ये तु
सतृतीयपञ्चमनवमं त्रयोदशं षोडशं तथा
यत्र वै गुरु भवतीह शेषलघुसंयुतं
वृत्तौ स्याच्च संश्रितं प्रवदन्ति बुद्बुदकमेव नर्कुटं तद्धि नामतः
चिरकालमभिसम्भरन्तपिग्रं गाणत्त मुहिदं ण रोद्धम्

मुदिमाणइतडिदिदो काणणे घणे परिखेदिदे बहुविधे हि अणुणो
वासराहरो
तरुसन्धुवज्जुहिअए संचसिओ भीदभीदओ
असु कोधरं विसरइ पासवा दवेच्छ दीणदीणओ ॥
तृतीयं पञ्चमं चैव नवमैकादशे तथा
द्वादशं षोडशं चैव चतुर्दशमथापि च २७९
अस्मिन्नष्टिकृते पादे गुरूरायेतानि सर्वशः
छन्दोज्ञेर्ज्ञेयमेतत्तु नर्कुटं ह्युद्गतं यथा २८०
वणखराडं जहदि कोसिको वायसाहदो
भयभीदओ अवदिपादपं दीणदीणओ
तरुकोटरं वसदि सम्पदं ळोळणेत्तओ
समभिद्वदो णिसिग्नरो अअं एदि सोहिदो २८१
अन्ये तु
प्रथमे यदा तु गुरु यत्र चान्तं
तृतीयकं यदि च द्वितीय --- ता गुरु
अथ षोडशाक्षरे कृते तु पादे
चतुर्थकं त्रिकमिहोद्धटम् ॥
नर्कुटं हि तदिति यत्तु चतुदशमनिधनगै-
र्भूषितमक्षरैर्गुरुकृतैः श्रवणसुखकरैः
तत्खलु वंशपत्रपतितं मुनिगणगदितं
नर्कुटकं वदन्ति नियमादतिधृतिरुचितम् २८२
यथा
चूदवणं पुफुळळतिळकं कुरवअसहिअं
चारुअसोअसाळकळिदं कुसुमसमुदिदम्
माधवकाणणं जुवदिआमदजणणं
हिराडति कोकिला फळरसासवमहुररवा २८३

तृतीयं पञ्चमं चैव नवमं नैधनं तथा
गुरूरयेतानि पादे तु यत्र तत्प्रमिताक्षरा २८४
यथा
कमळाग्ररेसु भमिरुण बुडं
भमरीमुहासवसुकक्खणश्रो
मधुभूसिदं सुरहि चूदवणं
परिहिरिडदो सुतणु छप्पदश्रो २८५
नवमान्त्यपञ्चमतृतीय-
गुरुलघुशेषमक्षरगतम्
भवति चरणं तु यस्य सततं
विविधं प्रमिताक्षरेति कथिता खलु सा
तृतीयपञ्चमान्त्यानि प्रथमं सचतुर्थकम्
षष्ठं च नैधनं चाथ गुरूणि ध्वजिनी यथा २८६
यथा
विलसन्तिश्र कमलसरडे पुप्फसुगन्धके कुसुमळुद्धा
तुरिश्रं पवीतमधुमता छप्पदिका कुळं समुपयाति २८७
दशमं सप्तमं यत्र चतुर्थकमथ षष्ठम्
तृतीयं निधनं गुरु कथितं नर्कुटं जगतीगतम्
दिश्रहंसा वसन्ते सळिळासए
कुसुमासादळुद्धा कमळाग्ररे
णळिणीपत्तमज्झे परिहिरिडदा
गमणाश्रासखिरणा भमरावली ॥
यदि चान्त्यतृतीयकषष्ठगतैर्नवमेन च भूषितमेवम्
गुरुभिः सततं त्विह तद् घटितं तोटकमेव हि नर्कुटकम् २८८
यथा
रमणीसहिदो रश्ररणीविरमे

गगणंगणए खगकोसिश्रश्रो
श्रसए हि विघट्टिदश्रो
परिमराटदि कोटरश्रं सुरिदम्  २८९
दशमं सप्तमं यत्र चतुर्थकमथ षष्ठम्
तृतीयं निधनं गुरु कथितं नर्कुटं जगतीगतम्  २९०
दिश्रहंसा वसन्ते सलिलासए
कुसुमासादलुद्धा कमलाश्ररे
णळिणीपत्तमज्झे परिहिरिडदा
गमणाश्रासखिराणा भमरावली  २९१
एतास्तु जातयः प्रोक्ता नर्कुटानां समासतः
पुनश्च खञ्जकानां च सम्प्रवक्ष्यामि लक्षणम्  २९२
श्रामोदं कञ्जनो पूर्वं भावनी मत्तचेष्टितम्
एतास्त्रिस्त्रः समाख्याताः खञ्जकानां तु जातयः  २९३
श्राद्यचतुर्थषष्ठदशमं सषोडशमथान्त्यमेव च
यदि द्वादशमेव यत्र चरणेषु सप्तदशकात्परं च विहितम्  २९४
छन्दसि सततं चेत्तथा गुरु चेदथाकृतिगतं भवेत्तु सततम्
भद्रकमेव खञ्जकमिदं पुनश्च कथितं प्रमोदकमिदम्  २९५
यथा
माहवमाससोहितसमग्गके उववणम्मि फुल्लकुसुमे
णिच्चमतजुत्तबहुपक्खिसंघपरिबुद्धघुट्ठणादमुहले
फळिळदचूदयुगडसहश्रारमंजरिविलोलनादपवणे
हिराडदि छप्पदानुगदमग्गश्रो परहुदो विड्ढदश्रणो  २९६
श्राद्यपञ्चमान्त्यसप्तमं स्यात्तृतीयमेव दीर्घकम्
यस्य पादयोगतो हि सा भाविनीति खञ्जकं तथा  २९७
यथा
जातिफुल्लपाणमत्तश्रो चूदरेखगुरिठदग्गश्रो

फुल्लपङ्कउवसोहिदो छप्पश्रो मुदं पधाविदो २९८
यदा तृतीयसप्तमं तदाद्यपञ्चमं लघु
तदा तु मत्तचेष्टितं वदन्ति खञ्जकं बुधाः २९९
यथा
पफुळ्ळपुप्पपादवं विहङ्गमोपसोहिदम्
वणं पगीदछप्पदं उवेइ एस कोकिला ३००
नर्कुटानां तु खञ्जानामेता वै मूलजातयः
श्राम्यो विनिस्सृताश्चान्या युग्मौजा विषमास्तथा ३०१
चतुष्षष्टिध्रुवाणां तु विज्ञेया मूलजातयः
समवृत्ताक्षरकृता श्रतोऽन्या विषमा मताः ३०२
समवृत्तास्तु जायन्ते ध्रुवास्तिस्रस्तु नित्यशः
युग्मौजाश्चापि मिश्राश्च विषमाश्च समा मताः ३०३
सुप्रतिष्ठादिकानि स्युर्बृहत्यादीनि यानि तु
छन्दांसि तेषां मानेन त्र्यश्रा कार्या ध्रुवा बुधैः ॥
उष्णिगादीनि यानि स्युः शक्वर्यन्तानि चैव हि
छन्दांसि तेषां मानेन चतुरश्राध्रुवा मता ॥
त्रिष्टुबादीनि यानि स्युरुत्कृत्यन्तानि चैव हि
छन्दांसि तेषां मानेन चतुरश्रा द्विपादिका ॥
इत्यन्ये
तत्रार्धविषमाणां तु षट्पञ्चाशे शते स्मृते
एतदेव परीमाणं पिषमाणां प्रकीर्तितम् ३०४
सामान्यौजाश्च जायन्ते ध्रुवा विषमपादिकाः
स्वेन नाम्ना तु नामानि मासां कार्याणि वृत्ततः ३०५
एवं तु जातयः प्रोक्ता नानावृत्तसमुद्भवाः
श्रत ऊर्ध्वं प्रवक्ष्यामि विकल्पान् पञ्चहेतुकान् ३०६
जातिः स्थानं प्रकारश्च प्रमाणं नाम चैव च

ज्ञेयो ध्रुवाणां गानज्ञैर्विकल्पः पञ्चहेतुकः ३०७
वृत्ताक्षरप्रमाणं हि जातिरित्यभिसंज्ञितासमार्धविषमाभिश्च प्रकारः परिकीर्तितः ३०८
षट्कलाष्टकले चैव प्रमाणे द्विविधे स्मृते
यथागोत्रकुलाचारैर्नृणां नामाभिधीयते ३०९
एवं नामाश्रयोपेतं ध्रुवाणामपि चेष्यते
प्रवेशाक्षेपनिष्क्रामप्रासादिकमथान्तरम्
गानं पञ्चविधं विद्याद् ध्रुवायोगसमन्वितम् ३१०
नानारसार्थयुक्ता नृणां या गीयते प्रवेशे तु
प्रावेशिकी तु नाम्ना विज्ञेया सा ध्रुवा तज्ज्ञैः ३११
अङ्कान्ते निष्क्रमणे पात्राणां गीयते प्रयोगेषु
निष्क्रामोपगतगुणां विद्यान्नैष्क्रामिकीं तां तु ३१२
क्रममुल्लङ्घ्य विधिज्ञैः क्रियते या द्रुतलयेन नाट्यविधौ
आक्षेपिकी ध्रुवासौ द्रुता स्थिता वाऽपि विज्ञेया ३१३
या च रसान्तरमुपगतमाक्षेपवशात्कृतं प्रसादयति
रागप्रसादजननीं विद्यात्प्रासादिकीं तां तु ३१४
विषण्णे मूर्च्छिते भ्रान्ते वस्त्राभरणसंयमे
दोषप्रच्छादना या च गीयते सान्तरा ध्रुवा ३१५
ध्रुवाणां चैव सर्वासां रसभावसमन्वितम्
यथास्थानं प्रवक्ष्यामि यत्र गेयं प्रयत्नतः ३१६
द्विविधं तु स्मृतं स्थानं परसंस्थात्मसंश्रयम्
यत्त्वाक्षेपसमायुक्तं तच्च मे सन्निबोधत ३१७
बद्धे निरुद्धे पतिते व्याधिते मूर्च्छिते मृते
अवकृष्टा ध्रुवा कार्या भावे च करुणाश्रये ३१८
औत्सुक्ये ह्यवहित्थे च चिन्तायां परिदेविते
श्रमे दीने विषादे च स्थिता कार्या ध्रुवा बुधैः

एतेष्वेव तु भावेषु करुणावेदितेषु च
ध्रुवा द्रुता च कर्तव्या करुणे भावसंश्रया ३२०
यत्र प्रत्यक्षजं दुःखं मृताभिहतदर्शनम्
स्थिता तत्र हि कर्तव्यः करुणै तु रसे बुधैः ३२१
उत्पातदर्शने चैव प्रहर्षेऽद्भुतदर्शने
विषादे च प्रसादे च रोषे सत्वस्य दर्शने ३२२
वीररौद्रभयाद्येषु प्रत्यक्षावेदितेषु च
ध्रुवा द्रुतलया कार्या ह्यावेगे सम्भ्रमे तथा ३२३
प्रसादेयावने चैव तथाऽनुस्मरणे पुनः
तथाऽतिशयवाक्येऽषु तथा च नयसङ्गमे ३२४
हर्षेऽथ प्रार्थने चैव शुङ्गाराद्भुतदर्शने
ध्रुवा प्रासादिकी कार्या तज्ज्ञैर्मध्यलयाश्रया ३२५
शरीरव्यसने रोषे पुनःसन्धानकर्मणि
सानुबन्धा बुधैः कार्या गीतज्ञैरन्तरा ध्रुवा ३२६
अध्रुवास्तु प्रवेशाः स्युर्गायतो रुदतस्तथा
सम्भ्रमे प्रेषणे चैव ह्युत्पाते विस्मये तथा ३२७
एवमर्थविधिं ज्ञात्वा देशकालमृतुं तथा
प्रकृतिं भावलिङ्गं तु ततो योज्या ध्रुवा बुधैः ३२८
शीर्षका चोद्धता चैव ह्यनुबन्धा विलम्बिता
अड्डिता चापकृष्टा च षट्प्रकारा ध्रुवा स्मृताः ३२९
शिरःस्थानीयमेतद्धि यस्मात्तस्मात्तु शीर्षिका
उद्धता तूद्धता यस्मात्तस्मात् ज्ञेया ध्रुवा बुधैः ३३०
यतिं लयं वाद्यगतिं पदं वर्णान् स्वराक्षरम्
अनुबध्नाति यत्रैवमनुबद्धा भवेत्तु सा ३३१
आक्रीडितप्रवृत्तो यश्चतुर्थलयकारकः
नाटयोपचारजनितः सोऽनुबन्धः प्रकीर्तितः ३३२

नाट्ये त्वरितसञ्चारा नाट्यधर्ममनुव्रता
सविलम्बितसञ्चारा भवेद्द्रुतविलम्बिता ३३३
अड्डिता तूत्कटगुणा शृङ्गाररससम्भवा
यस्मात्सा न प्रसन्ना च तस्मादेषाड्डिता स्मृता ३३४
अन्यभावेषु कृष्टश्च कृष्टाहेतुषु गीयते
यस्मात्कारुण्यसंयुक्ता ह्यवकृष्टा भवेत्ततः ३३५
या तु प्रावेशिकी दीप्ता सा कार्या तूद्धता नृणाम् ३३६
या स्थिता साऽवकृष्टा तु या द्रुता सा विलम्बिता
याऽन्त वा सानुबन्धा च प्रकारास्तु प्रवेशजाः ३३७
शीर्षका चोद्धता चैव देवपार्थिवयोर्भवेत्
दिव्यपार्थिववेश्यानां स्त्रीणां योज्या तथाड्डिता ३३८
मध्यमानां प्रवेशे तु ज्ञेया द्रुतविलम्बिता
नीचानां चैव कर्तव्ये नृणां ये खञ्जनर्कुटे ३३९
खञ्जं च नर्कुटं चैव स्थाने प्रासादिकी तु सा
कस्माल्ललितभावत्वाद्धास्यशृङ्गारयोर्यतः ३४०
कुर्यान्नीचे मृते चैव त्वनुबन्धं लयाश्रयम्
स्त्रीणां राजन्यवैश्यानामबकृष्टां तथैव च ३४१
सन्निपातास्तु चत्वारः प्रावेशिका भवन्ति हि
शेषा हि सन्निपातास्तु शीर्षिकाः षट्परा स्थिताः ३४२
स्थितं चाप्यड्डितं चैव नीचानां न हि कारयेत्
सर्वभावाश्रयगतैस्तेषां कार्यं तु नाटकम् ३४३
त्रयो भावा भवन्त्येषां हासशोकभयात्मकाः
एवं भावान् विदित्वा तु ध्रुवा कार्या प्रयोक्तृभिः ३४४
वस्तु प्रयोगं प्रकृतिं रसभावानृतुं वयः
देश कालमवस्थां तु ज्ञात्वा योज्या ध्रुवा बुधैः ३४५
वस्तुद्देशसमुत्थं तु पुनरारण्यसम्भवन्

प्रयोगश्चैष विज्ञेयो दिव्यमानुषसंश्रयः ३४६
उत्तमाधममध्या तु त्रिविधा प्रकृतिर्मता
रसभावौ तु पूर्वोक्तावृतुः कालकृतस्तथा ३४७
शिशुयौवनवृद्धत्वं वयश्चैव प्रकीर्तितम्
कद्द्यादिग्भागजनितो देशस्तु द्विविधो मतः ३४८
कालो रात्रिन्दिवकृतो यामकालविनिर्मितः
अवस्था चैव विज्ञेया सुखदुःखाथसम्भवा ३४९
स्थानान्येतानि तु बुधैर्नानावस्थानि नित्यशः
प्रयोगे सम्प्रयोज्यानि रसभावौ समीक्ष्य तु ३५०
यानि वाक्यैस्तु न ब्रूयास्तानि गीतैरुपाहरेत्
न तैरेव तु वाक्यार्थैरन्यैः प्रवकेवलाश्रयैः ३५१
ध्रुवाणामाश्रयाः कार्याः औपम्यगुणसम्भवाः
उत्तमाधममध्यानां नृणां स्त्रीणामथापि च ३५२
आदित्यसोमपवना देवपार्थिवयोर्मताः
दैत्यानां राक्षसानां च मेघपर्वतसागराः ३५३
सिद्धगन्धर्वयक्षाणां ग्रहोडुवृषभा मताः
तपःस्थितानां सर्वेषां सूर्याग्निपवना मताः ३५४
हव्यवाहस्तु विप्राणां ये चान्ये तपसि स्थिताः
एतेषामेव या नार्यस्तासामौपम्यसंश्रयाः ३५५
विद्युदुल्कार्करश्म्याद्या विद्यानामपि च स्मृताः
देवानां तु प्रयोज्या ये नृपाणामपि ते स्मृताः ३५६
नागसिंहवृषार्थाश्च नैते दिव्येषु कीर्तिताः
महिषारुरुसिंहाश्च क्रव्यादाः पशवश्च ये ३५७
हिंस्रसत्वेषु ते कार्या यक्षराक्षसजातिषु
उत्तमानां प्रयोक्तव्या नानारससमाश्रयाः ३५८
मत्तमातङ्गसहिता राजहंसाश्च योक्तृभिः

शिखिनः सारसाः क्रौञ्चाश्चक्राह्वाः कसुदाकराः
मध्यमानां प्रयोक्तव्या औपम्यगुणसंश्रयाः ३५९
कोकिलं षट्पदं ध्वाङ्क्षं कुररंकौशिकं वकम्
पारावतं सकादम्बमधमेषु प्रयोजयेत् ३६०
एवमेषां प्रयोक्तानां स्त्रियो यास्तु भवन्ति हि
उत्तमाधममध्यानां तासां चैव निबोधत ३६१
शर्वरी च सुधा ज्योत्स्ना नलिनी करिणी नदी
नृपस्त्रीणां भवन्त्येता औपम्यगुणसंश्रयाः ३६२
दीर्घिका कुररी वल्ली सारसी शिखिनी मृगी
मध्यमानां भवन्त्येता वेश्यास्त्रीणां च नित्यशः ३६३
षट्पदीं कुररीं ध्वाङ्क्षीं परपुष्टां च योजयेत्
अधमाः स्युर्ध्रुवा ह्येताः प्रयोक्तव्याः प्रयोक्तृभिः ३६४
गत्यर्थोपमिता याश्च चलनार्था भवन्ति हि
प्रावेशिक्या बुधैरेव नैष्क्राभिक्यास्तथैव च ३६५
प्रावेशिक्याश्रया यास्तु पूर्वाह्णार्धे तु ताः स्मृताः
नक्तन्दिवसमुत्थास्तु नैष्क्रामिक्याः स्वकालजाः ३६६
सौम्याः पूर्वाह्णकाले तु मध्याह्ने दीप्तिसंश्रयाः
अपराह्णे तथा मध्याः सन्ध्यायां करुणाश्रयाः
चलनार्था हि ये प्रोक्ता आक्षेपिक्या भवन्त्यपि ३६७
आक्षेपा एवमेव स्युर्द्रुतस्थितगतास्तथा
रोषामर्षादिसम्पूर्णाः लोकाद्भुतभयानकाः ३६८
यद्द्रव्यं वसुधासंस्थमृते दैवतमानुषान्
तत्सर्वमुपनेयं तु गानयुक्त्योपमाश्रयम् ३६९
स्थावरैः स्थावरं कुर्याद्गत्यर्थैश्चपलाश्रयम्
सुखदुःखकृतैर्भावैरौपम्यगुणसंश्रयात् ३७०
भूमिस्थ वाजिकुञ्जरमृगपशु शिविकाविमानानाम्

गतिविभ्रमं हि दृष्ट्वा कर्तव्या तु ध्रुवा तज्ज्ञैः  ३७१
रथपत्रवाजिवारणविमानशिबिकास्थपक्षियानेषु
द्रुतपदवर्णावर्णैः कर्तव्या तु ध्रुवा तज्ज्ञैः  ३७२
ओजस्कृता तु सा वै गुरुवर्णा वृषगजेन्द्रसिंहेषु
सारसवानरहंसे तथा मयूरे विधातव्या  ३७३
द्रुतगमने लघुवर्णा विलम्बितगतै च दीर्घवर्णकृता
एवंस्थितद्रुतानां ज्ञात्वा भावं ध्रुवा कार्या  ३७४
नास्ति किञ्चिद्वृत्तं तु पदं गानसमाश्रयम्
तस्माद्गीतिमभिप्रेक्ष्य तद्वृत्तं योजयेद्ध्रुवाम्  ३७५
तस्माद्वाहनगत्यर्थैर्ध्रुवा कार्याक्षरैस्तथा
अङ्गानां समता यत्र भाण्डवाद्ये करिष्यति  ३७६
यद्वृत्तौ वाहनगतौ ध्रुवापादौ विधीयते
तद्वृत्तं तु भवेद्वाद्यमङ्गवाद्यसमं तथा  ३७७
पूर्व गानं तसो वाद्यं ततो नृत्तं प्रयोजयेत्
गीतवाद्याङ्गसंयोगः प्रयोग इति संज्ञितः  ३७८
हृदयस्थस्तु यो भावः सोङ्गाभिनयनैरथ
निवृत्यङ्कुरसूचात्तु कार्यस्त्वभिनयान्वितः
तत्र प्रासादिकी योज्या प्रहर्षार्थगुणोद्भवा  ३७९
आकाशपुरुषो यत्र यत्र चाकाशभाषणम्
अन्वर्था तत्र कर्तव्या ध्रुवा ह्याभावसंश्रिता  ३८०
प्रासादिक्याश्रया चापि हीर्ष्याक्रोधाश्रयाऽपि वा
शृङ्गाररसमासाद्य ध्रुवाऽन्वर्था प्रयोगतः  ३८१
यानि प्रासादिकानि स्युः स्थानानि रससंश्रयात्
अन्वर्था तत्र कर्तव्या ध्रुवा प्रासादिकी तथा  ३८२
भाषां तु शौरसेनीं हि ध्रुवाणां सम्प्रयोजयेत्
यदाऽपि मागधी यत्र कर्तव्यं नर्कुटं तथा  ३८३

दिव्यानां संस्कृतं गानं प्रमाणैस्तु विधीयते
अर्धसंस्कृतमेवं तु मानुषाणां प्रयोजयेत्  ३८४
ये त्वौपम्यकृता दिव्या यदि तेषां प्रयोगतः
प्रवेशो नाटके तु स्याच्छृणु तेषां समाश्रयम्  ३८५
यस्त्वेषां सात्विको भावः कर्मसङ्कीर्तनं च यत्
तत्कार्यं गानयोगेऽपि प्रमाणगुणसंश्रयम्  ३८६
छन्दःप्रमाणसंयुक्तं दिव्यानां गानमिष्यते
पुण्याश्रयं च तत्कार्यं कर्मसङ्कीर्तनादपि  ३८७
माला वक्त्रं पुटं वृत्तं विश्लोका चूलिका तथा
उद्गताऽपरवक्त्रा च कर्तव्या वै प्रयोक्तृभिः  ३८८
विधानं छन्दसामेतत् मया पूर्वमुदाहृतम्
जयाशीर्वादयुक्तानि कार्याण्येतानि दैवते  ३८९
ऋग्गाथाः पाणिकाश्चैव द्रष्टव्यास्तु प्रमाणतः
सुश्रवश्चैव यस्मात्तु तस्माद्गीतं प्रयोजयेत्  ३९०
गान्धारमध्यमयुताः पञ्चमयुक्तास्तु जातयो यास्तु
ताभिः प्रमाणगानं कर्तव्यं दैवतोपेतम्  ३९१
प्रासादिकं स्थितं चैव नैष्क्रामं सप्रवेशनम्
प्रमाणमपि कर्तव्यं चतुःस्थानसमन्वितम्  ३९२
प्रायशः संस्कृतं योज्यमनुष्टुप्च्छन्दसा कृतम्
नानादैवतकार्येषु ह्यन्तरा या विना तथा  ३९३
वक्त्रं चापरवक्त्रं च माला चेति प्रवेशजम्
पुटं च चूलिका चैव नैष्क्रामिकमथेष्यते  ३९४
प्रासादिक्युद्गतावृत्तिस्थितं चानुष्टुभीष्यते
स्थानान्येतानि बोध्यानि प्रमाणस्य बुधैरथ  ३९५
यदनुष्टुप्कृतं गानं स्थितस्थानसमाश्रयम्
स्वप्नभ्रंशाश्रयकृतं चिन्सादुःखसमन्वितम्  ३९६

गुरुप्रायाक्षरकृतं करुणश्रुतिजातिकम्
प्रकृष्टवर्णबहुलं स्थितस्थानं तु तद्भवेत् ३९७
उत्पादनार्थं नृणां तु तथा विहरणेष्वपि
दिव्यान्वयं तु कर्तव्यं गानं पात्रसमाश्रयम् ३९८
मानुषेष्ववतीर्णेषु मर्त्यस्य स्मरणाश्रयम्
प्रायेण गानं कर्तव्यं दिव्यस्य स्मरणाश्रयम् ३९९
अस्यैव दुःखविषयं शोकचिन्ताविनाशजम्
प्रमाणगानं कर्तव्यं शोकावस्थान्तराश्रयम् ४००
ध्रुवाणां हि विधानस्य ह्याश्रयस्य विशेषतः
यथा प्रयोगः कर्तव्यस्तच्च मे सन्निबोधत ४०१
स्थापिते भाण्डविन्यासे त्रिसाम्नि परिकीर्तिते
आश्रावणाद्यं कर्तव्यं बहिर्गीतप्रयोगजम्
प्रयुज्य च बहिर्गीतं पूर्वरङ्गं प्रयोजयेत् ४०२
पूर्वरङ्गे प्रयुज्ये तु नाट्याचार्यसमाश्रये
ध्रुवा तत्र प्रयोक्तव्या प्रकृतीनां प्रवेशजा ४०३
गत्याश्रयेण नाट्यज्ञैः पादैरनुगतैस्तथा
परिक्रमेण रङ्गस्य गानेनार्थवशेन च ४०४
परिवर्ताः प्रयोक्तव्याः पादैरनुगतैरथ
ध्रुवा तत्र प्रयोक्तव्या देवताभिर्युता बुधैः ४०५
तत्र पाताः प्रयोक्तव्या एकविंशतिरेव च
त्र्यश्रा वा चतुरश्रा वा ध्रुवा नाट्ये प्रयोगतः ४०६
त्रिकलं पादपतनं त्र्यश्रायास्तु विधीयते
चतुष्कलं तु पतनं चतुरश्रागतं भवेत् ४०७
उत्तमे चतुरश्रा च त्र्यश्रा चैव तु मध्यमे
त्र्यश्रं नर्कुटकं चैव ह्यधमेषु प्रयोजयेत् ४०८
विधिः स्वस्थगतो ह्येष भवेच्चारणपातने

सम्भ्रमोत्पातरोषेषु कलार्धकलमिष्यते ४०९
त्रिकलद्विकलैककलाश्चतुष्कला यत्र पादविन्यासाः
तत्र च साम्यं कार्यं भाण्डेन समं च गानेन ४१०
न ह्येककला द्विकला ध्रुवाविरामा भवन्ति गानविधौ
तस्मान् साम्यं कार्यं भाण्डेन समं च गानेन ४११
ये पूर्वोक्ता भावाः स्थिताश्रया वा दताश्रया वापि
तेषां पातनिपातं ज्ञात्वा सम्यग्बुधैः कार्यम् ४१२
अपटाक्षेपकृता चेदात्ययिका हर्षरागशोकाद्याः
विच्छेदस्तत्र समः कार्यस्तज्ज्ञैः प्रवेशे तु ४१३
एवमेते बुधैर्ज्ञेयाः प्रयोगपरिवर्तकाः
अतः परं प्रवक्ष्यामि भाण्डग्रहविजल्पनम् ४१४
अभाण्डमेव गानस्य परिवर्तं प्रयोजयेत्
चतुर्थे परिवर्ते तु तस्य भाण्डग्रहो भवेत् ४१५
सन्निपातग्रहाः काश्चित्काश्चिद्वै तर्जनीग्रहाः
तथाऽऽकाशग्रहाः काश्चित् ध्रुवा गाने भवन्ति हि ४१६
ध्रुवायास्तु ग्रहो यस्मात्कलाकाललयान्वितः
स तु भाण्डेन योक्तव्यस्तज्ज्ञैर्गतिपरिक्रमे ४१७
शीर्षकोद्धतयोश्चैव प्रदेशिन्या ग्रहो भवेत्
विलम्बितास्थितायोगे सन्निपाते तृतीयके ४१८
नर्कुटस्याड्डितायां च प्रासादिक्यास्तथैव च
सन्निपातग्रहः कार्यो द्रुतायाश्चोच्चके ग्रहः ४१९
नैष्क्रामिक्यनुबन्धानां ग्रहे गानसमो भवेत्
नत्वसौ परिवर्तस्तु कार्यो गाने प्रयोक्तृभिः ४२०
नर्कुटस्यापि चत्वारो ग्रहाः कार्याः प्रयोक्तृभिः
सन्निपातश्च शम्या च तालश्चाकाशजस्तथा ४२१
सम्प्रमावेगहर्षेषु प्रवेशा ये भवन्ति हि

ग्रहो गानसमस्तत्र सोद्धात्यः सम्प्रकीर्तिताः ४२२
भूषणवासःपतने वैकल्ये विस्मृते परिश्रान्ते
दोषाच्छादनहेतोरुद्धात्यः सम्प्रयोज्यस्तु ४२३
एवं प्रयोक्तृभिः कार्यं ध्रुवाणां सम्प्रवेशनम्
यथास्थानाश्रयोपेतं यथानृत्तकृतं तथा ३२४
यथावर्णादृते चित्रं न शोभोत्पादनं भवेत्
एवमेव विना गानं नाट्यं रागं न गच्छति ४२५
पूर्वरङ्गविधाने तु कर्तव्यो रागजो विधिः
देवपूजाधिकारस्तु तत्र सम्परिकीर्तितः ४२६
ततश्च काव्यबन्धेषु नानाभावसमाश्रयम्
ग्रामद्वयं तु कर्तव्यं यथासाधारणाश्रयम् ४२७
मुखे तु मध्यमग्रामः षड्जः प्रतिमुखे भवेत्
साधारितस्तथा गर्भे विमर्शे चैव पञ्चमम् ४२८
कौशिकं च तथा कार्यं गानं निर्वहणे बुधैः
सन्निवृताश्रयं चैव रसभावसमन्वितम् ४२९
तथा रसकृता नित्यं ध्रुवाः प्रकरणारिताः
नक्षत्राणीव गगनं नाट्यमुद्योतयन्ति ताः ४३०
मागधी प्रथमा गीतिस्तथा चैवार्धमागधी
सम्भाविता तृतीया स्यात्पृथुला च तथा परा ४३१
त्रिनिवृत्या पदानां तु मागधी समुदाहृता
चित्रेर्धमागधी चैव द्विनिवृत्तपदाश्रया ४३२
वृत्तौ सम्भावितो प्रायो लघुवाद्याक्षरान्विता
पृथुला दक्षिणे तु स्यात् गुरुवाद्याक्षरान्विता ४३३
गानयोगे चतस्रस्तु योज्याः सर्वत्र गायनैः
यथाक्षरकृता ह्येताः प्रयोज्यास्ते ध्रुवास्वपि ४३४
पूर्णस्वरं चाऽथ विचित्रवर्णं

त्रिस्थानशोभि त्रिलयं त्रिमार्गम्
रक्तं समं श्लक्ष्णमलङ्कृतं च
सुखं प्रशस्तं मधुरं च गानम्  ४३५
गीते प्रयत्नं प्रथमस्तु कार्यः
शय्यां हि नाट्यस्य वदन्ति गीतम्
गीतेऽपि वाद्येऽपि च सम्प्रयुक्ते
नाट्यप्रयोगो न विपत्तिमेति  ४३६
एतदुक्तं मया सम्यग्ध्रुवाणां लक्षणं महत्
अत ऊर्ध्वं प्रवक्ष्यामि गातृवादकयोर्गुणान्  ४३७
इति भरतीये नाट्यशास्त्रे ध्रुवाविधानो नाम द्वात्रिंशोऽध्यायः

## अथ त्रयस्त्रिंशोऽध्यायः

गुणात्प्रवर्तते गानं दोषं चैव निरस्यते
तस्माद्यत्नेन विज्ञेयौ गुणदोषौ समासतः  १
गाता प्रत्यग्रवयाः स्निग्धो मधुरस्वरोपचितकण्ठः
लयतालकलापातप्रमाणयोगेषु तत्त्वज्ञः  २
रूपगुणकान्तियुक्ता माधुर्योपेतसत्वसम्पन्नाः
पेशलमधुरस्निग्धानुनादिसमरक्त गुरुकण्ठाः  ३
सुविहितगमकविधायिन्योऽक्षोभ्योताललयकुशलाः
आतोद्यार्पितकरणा विज्ञेया गायिकाः श्यामाः  ४
प्रायेण तु स्वभावात्स्त्रीणां गानं नृणां च पाठ्यविधिः
स्त्रीणां स्वभावमधुरः कण्ठो नृणां बलित्वं च  ५
यत्र स्त्रीणां पाठ्यात् गुणैर्नराणां च गानमधुरत्वम्
ज्ञेयोऽलङ्कारोऽसौ न हि स्वभावो ह्ययं तेषाम्  ६
सुनिविष्टपाणिलययतियोगज्ञौ सुमधुरलघुहस्तौ
गातृगुणैश्चोपेतावविहितमनसौ सुसङ्गीतौ  ७

स्फुटरचित चित्रकरणौ गीतश्रवणाचलौ प्रवीणौ च
चित्रादिवाद्यकुशलौ वीणाभ्यां वादकौ भवतः ८
बलवानवहितबुद्धिर्गीतलयज्ञस्तथा सुसङ्गीतः
श्रावकमधुरस्निग्धो दृढपाणिर्वंशवादको ज्ञेयः ९
अविचलितमविच्छन्नं वर्णालङ्कारबोधकं मधुरम्
स्निग्धं दोषविहीनं वेणोरेवं स्मृतं वाद्यम् १०
ज्ञानविज्ञानकरणवचनप्रयोगसिद्धिनिष्पादनानि षडाचार्यगुणा इति
। तत्र
ज्ञानं शास्त्रावबोधः । यथा च क्रियासम्पादनं विज्ञानम् ।
कण्ठहस्तगौण्यं करणम् । जितग्रन्थता वचनम् । देशादि-
सम्पदाराधनं प्रयोगसिद्धिः शिष्यस्वभावमविशेष्योपात्तय
उपदेशाच्छिष्यनिष्पादनमिति ११
श्रावकोऽथ धनः स्निग्धो मधुरो ह्यवधानवाम्
त्रिस्थानशोभीत्येवं तु षट् कण्ठस्य गुणा मताः १२
उदात्तं श्रूयते यस्मात्तस्माच्छ्रावक उच्यते
श्रावकः सुस्वरो यस्मादच्छिन्नः स धनी मतः १३
अरूक्षध्वनिसंयुक्तः स्निग्धस्तज्ज्ञैः प्रकीर्तितः
मनःप्रह्लादनकरः स वै मधुर उच्यते १४
स्वरेऽधिके च हीने च ह्यविरक्तो विधानवान्
शिरःकण्ठेष्वभिहितं त्रिस्थानमधुरस्वरः
त्रिस्थानशोभीत्येवं तु स हि तज्ज्ञैरुदाहृतः १५
कपिलो ह्यवस्थितश्चैव तथा सन्दष्ट एव च
काकी च तुम्बकी च पञ्च दोषा भवन्ति हि १६
वैस्वर्यं च भवेद्यत्र तथा स्याद्धर्घरायितम्
कपिलः स तु विज्ञेयः श्लेष्मकण्ठस्तथैव च १७
ऊनताऽधिकता चापि स्वराणां यत्र दृश्यते

रूक्षदोषहतश्चैव ज्ञेयः स त्वव्यवस्थितः १८
दण्डप्रयोगात्सन्दष्टस्त्वाचार्यैः परिकीर्तितः
यो न विस्तरति स्थाने स्वरमुच्चारणागतम्
तथा रूक्षस्वरश्चैव स काकीत्यभिसंज्ञितः १९
नासाग्रग्रस्तशब्दस्तु तुम्बुकी सोऽभिधीयते २०
अन्ये तु
समप्रहरणे चैव जविनौ विशदौ तथा
जितश्रमौ विकृष्टौ च मधुरौ स्वेदवर्जितौ
तथा बृहन्मखौ चैव ज्ञेयौ हस्तस्य वै गुणाः २१ इति
एते गुणाश्च दोषाश्च तत्त्वतः कथितो मया
अत ऊर्ध्वं प्रवक्ष्यामि ह्यवनद्धविधिं पुनः २२
गान्धर्वमेतत् कथितं मया तत्
पूर्वं यदुक्तं प्रपितामहेन
कुर्याद्य एवं तु नरः प्रयोगे
सम्मानमग्र्यं लभते स लोके २३ इति
इति भरतीये नाट्यशास्त्रे गुणदोषविचारो नाम त्रयस्त्रिंशः ३३

## अथ चतुस्त्रिंशोऽध्यायः

ततवाद्यविधानं तु यन् मयाऽभिहितं पुरा
अवनद्धगतस्यापि तस्य वक्ष्यामि लक्षणम् १
यथोक्तं मुनिभिः पूर्वं स्वातिनारदपुष्करैः
सर्वलक्षणसंयुक्तं सर्वातोद्यविभूषितम् २
मृदङ्गानां समासेन लक्षणं पणवस्य च
दर्दरस्य च संक्षेपाद्विधानं वाद्यमेव च ३
अनध्याये कदाचित्तु स्वातिर्महति दुर्दिने
जलाशयं जगामाथ सलिलानयनं प्रति ४

तस्मिञ्जलाशये यावत् प्रविष्टः पाकशासनः
धाराभिर्महतीभिस्तु पूरयन्निव मेदिनीम् ५
पतन्तीभिश्च धाराभिर्वायुवेगाज्जलाशये
पुष्करिरायां पटुः शब्दः पत्रारामभवत्तदा ६
तेषां धारोद्भवं नादं निशम्य स महामुनिः
आश्चर्यमिति सम्प्राप्तमवधारितवान् स्वयम् ७
ज्येष्ठमध्यकनिष्ठानां पत्राणामवधार्य च
गम्भीरमधुरं हृद्यमजगामाश्रमं ततः ८
ध्यात्वा सृष्टिं मृदङ्गानां पुष्करानसृजत्ततः
पणवं दर्दरं चैव सहितो विश्वकर्मणा ९
देवानां दुन्दुभिं दृष्ट्वा चकार मुरजांस्ततः
आलिङ्ग्यश्चोर्ध्वकं चैव तथैवाङ्किकमेव च १०
चर्मणा चावनद्धांस्तु मृदङ्गान् दर्दरं तथा
तन्त्रीभिः पणवं चैवमूहापोहविशारदः ११
त्रयं चान्यान्यपि तथा काष्ठायसकृतान्यथ
झल्लरीपटहादीनि चर्मनद्धानि तानि च १२
आतोद्यसमवाये तु यानि योज्यानि वादकैः
अङ्गप्रत्यङ्गयोगेन गदतो मे निबोधत १३
विपञ्ची चैव चित्रा च दारवीष्वङ्गसंज्ञिते
कच्छपीघोषकादीनि प्रत्यङ्गानि तथैव च १४
मृदङ्गा दर्दराश्चैव पणवाश्चाङ्गसंज्ञिताः
झल्लरीपटहादीनि प्रत्यङ्गानि तथैव च १५
अङ्गलक्षणसंयुक्तो विज्ञेयो वंश एव हि
शाखस्तुरिडकिनी चैव प्रत्यङ्गे परिकीर्तिते १६
नास्ति किञ्चिदनायोज्यमातोद्यं दशरूपके
रसभाव प्रयोगं तु ज्ञात्वा योज्यं विधानतः १७

उत्सवे चैव याने च नृपाणां मङ्गलेषु च
शुभकल्याणयोगे च विवाहकरणे तथा १८
उत्पाते सम्भ्रमे चैव सङ्ग्रामे पुत्रजन्मनि
ईदृशेषु हि कार्येषु सर्वातोद्यानि वादयेत् १९
स्वभावगृहवार्तायामल्पभाण्डं प्रयोजयेत्
उत्थानकार्यबन्धेषु सर्वातोद्यानि वादयेत् २०
अङ्गानां तु समत्वाच्च छिद्रप्रच्छादने तथा
विश्रामहेतोः शोभार्थं भाण्डवाद्यं विनिर्मितम् २१
तत्रावनद्धे वक्ष्यामि विधिं स्वरसमुत्थितम्
नानाकरणसंयुक्तं भार्गजातिविभूषितम् २२
यावन्ति चर्मनद्धानि ह्यातोद्यानि द्विजोत्तमाः
तानि त्रिपुष्कराद्यानि ह्यवनद्धमिति स्मृतम् २३
एतेषां तु पुनर्भेदाः शतसंख्याः प्रकीर्तिताः
किन्तु त्रिपुष्करस्यास्य लक्षणं प्रोच्यते मया २४
शेषाणां कर्मबाहुल्यं यस्मादस्मिन्न दृश्यते
न स्वरा प्रहाराश्च नाक्षराणि न मार्जनाः २५
भेरीपटसजम्भाभिस्तथा दुन्दुभिडिण्डमैः
शैथिल्यादायतत्त्वाच्च स्वरेऽगाम्भेर्यमिष्यते २६
प्रायशस्तानि कार्याणि कालं कार्यं समीक्ष्य तु
किन्तु त्रिपुष्करस्यास्य श्रूयतां यो विथिः स्मृतः २७
वाय्वात्मको भवेच्छब्दः स चापि द्विविधो मतः
स्वरवांशैव विज्ञेयस्तथा चैवाभिधानवान् २८
तत्राभिधानवान् नाम नानाभाषासमाश्रयः
स्वरवानपि विज्ञेयो नानातोद्यसमाश्रयः २९
शारीर्यामेव वीणायां स्वराः सप्त प्रकीर्तिताः
तेभ्यो विनिःसृताश्चैवमातोद्येषु द्विजोत्तमाः ३०

पूर्वशरीरादुद्धतास्ततो गच्छन्ति दारवीम्
ततः पुष्करजं चैवमनुयान्ति घनं पुनः ३१
तेषां वाक्करणैर्ज्ञेयाः प्रहारा वचनाश्रयाः
झणमणया चेति संयुक्ता वीणावाद्यप्रयोगिनः ३२
शारीर्यामथ वीणायां झणटु जगदि यादि च
भवेद्वाक्करणं तत्र नानाकरणसंयुतम् ३३
यं यं गाता स्वरं गच्छेत्तामातोद्यैः प्रयोजयेत्
यतिपाणिसमायुक्तं गुरुलघ्वक्षरान्वितम् ३४
पौष्करस्य तु वाद्यस्य मृदङ्गपणवाश्रयम्
विधानं सम्प्रवक्ष्यामि दर्दरस्य तथैव च ३५
षोडशाक्षरसम्पन्नं चतुर्मार्गं तथैव च
विलेपनं षट्करणं त्रियति त्रिलयं तथा ३६
त्रिगतं त्रिप्रकारं च त्रिसंयोगं त्रिपाणिकम्
दशार्धपाणिप्रहतं त्रिप्रहारं त्रिमार्जनम् ३७
विंशत्यलङ्कारयुतं तथाष्टादशजातिकम्
एभिः प्रकारैः सम्पन्नं वाद्यं पुष्करजं भवेत् ३८
तत्र षोडशाक्षरमिति यदुक्तं तदनुव्याख्यास्यामः
कखगघटठडढतथदधमरलह इति षोडशाक्षराणीह
नियतं पुष्करवाद्ये वाक्करणैः संविधेयानि ३९
चतुर्मार्गं नाम । आलिप्ताङ्कितगोमुखवितस्ताश्चत्वारो मार्गाः ।
द्विलेपं नाम । वमोर्ध्वकप्रलेपात् ।
षट्करणं नाम । रूपं कृतप्रतिकृतं प्रतिभेदो रूपशेषमोधः
प्रतिशुल्का चेति ।
त्रियतिर्नाम । समा स्रोतोगता गोपुच्छा चेत्यन्वयात् ।
त्रिलयं नाम । द्रुतमध्यविलम्बितयोगात् ।
त्रिगतं नाम । तत्त्वमनुगतमोघश्चेति ।

त्रिप्रचारं नाम । समप्रचारो विषमप्रचारः समविषमप्रचारश्चेति ।
त्रिसंयोगं नाम । गुरुसंयोगो लघुसंयोगो गुरुलघुसंयोगश्चेति ।
त्रिपाणिकं नाम । समपाणिरवपाणिरुपरिपाणिश्चेति ।
पञ्चपाणिप्रहतं नाम । समपाण्यर्धसमपाणिरर्धार्धसमपाणिः
पार्श्वपाणि प्रदेशिनी चेति ।
त्रिप्रहारं नाम । निगृहीतोऽर्धनिगृहीतो मुक्तश्चेति ।
त्रिमार्जनं नाम मायूर्यर्धमायूरी कार्मारवी चेति ।
विंशत्यलङ्काराः अष्टादशजाविश्च पदभेदे दर्शयिष्यामः ४०
एतावत् सूत्रम् । अतः पदभेदः । तत्र षोडशाक्षरं नाम ।
अभिव्यञ्जितानि पूर्वं यान्येतानि षोडशाद्यानि ॥
तान्यक्षराणि जानीत पुष्करेषु यथाक्रमम्
पणवे दर्वरे चैव मृदङ्गेषु तथैव च ४१
कखतथभास्तु दक्षिणमुखेऽत्र घघमहाश्च वामके नियताः ।
गदकारौ चैवोर्ध्वे दठडोण लाः स्युरालिङ्गे ४२
एतेषामक्षराणां स्वरसंयोगं व्यञ्जनसंयोगं च व्याख्यास्यामः ।
तत्र अ आ इ ई उ ए ओ अं इति स्वरा व्यञ्जनैः सह संयोगं गच्छन्ति
। अकारेकारोकारैकारौकाराङ्कारा इति ककारे । यथा ।
ककिकुकेकोकमिति ।
इकारैकारौकारा इति खकारे । खिखेखो इति ।
उकारैकारौ गकारे । यथा गुगे इति ।
अकारेकारोकारौकारा इति घकारे । यथा घधिघुघो इति ।
अकाराकारेकारौकाराङ्कारा टकारे । यथा टटाटिटोटमिति ।
अकाराकारेकारैकारौकाराङ्कारा इति ठकारे । यथा
ठठाठिठेठोठमिति ।
एकारौकारौ ढकारे । यथा ढेढो इति ।
अकाराकारैकारौकारा इति णकारे । यथा णणाणेणो इति ।

अकाराकारेकारैकारा इति तथयोः । यथा ततातिते यथाथिथे इति ।
अकारोकारेकारौकारा इति दकारे । यथा ददुदेदो इति ।
अकाराकारेकारौकाराङ्कारा इति घकारे । यथा घघाघिघे ।
आकारेकारैकारा इति रेफे । यथा रारिरे इति ।
अकारेकारैकारा इति लकारे । यथा ललालिले इति ।
हकारमकारौ शुद्धौ ४३
ककारगकारघकारतकारधकादकाराणां रेफोऽनुबन्धः ।
यथा क्र ग्र ध्र त्र द्र
घ्र । ककारस्य लकारोऽनुबन्धः । यथा क्ल क्ले क्लमिति ।
हकारस्य णकारोऽनुबन्धः ।
यथा ह्ण इति । तकारस्य थकारोऽनुबन्धः । यथा त्थ इति ।
दकारस्य धकारोऽनुबन्धः । यथा द्धं द्धा द्धे इति । एवमेतैः
संयोगैर्द्विहस्तसंयुक्तान्यक्षराणि भवन्ति ४४
तत्रैत एव द्विपुष्करे । आङ्किकमृदङ्गे द्विपुष्करे
समहस्तनिपातनाद्धकारः । तत्रैवाङ्गुलिप्रचलनाद्ध्रकारः ।
तत्रैवावष्टम्भात्तत्रैवार्धनिगृहीतात् स्थकारः ।
तत्रैव दक्षिणमुखे पार्ष्णिनिपीडिते ककारः ।
तत्रैवाङ्गुलिकुञ्चनात्कुकारः । ऊर्ध्वकवामकयोः
समहस्तनिपातनाद्धंकारः । प्रदेशिन्या चालिङ्गे क्रेङ्कारः ४५
पञ्चपाणिप्रहतमिति यदुक्तं
समपाणयवपाणयर्धार्धपाणिपार्श्वपाणिप्रदेशिन्यश्चेति । त एते
पञ्चपाणिप्रहता के निगृहीतार्धनिगृहीतयुक्ता यथायोग कार्याः ।
तत्र समपाणिप्रहतो मकारः स निगृहीतः ।
गकारधकारदकारपकारा अर्धपाणिप्रहता अर्धनिगृहीताः ।
ककारखकारटकारदकाराः पार्श्वपाणिप्रहता निगृहीताश्च ।
तकारथकारावर्धार्धपाणिहतावर्धनिगृहीतौ । प्रदेशिन्या हतां

आलिङ्गे ढकारणकारेफवकारा युक्ताः । द्विहस्तप्रहता ध्रुदोंल्के इति । मुक्तपार्श्वे थिक्रा इत्यर्घपाणिहता निगृहीताः ।
एवमेतेष्वक्षरेषु प्रयोगवशेन कार्या प्रहाराः ४६
षोडशैतानि दृष्टानि वाद्यजान्यक्षराणि तु
अनेनैव विधानेन योज्यं वांक्करणं बुधैः ४७
चतुर्मार्गं यदुक्तं तमनुव्याख्यास्यामः
अङ्कितालिप्तमार्गे तु वितस्ता गोमुखी तथा
मार्गाश्चत्वार एवैते प्रहारकरणाश्रयाः ४८
तत्र किङ्कमृदङ्गप्रहारयुक्तोऽङ्कितमार्गो वामोर्ध्वप्रहारयुस्त आलिप्तमार्गः । ऊर्ध्वकाङ्किके दक्षिणमुखे आलिप्तहस्तो वितस्तमार्गः । आलिङ्गककरणबहुलः सर्वपुष्करहतो गोमुखीमार्ग इति ४९
तत्राङ्कित प्रहारजातम् । भटकटथिधधटघेधोधहमंधि धंधनधिधि इत्य-
ङ्कितामार्गः । धडः गुटगुटमघेदोधिंधदुधिदुर्धेधि किंकाकिटमेट-
कितां किंकेकितांद---तसितां गुटगेत्येवं ज्ञेयो वितस्त्यास्तु ।
शुद्धं सिद्धं
मद्धिकुटघेघेमत्थिद्धिधखुधुणंघेधोटत्थिमट गोमुखीमार्गः ५०
कुर्याद्वितस्तिमागे थरव्रिवर्जितान् प्रहारांस्तु
उद्धतमार्गेण विना शेषाः कार्यास्तु गोमुख्याम् ५१
द्रोमांस्तु गुटगुटधेद्रथणैघटकेदोराडिम्
एवं विवाद्यं विज्ञेयं वादकैस्तज्ज्ञैः ।
ठिणिखिठिणिहो डडडधो गोमुख्याम् ५२
ये त्वालिप्तसमुत्था सर्वमागैस्तु ते विधातव्या ।
ग्रहगो न लक्ष्यसत्त्वो नाट्यविधानं समासाद्य
ग्रहमोक्षणसन्धानैस्तु मृदङ्गानां ग्रहो भवति ५३

एतेषां चैव वद्त्यामि दर्शनानि यथाक्रमम्
चतुर्णामपि मार्गाणामद्मरग्रहणं यथा ५४
दाघददथिमटां धीमठां दिथिथिक्लं थिक्लाथिंतांक्लाथिकटाम् ।
कटधिमटां खोखोघेटातङ्कितावाद्यम् ५५
तन्त्रान्तिकिता धंधंद्रघटितयेटम् ।
यटथकिकेत्तवितस्तायाम् ५६
ध्रांमां घुटूघेघेटाघटितकथिथिधोटामाम् ।
आलिप्तकसंयोगो कार्ये संवादने सम्यक् ५७
ध्रटमिथिघेटांघेघेतमथिधोणाखमत्थिधक्लेंताम् ।
खोखोथाथा णाणाणाणा च गोमुख्याम् ५८
एतेषां पुष्कराणां त्रिविधः प्रचारः । समप्रचारो विषमप्रचारः
समविषामप्रचार इति ५९
तत्र
वामोर्ध्वकयोर्वामः सव्यो वै दद्मिणोर्ध्वके चापि कार्यः
समप्रचारे ह्यालिप्ते लिप्तवाद्यकरणे तु ६०
वामोर्ध्वकसव्यानां प्रहतो वामः करस्तु कर्तव्यः
सव्योर्ध्वकसंयोगात्प्रहतो हस्तप्रचारे तु ६१
स्वच्छन्दकः कराणां प्रहतं शेषेषु मार्गकरणेषु
अङ्कितगोमुखयोगे समविषमो हस्तसञ्चारः ६२
शृङ्गारहास्ययोगे वाद्यं योज्यं तथाऽङ्किते मार्गे
वीराद्भुतरौद्राणां वितस्तमार्गेण वाद्यं तु ६३
करुणरसेऽपि हि वाद्यं योज्यं ह्यालिप्तकरणमार्गे तु
बीभत्सभयानकयोस्तथैव नित्यं हि गोमुख्या ६४
रससत्वभावयोगान् दृष्ट्वाभिनयं गतिप्रचारांश्च
वाद्यं नित्यं कार्यं यथाक्रमं वाद्ययोगज्ञैः ६५
एवं प्रहतविधानं कार्यं मार्गाश्रितं बुधैः सम्यक्

वक्ष्याम्यतश्च भूयो दर्दरपणवाश्रितं वाद्यम्  ६६
अतिवादितमनुवाद्यं समवादितमुच्यते पणववाद्यम्
तत्रातिवादितं स्यान् मुरजानामग्रतो यत्तु  ६७
यत्वनुगतं मृदङ्गैरनुवादितमुच्यते तु तद्वाद्यम्
समवादितं मृदङ्गैर्ज्ञेयं साम्येन यद्वाद्यम्  ६८
कखगा ठठणा देह्ला णरला क्रुलिलंध्रणेति किरिकिह्ला
एते वर्णाः पणवातोद्यविधाने विधातव्याः  ६९
धोधोणाधोकिहुलं प्रहुलं ह्लह्लिति रिणिति रिह्लथह्ले
कंथित्वाढेढेंढणां पणववाद्यम्
णहोणिकिमिकिलैणोण इति पणववाद्यं तु  ७०
तस्य प्रहतं कार्यं कनिष्ठिकानामिकाग्रकोणेन
नानाकरणविभागैः पणवे शिथिलाञ्चिते तज्ज्ञैः  ७१
वादककनिष्ठिकाभ्यां शीघ्रकृताः करेऽथ नेणोहाः
शेषास्तु वादनकृताः स्मृताः प्रहारा बिविधाद्याः  ७२
कोणानामिकवाद्यं मध्याङ्गुल्या हि वादनं कार्यम्
कोणानामिकवाद्यं शुद्धं प्रहतं भवेदेतत्  ७३
भ्रान्तकयोगात् क्रिहुळमित्येतत् भ्रान्तवादनाग्रेण
रिभितकरणानुविद्धं तत्रामस्तत्र कारस्तु  ७४
शीघ्रकरणानुविद्धैर्डकारस्त्वर्धहस्तसंयोगात्
स तु वादकेन वाद्ये धुर्येण विशेषतः कार्यः  ७५
स्वञ्चितकच्छौ पणवौ कृत्वा धुर्यपरिवादकस्यां हि
रणणकिकिहिकिणिङ्क इति प्रहारा विधातव्याः  ७६
अञ्चितकक्ष्ये पणवे रेफः सोऽर्धे तु हस्योर्ध्वे ग्रहे
कार्यो मयूरककरा सूक्ष्मौघास्तथा प्रहारा विधातव्याः  ७७
कृत्वा च शिथिलकक्ष्यां कार्यास्तु कनिष्ठिकाप्रकोणेन
तेनैव चरे प्रेद्धो भागे इत्यञ्चितेनैव  ७८

अञ्चितशिथिले पणवे कठणानिकिणिकिरिणकृताः
प्रहारास्तु वैभ्रान्तककरणेन तथा स्वञ्चितकद्वये च शिथिले च ७९
अञ्चितकद्वये पणवे कखरटणकृता मताः प्रहारास्तु
धिन्ने इति प्रहाराः पणवे तु सदा शिथिलकद्वये ८०
कखरटकृताः प्रहाराः सोच्छ्वासे हि पणवे विधातव्याः
शेषा भ्रान्तकयोगाः संयुक्ताः संविधातव्याः ८१
टङ्कारेण स्वनजं वाद्यं कद्वयाञ्चिते तु सम्भवति
तेन नकारो युक्तो ह्ल इति च पणवे प्रहारः स्यात् ८२
तिर्यग्गृहीतवादनमुखवर्तित इष्यते तकारस्तु
तहुलं तहुलं क्रमशश्चैवं ह्येते प्रहारास्तु ८३
एवं पणवे वाद्यं विधिवत् संक्षेपतो यथाऽभिहितम्
वक्ष्याम्यतः परमहं दर्दरवाद्याक्षराण्येव ८४
रेक्लृतिकुत्खनोत्वनोधन्मोगोणेहधिराणसंयुक्ताः
इति दर्दरे प्रहाराः कार्या मुक्ता निषराणाश्च ८५
कार्यास्तत्र निषराणा रग्रध्रह्लि इति च दक्षिणकरेण
वामेन गोमदोत्था न नखस्पृष्टः प्रकारोऽग्रे ८६
मुक्तौ तीत्रित्रिण भवेन्निपीडने करद्वयेनापि
धीमुक्तः प्रहतं स्यादनुस्वने ताडिते चैव ८७
स्यात् पीडिते च धिह्लेत्येतन्मुक्तं तथा विमुक्तेऽपि
शेषा भवन्ति मुक्तास्तन्का इति चैव निगृहीते ८८
शीघ्रकरणानुबन्धस्थितिरेव हि निःस्वनः स्खलितकं स्यात्
इति दर्दरे प्रहाराः समासतस्तत्र विज्ञेयाः ८९
एवं त्वसङ्करकृता प्रहारशुद्धिरिह कीर्तिता तज्ज्ञैः
दर्दरपणवमृदङ्गैर्मिश्रितवाद्यं प्रवक्ष्यामि ९०
तत्र व्यक्तीभावं वाद्ये गच्छन्ति मिश्रिताः केचित्
केचिद्युगपत्करणं केचित् पर्यायकरणं तु ९१

एकैकसम्प्रयुक्ता वर्णानुगतस्तथैव सम्पृक्ता
घोंद्रेरेदोखोकोत्रिहुलं तत्कृता मृदङ्गेषु ९२
अथ दर्दरेऽपि धिंधिंक्लेते पणवयोस्तु संयुक्ताः
डणके खोददोदे दिधिरे दिधिनि मिश्रास्तु ९३
आभ्यो येऽन्ये शेषास्ते मिश्रा एव नित्यशः कार्याः
पूर्वोऽपि च मिश्रत्वं व्रजन्ति सर्वे यथायोगम् ९४
अथ युगपत्करणानि तु हह्लह्लेकुकुनणंध्रलंदोह्लम्
ग्रहुलं नह्लादो एवं योज्यास्तु पणवे हि ९५
धुर्यः कृतासु क्रमशः करणे परिवादनेन कर्तव्या
कोखोदेदोधोणह्लेति किणिकिणिति कृताश्च ९६
पणवानामनुबन्धे कार्यं धुक्दुह्लकेति वाद्यं तु
भूयः प्रतिकृतिभेदो मार्दङ्गिकदर्दरिभ्यां च ९७
यद्यत्कुर्यान्मुरजे प्रहारजातं गतिप्रचारेषु
अनुगतमक्षरवृत्तं तदेव वाक्यं तु पणवेऽपि ९८
न हि चित्रं कर्तव्यं गतिप्रचारेषु वादनं तज्ज्ञैः
समविषमं तत्र हि यद्वृत्त्यं पादसञ्चारे ९९
उपरिकरणे यथेष्टं कर्तव्यस्तु पणवो मृदङ्गेषु
तत्र प्रहारकरणैर्मृदङ्गवाद्यं विधातव्यम् १००
प्रायेण सर्ववादेष्वादौ पणवग्रहः प्रयोक्तव्यः
वक्ष्याम्यहमतः परं तु लक्षणं करणजातस्य १०१
रूपं कृतप्रतिकृतं प्रतिभेदो रूपशेषमोघस्य
षष्ठी च प्रतिशुक्लेत्येवं ज्ञेयं करणजातम् १०२
तत्र रूपं नाम विभक्तकरणम् । यथा
घंघंगेघं किटिमा किटिमा घटत्थि घटपत्थि
घदुगुरुकिटिकट कृह्लं दोघे दोघे क्ले १०३
इति रूपम् ।

कृतप्रतिकृतं नाम यत्रैकं करणं त्रिपुष्कर इत्युद्भावयति
यथा
दंखुखुणक्रमधिमदांणेटोटतितोटमत्थिमानक्रम्
गुरुखे किहुले दोह्लं दोस्रो दोधोण खे वाद्यम् १०४
प्रतिभेदो नाम युगपत्कृते करणे मृदङ्गानां यदुपरिकरणेन गच्छन्ति
यत् ।
दाधा धाणिधा मटगतमधिं घटे घटे
दोघे घट मत्थिणह्नको खो ।
एभिः करणविशेषैः प्रतिभेदो नाम विज्ञेयः १०५
इति वाद्यम्
रूपशेषं नाम करणानामविशेषो यथा
खुखुणं णणणणणां मढाघेव मथिटां घेटां घेदो
ये घेटमढिणष्णरवो इति वाद्य रूपशेषं तु १०६
प्रतिशुल्कं नामानुस्वारो मार्दङ्गिकदर्दरवादकानाम् । यथा ।
घटमथि कुणकिटि गखाखा कथिधिजाणणकोखोणाखा
कुटकटि कुणकिटि कटखे प्रतिशुल्काख्यं सदा करणम् १०७
ओघो नाम सर्वभाण्डविधेयो द्रुतपाणिलयो नद्योघवत्
ओघो यथा
घंकिटिमथकिटिकिटिवे घदघुदेदेण धाण दाधानणोखो
घदुगुदुघुदुगुदुपदघेरेणिण एते तथौघे च १०८
करणानां समायोगः षड्विधः परिकीर्तितः
अनेनैव विधानेन योज्यं वाक्करणं बुधैः १०९
त्रियति नाम । समा स्रोतोगता गोपुच्छा चेति । लययतिपाणीनां
त्रिविधः
संयोगः । स च त्रिप्रकारो भवति । तद्यथा । राद्धं विद्धं
शय्यागतं चेति ११०

त्रिलयं नाम । द्रुतो मध्यो विलम्बितश्चेति १११
त्रिपाणिकं नाम समपाणिरर्धपाणिरुपरिपाणिश्चेति ११२
समायतिर्द्रुतश्चैव लयो यत्र भवेदथ
तथैवोपरिपाणिश्च राद्धस्त्वेष विधिर्भवेत् ११३
स्रोतोगता यतिर्यत्र लयो मध्यस्तथैव च
समपाणिस्तथा चैव विद्धं वाद्यं तु तद्भवेत् ११४
अर्धपाणिस्तु यत्र स्यात्तथा चैव स्थितो लयः
यतिश्चैव तु गोपुच्छा वाद्य शय्यागतं तु तत् ११५
स्थिताल्लयात्प्रभृत्येषां प्रमाणं सम्प्रवर्तते
कार्यहानिं कलानां च शेषेष्वन्येषु पाणिषु ११६
यतयः पाणयश्चैव लया वै वाद्यसंश्रयाः
ययाकामं हि कर्तव्या नाट्यशक्तिमवेक्ष्य तु ११७
त्रिमार्जनं नाम ।
मायूरी ह्यधमायूरी तथा कार्मारवीति च
तिस्रस्तु मार्जना ज्ञेयाः पुष्करेषु स्वराश्रयाः ११८
गान्धारो वामके कार्यः षड्जो दक्षिणपुष्करे
ऊर्ध्वके पञ्चमश्चैव मायूर्यां तु स्वरा मताः ११९
वामके पुष्करे षड्ज ऋषभो दक्षिणे तथा
ऊर्ध्वके धैवतश्चैवमर्धमायूर्युदाहृताः १२०
ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे
पञ्चमश्चोर्ध्वके कार्यः कार्मारव्याः स्वरास्त्वमी १२१
एतेषामनुवादी तु जातीनां यः स्वरो मतः
आलिङ्गमार्जनां प्राप्तो निषादः स विधीयते १२२
मायूरी मध्यमग्रामे षड्जे त्वर्धा तथैव च
कार्मारवी तु कर्तव्या साधारणसमाश्रया १२३
स्वराः स्थानस्थिता ये तु श्रुतिसाधारणाश्रयाः

त एव मार्जनकृताः शेषाः सञ्चारिणो मताः १२४
वामके चोर्ध्वके कार्या आहार्या लेपतः स्वराः
शैथिल्यादायतत्त्वाच्चावध्राकोटनयाऽपि च १२५
स्वराणां सम्भवः कार्यो मार्जनासु प्रयोक्तृभिः
मार्जना तु कृता कार्या वामकोर्ध्वकयोः सदा १२६
लक्षणं मृत्तिकायास्तु गदतो मे निबोधत
निश्शर्करा निस्सिकता निस्तृणा निस्तुषा तथा १२७
न पिच्छिला न विशदा न क्षारा न कटुस्तथा
नावदाता न कृष्टा च नाम्ला नैव च तिक्तका १२८
मृत्तिका लेपने शस्ता तया कार्या तु मार्जना
नदीकूलप्रदेशस्था श्यामा च मधुरा च या १२९
तोयापसरणश्लक्ष्णा तया कार्या तु मार्जना
बधिरा ह्यवदात्ता तु कृष्णा कुर्वीत न स्थिरा १३०
न तुषा न स्वरकरी श्यामा स्वरकरी भवेत्
यवगोधूमचूर्णां वा तत्र दद्यात्प्रलेपने
एकस्तस्य तु दोषः स्यादेकस्वरकृतं भवेत् १३१
त्रिसंयोगं नाम । गुरुसञ्चयो लघुसञ्चयो गुरुलघुसञ्चयश्चेति १३२
तत्र गुरुसञ्चयो नाम । गुरुस्थितलयौधवृत्तो यथा ।
धंतां केतां धंद्रां घेतं धंधं तथैव केंतांधम्
दंदंदेंदेंद्रांघेंतांखेंताखेंतामिति च गुरु स्यात् १३३
लघुसञ्चयो नाम । गुरुलघुमध्यप्रवृत्तो यथा
घटमटघटमथटमथटमधिद्धडगुडधडधत्कृलघु
घटमथिघदुगुदुखघदुघंकृतो लघुलयश्च
इति संयोगौ ज्ञेयौ मृदङ्गवाद्ये प्रयोगज्ञैः १३४
गुरुलघुसञ्चयो नाम । गुरुलघुमद्यमप्रवृत्तो यथा ।
घटथिम्मथिथिं मथितं किटा

घटधिं टत्थिमटके
इति संयोगो गुरुलघुप्लुतः स्यात्  १३५
त्रिगतं नाम  ।  तत्त्वमनुगतमोघं चेति
अक्षरसदृशं वाद्यं स्फुटपदवर्णं तथैव वृत्तसमम्
सुविभक्तकरणयुक्तं तत्त्वे वाद्यं विधातव्यम्  १३६
समपाणयवपाणियुतं स्फुटप्रहारकरणानुगं चैव
गेयस्य च वाद्यस्य च भवेदवधाताय तदनुगतम्  १३७
नैककरणाश्रयगतं ह्युपर्युपरिपाणिकं द्रुतलयं च
आविद्धकरणबहुलं योज्यं वाद्यं बुधैरेघेः  १३८
सर्वस्यापि हि वाद्यस्य अष्टौ साम्यानि भवन्ति  ।  तद्यथा
अक्षरसममङ्गसमं माललयत्वं यतिसमकं ग्रहसमकम्
न्यासापन्याससमं पाणिसमं चेति विज्ञेयम्  १३९
यद्वृत्तं तु भवेद्गानं गुरुलघ्वक्षरान्वितम्
तद्वृत्तं तु भवेद्वाद्यं तदक्षरसमं भवेत्  १४०
ध्रुवाणां ग्रहमोक्षेषु कलान्तरकलासु च
यदङ्गं क्रियते वाद्यं तदङ्गसममुच्यते  १४१
यच्छरीरं भवेद्गानं कलातालप्रमाणजम्
तत्प्रमाणं तु तद्वाद्यं तद्वै तालसमं भवेत्  १४२
स्थिते मध्ये द्रुते वापि लये गानं तु यद्भवेत्
तथा भवेत्तु तद्वाद्यं तद्वै लयसमं भवेत्  १४३
समा स्त्रोतोगता चापि गोपुच्छा च यतिर्यथा
तथा भवेत्तु यद्वाद्यं तद्वै यतिसमं भवेत्  १४४
ततावनद्धवंशानामेकश्रुतिकृतोऽपि च
ग्रहो गानेन सहितं तत्तु ग्रहसमं भवेत्  १४५
न्यासापन्यासयोगस्तु स्वराणां तु भवेद्यथा
तद्वद्वाद्यं यदातोद्ये न्यासापन्यासजं तु तत्  १४६

समपाणयर्धपाणिस्थं तथैवोपरिपाणिकम्
गीतवाद्यानुगं वाद्य ज्ञेयं पाणिसमं तु तत् १४७
अष्टादशजातिकमिति यदुक्तं तदनुव्याख्यास्यामः । तद्यथा
शुद्धा पुष्करकरणा विषमा विष्कम्भितैकरूपा च
पार्ष्णिसमा पर्यस्ता समविषमकृता च कीर्णा च १४८
पर्यवसानोच्चितिका संयुक्ता संप्लुता महारम्भा
विगतक्रमा विगलिता वञ्चितिका चैकवाद्या च १४९
एतासां जातीनां लक्षणनिदर्शनान्यभिव्याख्यास्यामः
एकाक्षरकृतं वाद्यं यद्भवेत्सार्वमार्गिकम्
नित्यं करणयोगेन सा शुद्धा नामतो यथा १५०
धंधंद्रंद्रंक्लाखोखोहाणेति विहितवाक्या
सा शुद्धा विज्ञेया मध्यस्त्रीणां सदा जातिः १५१
स्वस्तिकहस्तविचारा सर्वमृदङ्गप्रहारसंयुक्ता
सा त्रिलयवाद्ययुक्ता पुष्करकरणा भवेज्जातिः १५२
घेंतांकेंतांखेंतां दीर्घकृतैरक्षरैः कृता या च
राज्ञां स्वभावगमने सा विषमा नामतो जातिः १५३
गुरुयुग्मं लघुयुग्मं तोटकं वाऽपि
नित्यं यत्र तु वाद्ये विष्कम्भा नाम सा जातिः १५४
वामोर्ध्वकप्रवृत्तादोघे क्षिप्तावकृष्टलययुक्ता
सा करुणा स प्राया जातिः स्यादेकरूपा तु १५५
थित्थं थिकट् थिंधिकटं मटथिकरणैः सपार्ष्णिकृतैः
थेक्लेटाघेग्रथिता पार्ष्णिसमा सा भवेज्जातिः १५६
ताघेंतांतांदोघेदोह्लामित्यक्षरैस्तु संयुक्ता
पर्यस्ता जातिरियं मध्यमपुरुषेषु कर्तव्या १५७
कुत्वोपरिपाणिकृतं वाद्यं यद्द्रुतलयं समारूढम्
पुनरेव समलयं स्यात् समविषमा सा तु विज्ञेया १५८

अवकीर्णं यद् द्विगुणैस्त्रिगुणैर्वा करणं मृदङ्गानाम्
पणवेषु दर्दरेष्वव्यवकीर्णा नाम सा जातिः १५९
पर्यवगच्छति पूर्वं यस्मिन् वै प्रस्तुतं करणजातम्
त्रिविधेऽपि तु लययोगे पर्यवसाना तु सा जातिः १६०
घेंटांदोह्लंरणुणहामेभिः स्यात्त्वक्षरैर्हि सम्बद्धा
साम्यार्धे उच्चितिका जातिर्वाद्ये तु बोद्धव्या १६१
थंकेटांकेटकिणामेभिर्या त्वक्षरैस्तु संयुक्ता
संयुक्तकृता जातिः सा सा चेटगतौ विधातव्या १६२
सर्वाङ्गुलिचलनकृता सर्वमृदङ्गप्रहारसंयुक्ता
भीतनभोयानगतौ संप्लुतजातौ विधातव्या १६३
अवपाणिकरणयुक्तं कृत्वादौ मध्यलयतुल्यम्
वाद्य द्रुतलयमन्ते जातिः स्यात्सा महारम्भा १६४
ऊर्ध्वाङ्कदक्षिणमुखे क्षिप्तप्रहता वितस्तमार्गा च
अङ्कोर्ध्वकप्रवृत्ता दक्षिणवामप्रहारजाता च १६५
प्रायेणोद्धतमार्गा वितस्तमार्गाश्रयेण दिव्यानाम्
धंद्रां धंद्रां प्राया जातिर्विगतवलभा नाम १६६
लघ्वक्षरभूयिष्ठा विचित्रकरणा च सर्वमागेषु
वाद्याऽविसर्पिकरणा विगलितनामा तु सा जातिः १६७
करणैर्बहुभिश्चितैः सर्वमृदङ्गसंहारसंयुक्ता
स्वाभाविकोत्तमगतौ वञ्चितिका सा तु विज्ञेया १६८
ध्रोध्रोध्रेध्रेधोधं एभिर्या त्वक्षरैश्च संयुक्ता
सा ह्येकवाद्यजानिर्वृत्तगतिविधानवत् कार्या १६९
एवमेतेन विधिना कर्तव्यं वादनं बुधैः
गतिप्रचारे गीते च दशरूपे विशेषतः १७०
सप्तरूपविधानेन छन्दकासारितेषु च
तत्त्वं चानुगतं चैव तद्धौधो वाद्यमिष्यते १७१

वाद्यं गुर्वक्षरकृतं तथाल्पाक्षरमेव च
गतिप्रचारे कर्तव्यं गाने सम्यगिहेच्छता १७२
तत्त्वं चानुगतं चापि ओघश्चापि कदाचन
राज्ञां ललितगामित्वाद्वाद्यं योज्यं स्वभावजम् १७३
तत्त्वं तु प्रथमे गाने द्वितीयेऽनुगतं भवेत्
तृतीये त्वोघसंज्ञं तु वाद्यं गतिपरिक्रमे १७४
ध्रुवासु छन्दतश्चित्रं शेषाणां सम्प्रयोजयेत्
तथा स्थितावकृष्टायां वाद्यं त्वनुगतं भवेत् १७५
प्रावेशिकीनां कर्तव्यं तत्त्वं चानुगतं तथा
नैष्क्रामिक्यन्तरकृतं कार्यं त्रिलयवाहितम् १७६
द्रुते प्रासादिकीनां द्रुतं चोधं च वादयेत्
एवं ध्रुवाणां कर्तव्यं वाद्य प्रकरणान्वितम् १७७
मात्रांशकविकल्पस्तु ध्रुवापादेषु यो भवेत्
स तु भाण्डेन कर्तव्यस्तज्ज्ञैर्गतिपरिक्रमे १७८
एवं गतिप्रचारेषु कार्यं वाद्य प्रयोक्तृभिः
ताण्डवे सुकुमारे च वाद्य वक्ष्यामि तत्त्वतः १७९
अभाण्डमेकं गानस्य परिवर्तं प्रयोजयेत्
तस्यान्ते सन्निपाते च कार्यो भाण्डग्रहो बुधैः १८०
अथवा नृत्तशोभार्थमङ्गानां परिवर्तनम्
सङ्गीतस्य प्रकर्तव्यं लयस्य च निवर्तनम् १८१
यत्राभिनेयमङ्गं तु तत्र वाद्यं प्रयोजयेत्
यत्र पाणिवशादङ्गं भूयो भूयो निवर्तते
स तत्रार्थोऽभिनेयस्तु शेषं नृत्तेन योजयेत् १८२
यद्वृत्तं तु पदं गाने तादृशं वाद्यमिष्यते
गीतवाद्यप्रमाणेन कुर्याच्चाङ्गविचेष्टितम् १८३
यथा गुर्वक्षरं चैव तथाल्पाक्षरमेव च

मुखे सोपोहने कार्यं प्रकृतेर्वर्णतस्तथा १८४
स्थिते शुद्धप्रहारं तु मध्येऽक्षरसमं तथा
कार्यं तु गीतके वाद्यं द्रुते चोपरिपाणिकम् १८५
समं रक्तं विभक्तं च तथा शुद्धप्रहारजम्
नृत्ताङ्गग्राहि च तथा वाद्यं कार्यं तु ताण्डवे १८६
सनृत्तेषु प्रयोगेषु तत्त्वं ह्यनुगतं तथा
अनृत्तेषु प्रयोगेषु तत्त्वमोघं क्रमेण तु १८७
स्थिते मध्ये द्रुते चापि यथा गानं तु गीयते
तथा नृत्ताङ्गहारेषु तेन चैव क्रमेण तु १८८
यो विधिर्गानवाद्यानां पदाक्षरलयान्विता
स तु नृत्ताङ्गहारेषु कर्तव्यो नाट्ययोक्तृभिः १८९
एतास्तु जातयः प्रोक्ता दश चाष्टौ च भाण्डजाः
अत ऊर्ध्वं प्रवक्ष्यामि प्रकारान् वाद्यसंश्रयान् १९०
तद्यथा । चित्रः समो विभक्तश्चिन्नश्छिन्नविद्धो विदो
वाद्यसंश्रयोऽनुसृतः प्रतिविद्युतो दुर्गोऽवकीर्णोऽर्धावकीर्णः परिक्षिप्त
एकरूपो नियमान्वितः साचीकृतः समलेकश्चित्रलेखः सर्वसमवायः
कृतो दृढ इति १९१
तत्र
रिखितोजकृतश्चित्रो नानाकरणभूषितः
प्रसन्नकरणं चैव त्रिपाणिलयसम्भवः १९२
दर्दरपणवमृदङ्गैर्नानाकरणैः समनुयातः
तालाङ्गवेणुयुक्तः स तु विज्ञेयः समो नाम १९३
नात्यायतस्तथा स्यादिह सास्थानस्थितो विभक्तश्च
अक्षरपाणिलयेषु च विभक्तकरणे विभक्तस्तु १९४
वाद्यं द्रुतलयं यत्र सहसा विनिवर्तते
सर्वातोद्येषु भिन्नेषु प्रकारश्छिन्न एव सः १९५

अवपाणिमृदङ्गेषु पणवोपरिपाणिकः
यदा भवन्ति वाद्येषु छिन्नविद्धस्त्वसौ भवेत् १९६
शुद्धानुविद्धं यद्वाद्यं सर्वातोद्येषु दृश्यते
परस्परानुवेधेन सोऽनुविद्ध इति स्मृतः १९७
मृदङ्गकरणे वाद्यं पणवानुगतं च यत्
सूचीविद्धैर्विचित्रैस्तु करणैर्विद्ध उच्यते १९८
विशुद्धवाद्यप्रकृतिः समपाणिकृतस्तथा
स्वरूपानुगतश्चैव विज्ञेयो वाद्यसंश्रयः १९९
मुरजः पणवो वापि पणवो दर्दरोऽथवा
अनुवादि यदा वाद्ये भवेदनुसृतस्तु सः २००
अनुगम्यं यदातोद्यं गच्छेत्समलयं पुनः
श्रान्तवत्समवाद्येषु तदा स्यात्पर्तिविद्युतः २०१
वाद्ये प्रचारविषमः सर्वमार्गप्रबोधनः
अविभक्ताक्षरपदः स दुर्ग इति कीर्तितः २०२
समवृत्तौ तु मुरजाश्छाद्यन्ते पणवैर्यदि
नाना विचित्रैः करणैरवकीर्णः स उच्यते २०३
द्रुतं लयं समारभ्य पणवो दर्दरोऽपि वा
अवपाणौ यदा स्यातां तदात्वर्धावकीर्णकः २०४
पणवैश्छादितं यत्र वाद्यमल्पमृदङ्गजम्
सुविभक्ताक्षरपदं परिक्षिप्तः स उच्यते २०५
सर्वातोद्यानि यत्रैकं करणं भावयन्ति तु
समवृत्तपदान्येवमेकरूप उदाहृतः २०६
प्रशान्तनियमोपेतः स्फुटवाद्यसमन्वितः
उपयाति च गीतं यः स ज्ञेयो नियमान्वितः २०७
चित्रं हि करणं यत्र वाद्येनैकेन वाद्यते
वृत्ताङ्गहारानुकृतो ज्ञेयः साचीकृतस्तु सः २०८

कृत्वोपरिगतं वाद्यं पणवो दर्दरोऽपि वा
प्रयाति मुरजं यत्र समलेखः स कीर्तितः २०९
चित्रं बहुविधं वाद्यं मृदङ्गपणवादिभिः
क्रियते यत्र संरब्धैश्चित्रलेखः स उच्यते २१०
सर्वमार्गगतो यस्तु सर्वपाणिलयाश्रयः
विचित्रश्च विभक्तश्च तत्समं समवायितम् २११
यस्तु मध्यलयोपेतः समः सुविहिताक्षरः
गतिप्रचारे विहितः प्रकारो दृढ एव सः २१२
एवमेते प्रकारास्तु कर्तव्या वाद्यसंश्रयाः
गतिप्रचारे गीते वा रसभावानवेक्ष्य च २१३
प्रकारा जातयश्चैव सर्वमार्गेषु संस्थिताः
ये वै गतिप्रचारेषु शुद्धास्ते केवला मताः २१४
प्रयोगमिदानीं वक्ष्यामः । तत्रोपविष्टे प्राङ्मुखे रङ्गे कुतप एव
विन्यासः कर्तव्यः । तत्र पूर्वोक्तयोर्नेपथ्यगृहद्वारयोर्मध्ये कुतप-
विन्यासः कार्यः । तत्र रङ्गाभिमुखो मौरजिकस्तस्य पाणविक-
दर्दरिकौ वामतः । एष प्रथममवनद्धकेन तस्य ततः कुतपविन्यास
उक्तः । तत्रोत्तराभिमुखो गायकः । गायकस्य तु वामपार्श्वे
वैणिकः । वैणिकस्य दक्षिणेन वंशवादकौ । गातुरभिमुखं
गायिका । इति कुतपविन्यासः २१५
तत्र ।
प्रयोगेषु प्रणेतव्यो वेशस्थानवशानुगः
यथास्थानस्थितेष्वेषु वामकातोद्यकेषु च १२६
एवमचलाकम्पितास्खलितासन्नोपविष्टेषु
मार्दङ्गिकदार्दरिकपाणविकेषु
शिथिलाञ्चितवध्रस्तनितेषु यथाग्रामरागमार्जनालिप्तेषु
मृदङ्गेषूरुद्वयनिपीडने तेषु

निगृहीतार्थनिगृहीतमुक्तप्रकारकृतेषु
दर्दरवादनविन्यस्तैर्देवतानामावाहनविसर्जनार्थं
प्रथममेव तावत्त्रिसाम कर्तव्यम् २१७
वामे चान्द्रमसं साम तत्प्रीणयति पन्नगान्
दक्षिणे जालजं साम तदृषीन् प्रीणयस्यथ २१८
उदीच्यामपि चाग्नेयं तद्बृहद्दैवतानि च
त्रिसाम कीर्तितं सम्यक् त्रिसामत्वाद्बुधैरथ २१९
त्रिप्रकारं त्रिगुणितं तथा चैवाङ्किताश्रयम्
त्रिकलं षट्कलं चैव त्रिसाम परिकीर्तितम् २२०
त्रिसामाक्षरपिण्डस्तु गुरुलघ्वक्षरान्वितः
यकारश्च मकारश्च त्रिकैस्त्रिगुणितं भवेत् २२१
समुदायस्तदपेक्षं । त्रिचा दिंग्ले झण्टुं प्रथमं साम । त्रिचा झण्टुं दिंग्ले द्वितीयम् । त्रिचा झण्टुं झण्टुं तृतीयमिति । तदन्ते पूर्वरङ्गविधानमनुप्राप्य छन्दःसमेनाक्षरसमेन वा वाद्येन बहिर्गीत-विधानमनुवर्तितव्यम् ।
आसारितप्रयोगे च तत्त्वानुगतप्रायं वाद्यं विधातव्यम् । यत्र त्रिसाम स प्रत्याहाराय चासाववतीर्णकोटी तत्र वाद्यं प्रवर्तते । तत्रादौ तावद्वामोर्ध्वकप्रहारयुतं पश्चादालिङ्गनविमर्दनकरं गोपुच्छां च त्रिसामा विचित्रकरणयुतं मार्दङ्गिकसर्वभाण्डकमपि वाद्यं पश्चात्प्रवर्तनीयम् । पूर्वं हि भाण्डवाद्येन सिद्धिरुत्पादनीया । स्त्रीबालमूर्खावकीर्णे च रङ्गे कुतूहलजननसमर्थवाद्यमुपपन्नं भवति २२२
अपि च ।
आचार्याः सममिच्छन्ति परुच्छेदं तु पण्डिताः
स्त्रियो मधुरमिच्छन्ति विकृष्टमितरे जनाः २२३
तस्य चान्ते ताण्डवप्रयोगमधिकृत्य नर्तक्या अवतरणकाले

लघुवर्णसञ्चयमङ्किकेऽङ्गुलिप्रचलनप्रायं वाद्यं योज्यम् ।
गीतकसन्निपाते च लास्यामनुवाद्यम् । तेन नृत्ताङ्गहारानुगतं
करणवाद्यं प्रयोज्यम् । आलिप्तमार्गेण जातिकरणान्वितमुत्थापने
वाद्यं प्रयोक्तव्यम् । ततः परं परिवर्तनं चातुर्भागिकं शुद्धजात्या-
श्रयं चतुर्थकारप्रवेशेषु वाद्यमङ्गुलिप्रचलनप्रायमिति ।
नान्दीशुष्कावकृष्टासु करणाश्रितं वाद्यं योज्यम् । रङ्गद्वारे
प्ररोचनाया जर्जरे त्रिगते चार्यां चाङ्कितमार्गाश्रितं सन्निपातग्रहं
प्रयोक्तव्यम् । महाचार्यां वितस्तिमागाश्रितं प्रदेशिनीग्रहम् ।
एवं तावत्पूर्वरङ्गे भाण्डवाद्यमुक्तम् । नायकानां तु
स्वस्थगतिप्रचारं वक्ष्यामः । तत्र घंद्रांद्रांद्रां इति देवतानाम् ।
घेंतांकेंतां --- कृणकिटिप्रायं विप्राणाम् ।
व्यञ्जकप्रायं मध्यमानाम् २२४
एवं स्वस्थावस्थागतिप्रचारे विधीयते वाद्यम्
द्विकलाश्च तथैककलाश्चतुष्कलाश्चैव पादविन्यासाः २२५
तत्र तु साम्यं कार्यं भाण्डे च समं च गानेन
पुनश्चावस्थाकृतं वाद्यं वक्ष्यामि त्वरितगमने २२६
धंधंघेघेटं इत्येवं वाद्यं प्रयोक्तव्यम्
रथविषमादिगतमङ्गुलिप्रचलनकृतं विहितम् २२७
तत्रैव पूर्वं सम्यग्लिखितं गतिप्रचारे तु
पुनरन्यावस्थायां वाविधानं प्रवक्ष्यामि २२८
त्वरितगमनेषु भावा ये पूर्वोक्ता गतिप्रचारेषु
ध्रंघेर्घेर्घेप्रायं तत्र तु वाद्यं प्रयोक्तव्यम् २२९
नौरथविमाननेपथ्यानिलाकाशजेऽङ्गुलीचलनात्
कार्यं हि तच्चतुष्केऽप्यन्योन्यसमाश्रितं वाद्यमिति २३०
दुःखार्दितव्याधितेष्टजनवियोगविभवनाशवधबन्धः
व्रतनियमोपवासादियुक्तेष्वालिप्तमागबन्धो विधातव्यः २३१

दत्यदानवयक्षराक्षसपन्नगादीनां धंद्रांधंद्रांधकुताम्
घेघेटाप्रायं खञ्जविकलपङ्गुवामनादीनाम् २३२
टघटाघेप्रायं चेटकुसत्वादीनां थोकटखुखरोत्यादिकम्
यतिपाशुपतशाक्यादीनां धहुधहुघेघेप्रायम् २३३
ओपस्थापक निर्मुण्डवर्षवरादीनां
घेटांघोटांभांटांरणाणाप्रायम्
वृद्धश्रोत्रियकञ्चुकिस्थूलादीनां
खोंध्रोघोखोखो इति प्रायम्
गजवाजिखरोष्ट्ररथविमानयानेषु वंकिटिप्रायम् २३४
सर्वत्रोत्तममध्यमाधमेषु पुरुषेष्विस्थं रसभावानभिसमीक्ष्य वाद्यं
प्रयोक्तव्यम् ।
एवं तावत्पुरुषवाद्यम् २३६
स्त्रीणां पुनरभिव्याख्यास्यामः । तत्रोत्तमस्त्रीणां मध्यामां च
टोस्वधधिदोघेंटमधिके इति प्रायम् । अथ राजस्त्रीणां धंकि-
ह्ममथिथिदोह्लकखुखुप्रायम् । धंकितिकिथिघटमटमटमथिथे इति
ब्राह्मणीनाम् । अथ मध्यमस्त्रीणां वेश्याशिल्पकारीणां
किटिरणाणं थंकथिंघटमथिहुणकिटिकिटिप्रायम् । टमथिकुण
केडखुखिखि प्रायं गीतं स्त्रीणाम् । एवं तावत्सामान्यतोऽभिहितं
स्त्रीणाम् । अवस्थान्तरितानां तु त
एव पौरुषा वाद्यविशेषा भवन्ति । सामान्यतोऽभिनये भयशोक-
क्रौंछादयो हि भावा
आसां समुत्पद्यन्ते । आसामपि रसभावाभिनयापेक्षं भार्गाश्रितं
वाद्य भवति २३६
अपि च
जातिमार्गप्रचारैस्तु करणैरक्षरैस्तथा
वादयेद्यस्त्वसंकीर्णं स श्रेष्ठो वादको मतः २३७

अथान्तरवाद्यानि । अनुबन्धो विप्रहारितं सिद्धिर्ग्रहणं परिच्छिन्न-
मिति २३८
तत्रानुबन्धसंज्ञमन्तरवाद्यं यथा धोणधोक्लघे इति । पाठ्यविरामे
विप्रहारितं
यथा घंद्रांखोखोणा इति २३९
सिद्धिरपि ।
ऐश्वर्ये विस्मृते शान्ते वस्त्राभरणसंयमे
सिद्धिर्वादयितव्या तु नानाकरणसंश्रया २४०
सा च सिद्धिर्यथा समार्गकरणाश्रया कार्या विचित्रकरणा पञ्चकला
।
अवस्थान्तरे पुनरेवमेव कृता भवति २४१
अपि
साध्यविरामे वाद्यं परिषत्साधनकृते विरामे च
वस्त्राभरणनिपाते प्रकुर्यादभ्यञ्जने काले २४२
अथ परिच्छिन्नं सार्वभाण्डिकम् । ध्रुवायो ग्रहोपशमने गम्भीर-
धीरप्रहारमुद्धतं यथारसं च षट्कलम् । तत्रोत्तमानां वितस्त-
मार्गाश्रितं द्रंद्रंक्लेघेके इति २४३
अथोत्तमस्त्रीणामङ्कितावाद्याश्रयणम् । खो खो खा इति ।
अधमानां
खञ्जनर्कुटकस्थम् । यथा टेंकखाकिटिकिटिना इति २४४
अथप्रासादिकीप्रावेशिक्याक्षेपिक्यवकृष्टासु । तत्र
प्रासादिकीप्रावेशिक्योः
समपाणौ विभक्तकरणं वाद्यम् । द्रुतायामुपरिपाणिर्विचित्रकरणं
स्थितावकृष्टायामर्थसन्निपातकृतमिति । यथा धोरणेधोधो इति
२४५
एवमेतत्प्रयोक्तव्यं वाद्यं गतिपरिक्रमे

प्रासादिक्यां ध्रुवायां च त्वन्तरायां तथैव च २४६
अभाराडमेकं गीतं तु परिवर्तं प्रयोजयेत्
सन्निपातावसानेषु भाराडवाद्यग्रहो भवेत् २४७
अथ द्रुतविलम्बितायां यथा । तलखो तलखो तलखो इति ।
अथाड्डितायां यथा । धोराखोखोराके---कुखुराराारा खोदें
क्लखोंके इति २४८
अथोद्धात्यम् ।
सम्भ्रमावेगहर्षार्थे विस्मयोत्साहज्ञोकजे
ग्रहे गानस्य यद्वाद्यमुद्धात्यं सम्प्रकीर्तितम् २४९
मोद्मिदानीं वद्त्यामः । तद्यथा ।
खेन्नांतिकिठिदत्तकित्तकिकिदोत्तगोगोगघेदोघेटाघेघेरादो इति ।
यथाड्डितायाम् । घटमथिघंघंखोखोराखोखोराखोखो
चेरां डक्कशिष्कषराुड्डप्प इति । अथ नर्कुटखञ्जयोः ।
योधंद्रांधंद्रांतकितांगुटुगुटु
घे इति । अवस्थितायाम् ।
घंघंघेटंमटघेघेत्थिमटांकटत्थिमटत्थिकटकिटीथिटी
इति । अथावकृष्टायाम् । घटमटत्थिरथिगुटुघेट इति २५०
एवमेते ग्रहा मोद्मा ध्रुवाणां गदिता मया
निष्क्रामे च प्रवेशे च त्वाद्तेपिक्यन्तरासु च २५१
त्वं तालकलाज्ञाने मार्दङ्गिकेन प्रयतितव्यम् । भवति चात्र ।
अतालज्ञमकालज्ञमशास्त्रज्ञं च वादकम्
चर्मघातकमित्येवं प्रवदन्ति मनीषिणः २५२
अनेनैवविधानेन कार्यं वाद्यं प्रयत्नतः
अघमानां नर्कुटखञ्जषेदात् प्रयुक्तं च वर्णान्तरिका
अतःपरं प्रवद्यामि त्वातोद्यानां तु लद्मणम् २५३
त्रिधा कृतिर्मृदङ्गानां हारीतकयवाश्रया

तथा गोपुच्छरूपा च भवन्त्येषां च रूपतः २५४
हरीतका कृतिस्त्वङ्को यवमध्यस्तथोर्ध्वगः
आलिङ्गश्चैव गोपुच्छः आकृत्या सम्प्रकीर्तितः २५५
तालत्रयं तथार्धं च मृदङ्गोऽङ्किक इष्यते
मुखं तस्य च कर्तव्यं द्वादशाङ्गुलयोजितम् २५६
ऊर्ध्वकोऽपि तथा कार्यश्चतुस्तालप्रमाणतः
अङ्गुलानि मुखं तस्य कर्तव्यं तु चतुर्दश २५७
आलिङ्गश्चैव कर्तव्यस्तालत्रयमथापि च
मुखं तस्याङ्गुलानि स्युरष्टादेव समासतः २५८
दैर्घ्येण पणवश्चैव कर्तव्यः षोडशाङ्गुलः
कृशमध्याङ्गुलान्यष्टौ पञ्चाङ्गुलमुखस्तथा २५९
ओष्ठावस्य तु कर्तव्यौ तज्ज्ञैरध्यर्धमङ्गुलम्
मध्यं च सुषिरं तस्य चत्वार्येवाङ्गुलानि च २६०
दर्दरश्च घटाकारो नवाङ्गुलमुखस्तथा
विधानं चास्य कर्तव्यं घटस्य सदृशं बुधैः २६१
द्वादशाङ्गुलविस्तीर्णं पीनोष्ठस्य समासतः
अतः परं प्रवक्ष्यामि चर्मलक्षणमुत्तमम् २६२
न ज्वरोपहतं चर्म न च काकमुखाहतम्
नापि दोषहतं क्लिन्नं न च धूमाग्निदूषितम् २६३
एभिर्दोषैर्विनिर्मुक्तं चर्म निर्वर्त्यते गवाम्
शुद्धपल्लवसंकाशं हिमकुन्देन्दुपाण्डुरम् २६४
अत्यामिषविहीनं तु क्लिनं वा चर्म कर्मणि
विदित्वैव सुवर्णानि चर्माण्याहृत्य बुद्धिमान् २६५
शीतोदके निशामेकां स्थापयित्वा समुद्धरत्
वध्रैः सुललितैर्दात्रैर्गोमयैरक्तमार्जितैः २६६
चन्द्रकैस्तनुभिः पश्चात् मृदङ्गान् योजयेद् बुधः

पुष्पावस्तर्त ततः कुर्यात् त्रिवर्ति चन्द्रकाश्रयाम् २६७
कद्दयाख्यं वै परिकरं ग्रीवाख्यं स्वास्तिकं तथा
त्रिशतं च प्रकुर्वीत पुष्करे ह्याद्दिकानि तु २६८
दश तत्र हि वध्रास्तु प्रद्दोप्या वर्तिसंश्रयाः
द्वे हित्वा त्वाद्दिके वध्र तृतीये संप्रवेशयेत् २६९
सर्वेष्वेवं प्रयोगोऽयमाद्दिकेषु विधीयते
तन्त्रीभिः पणवं नह्येत् सदृढाभिः समन्ततः २७०
वातपुष्करिकां चैव योजयेत्तनुयर्मणा
एवं मृदङ्गपणवाः कर्तव्या दर्दरास्तथा २७१
नवे मृदङ्गे दातव्यं रोहणं सततं बुधैः
गव्यं घृतं च तैलं च तिलपिष्टं तथैव च २७२
तथा ह्येतेन विधिना त्वाङ्गिकालिङ्गकोर्ध्वकान्
देवताभ्यर्चनं कृत्वा ततः स्थाप्या महीतले २७३
चित्रायामथवा हस्ते शुक्लपद्दो शुभेऽहनि
उपाध्यायः शुचिर्विद्वान् कुलीनो रोगवर्जितः २७४
मतिमान् गीतितत्त्वज्ञो मधुरोऽविकलेऽन्द्रियः
सोपवासोऽल्पकेशश्च शुल्कवासा दृढव्रतः २७५
मराडलत्रयमालिप्य गोमयेन सुगन्धिना
ब्रह्माणं शङ्करं विष्णुं त्रिषु तेषु प्रकल्पयेत् २७६
स्रालिङ्गं स्थापयेत्पूर्वं कृते ब्राह्मेऽथ मराडले
ऊर्ध्वकं तु द्वितीयेऽस्मिन् रुद्रनाम्नि निधापयेत् २७७
तिर्यगुत्सङ्गिकं सम्यग्वैष्णवे मराडले द्दिपेत्
बलिपुष्पोपहारैस्तु पूजयेत्पुष्करत्रयम् २७७
पायसं घृतमध्वक्तं चन्दनं कुसुमानि च
शुक्लानि चैव वासांसि दत्वा लिङ्गे स्वयंभुवः २७९
त्र्यम्बकाय प्रदातव्यः सगणायोर्ध्वके बलिः

स्वस्तिकैर्लाजिकापुष्परूपपिरडाष्टकैः सह २८०
उन्मत्तकरवीरार्कपुष्पैरन्यैश्च भूषितः
बलिः कार्यः प्रयत्नेन रक्तकौदुम्बरैः सह २८१
वैष्णवे मरडले स्थाप्यः सर्वबीजगतोऽङ्किकः
स्रग्वस्त्रालेपनैः प्रीतैश्चरुभिश्च सपायसैः २८२
वाचयित्वा द्विजैः स्वस्तिं रत्वा पूर्वं च दक्षिणाम्
पूजयित्वादिगन्धर्वान् पश्चाद्वाद्यं समाचरेत् २८३
दैवतानि च वक्ष्यामि येषां ते च भवन्ति हि
वज्रेक्षणः शङ्कुकर्णो ग्रहश्चापि तथा महान् २८४
एतास्तु देवता विप्राः पुष्करेषु प्रकीर्तिताः
मृरमयत्वान् मृदङ्गास्तु भारडं भ्रमयतीति च २८५
मुरजास्तूर्ध्वकरणादातोद्यं तोदनादपि
भारडस्यादौ प्रणीतोऽत्र पणवश्च विधीयते
द्वारं शब्दं दारयति तस्माद्भवति दर्दरः २८६
सृष्ट्वा मृदङ्गाम् पणवं दर्दरं च महामुनिः
मेघैश्च स्वरसंयोगं मृदङ्गानामथासृजत् २८७
विद्युज्जिह्वो भवेद्वामे मेघः स तु महास्वनः
ऐरावतो महामेघस्तथा चैवोर्ध्वके भवेत् २८८
आलिङ्गके तडिद्यांश्च नाम्ना चैव बलाहकः
दक्षिणे पुष्करो मेघः पुष्करो वामयोजितः २८९
मृदङ्गश्चैव नाम्ना तु ऊर्ध्वके नन्द्यथथोच्यते
अङ्किकः सिद्धिरित्येवमालिङ्गश्चैव पिङ्गलः २९०
भूतप्रियो बलिस्तेभ्यो दातव्यः सिद्धिमिच्छता
अपूजयित्वा ह्येतान् वै नैव प्रेक्षां प्रयोजयेत् २९१
करीषस्य तु सङ्घाते मृदङ्गं स्थापयेद् बुधः
सुसभ्या तानचलितास्तथा च पतिता पुनः २९२

आतोद्यपणवैश्चैव नर्तकोपनतास्तथा
शान्तिकर्म प्रयुञ्जीत विधिदृष्टेन कर्मणा २९३
चत्वारः पणवाः कार्याः दशरूपविधौ पुनः
आतोद्यान्यपि तान्येव नानावस्थासु वादयेत् २९४
नाटके सप्रकरणे भाणके प्रहसने तथा
मृदङ्गं पणवं चैव दर्दरं चैव वादयेत्
एवमेतद्बुधैर्ज्ञेयं मृदङ्गानां तु लक्षणम् २९५
गतिवाद्यतालपाठ्यग्रहमोक्षविशारदोऽथ लघुहस्तः
छिद्राच्छेदविधिज्ञः सिद्धस्थाने ध्रुवाकुशलः २९६
कलरिभितमधुरहस्तः सुनिविष्टो रक्तमार्जनो बलवान्
अवहितशरीरबुद्धिर्मृदङ्गवादी गुणैरेतैः २९७
आलेपनप्रमाणज्ञश्चतुर्मार्गकृतश्रमः
प्रतिग्राही च सिद्धीनामङ्गदोषविवर्जितः २९८
स्वभ्यस्तकरणः सामे गीतज्ञो गुणितग्रहः
सुसङ्गीतप्रयोगज्ञो मृदङ्गी तु भवेद्गुणैः २९९
भ्रान्तोर्ध्वहस्तः कालज्ञश्छिद्रावरणपण्डितः
अभ्यस्तकरणश्चैव भवेत्पाणविको गुणैः ३००
निश्चलो निपुणः शीघ्रो लघुहस्ती विधानवित्
वादनान्तरवादी च दर्दरी तु प्रशस्यते ३०१
एतत्सर्वं नाट्ययोगं समीक्ष्य
प्रोक्तं वाद्यं सर्वलोकानुभावात् ।
नोक्तं यच्चेदागमाद्वस्तुबुध्या
सद्भिः कार्यं मार्गजातीः समीक्ष्य ३०२
स्फुटप्रहारं विशदं विभक्तं
रक्तं विकृष्टं करलेपनं च ।
त्रिमार्जनापूरितरागगम्यं

मृदङ्गवाद्यं गुणतो वदन्ति ३०३
वाद्ये तु यत्नः प्रथमं तु कार्यः
शय्या हि नाट्यस्य वदन्ति वाद्यं ।
वाद्ये च गीते च हि सु प्रयुक्ते
नाट्यप्रयोगे न विपत्तिमेति ३०४

इति भरतीये नाट्यशास्त्रे पुष्करवाद्यो नामाध्यायश्चतुस्त्रिंशः

## अथ पञ्चत्रिंशोऽध्यायः

विन्यासं भूमिकानां च सम्प्रवक्ष्यामि नाटके
यादृशो यस्य कर्तव्यो विन्यासो भूमिकास्वथ १
गतिवागङ्गचेष्टाभिः सत्वशीलस्वभावतः
परीक्ष्य पात्रं तज्ञस्तु युञ्ज्याद्भूमिनिवेशने २
तस्मिन्नन्विष्य हि गुणवान् कार्या पात्रसमाश्रया
न खेदजननं बुद्धेराचार्यस्य भविष्यति ३
आचार्यः पात्रजांश्चैव गुणाञ्ज्ञात्वा स्वभावजान्
ततः कुर्याद्यथायोगं नृणां भूमिनिवेशनम् ४
अङ्गप्रत्यङ्गसंयुक्तमहीनाङ्गं वयोन्वितम्
न स्थूलं न कृशं चैव न दीर्घं न च मन्थरम् ५
श्लिष्टाङ्गं द्युतिमन्तं च सुस्वरं प्रियदर्शनम्
एतैर्गुणैश्च संयुक्तं देवभूमिषु योजयेत् ६
स्थूलं प्रांशुं बृहद्देहं मेघगम्भीरनिस्वनम्
रौद्रस्वभावनेत्रं च स्वभावभ्रुकुटीमुखम् ७
रक्षोदानवदैत्यानां भूमिकासु प्रयोजयेत्
पुरुषाणां प्रयोगस्तु तथाङ्गक्रिययान्वितः ८
सुनेत्रसुभ्रुवः स्वङ्गाः सुललाटाः सुनासिकाः
स्वोष्ठाः सुगण्डाः सुमुखाः सुकण्ठाः सुशिरोधराः ९

स्वङ्गप्रत्यङ्गसंयुक्ता न दीर्घा न च मन्थराः
न स्थूला न कृशाश्चैव स्वभावेन व्यवस्थिताः १०
सुशीला ज्ञानवन्तश्च तथा च प्रियदर्शनाः
कुमारराजभूमौ तु संयोज्याश्च नरोत्तमाः ११
अङ्गैरविकलैर्धीरं स्फुटं वसनकर्मणि
न दीर्घं नैव च स्थूलमूहापोहविचक्षणम् १२
अदीनं च प्रगल्भ च प्रत्युत्पन्नविनिश्चयम्
सेनापतेरमात्यानां भूमिकासु प्रयोजयेत् १३
पिङ्गाक्षं घोणनासं च नेत्रमुच्चमथापि वा
कञ्चुकिश्रोत्रियादीनां भूमिकासु नियोजयेत् १४
एवमन्येष्वपि तथा नाट्यधर्मविभागतः
देशवेषानुरूपेण पात्रं योज्यं स्वभूमिषु १५
मन्थरं वामनं कुब्जं विकृतं विकृताननम्
विष्टब्धनेत्रं काणाक्षं स्थूलं चिपिटनासिकम् १६
दुर्जनं दुस्वभावं च विकृताचारमेव च
दासभूमौ प्रयुञ्जीत बुधो दासाङ्गसम्भवम् १७
प्रकृत्याऽतिकृशं क्षामं तपःश्रान्तेषु योजयेत्
तथा च पुरुषं स्थूलमुपरोधेषु योजयेत् १८
यदि वा नेदृशाः सन्ति प्रकृत्या पुरुषा द्विजाः
आचार्यबुद्ध्या योज्यास्तु भावचेष्टास्वभावतः १९
या यस्य सदृशी चेष्टा ह्युत्तमाधममध्यमा
सा तथाऽऽचार्ययोगेन नियम्या भावभाविनी २०
अतः परं प्रवक्ष्यामि भरतानां विकल्पनम्
भरताश्रयाश्च भरतो विदूषकः सौरिकस्तथा नान्दी
नन्दी ससूत्रधारो नाट्यरसो नायकश्चैव २१
मुकुटाभरणविकल्पौ विज्ञेयो माल्यवस्तुविविधैश्च

कारककुशीलवाद्या विज्ञेया नामतश्चैव  २२
धुर्यवदेको यस्मादुद्धारोऽनेकभूमिकायुक्तः
भाण्डग्रहोपकरणैनाट्यं भरतो भवेत्तस्मात्  २३
लोका हृदाश्रयकृता सर्वप्रकृतिप्रचारसंयुक्ता
नानाश्रयां प्रकुरुते तथा च नारी तु सर्वत्र  २४
प्रत्युत्पन्नप्रतिभो नर्मकृतो नर्मगर्भनिर्भेदः
छेदविदूषितवचनो विदूषको नाम विज्ञेयः  २५
तूर्यतिस्तु नरः सर्वातोद्यप्रवादने कुशलः
तूरपरिग्रहयुक्तो विज्ञेयस्तौरिको नाम  २६
नटनृति धात्वऽर्थोयं भूतं नाटयति लोकवृत्तान्तम्
रसभावसत्वयुक्तं यस्मात् तस्मान्नटो भवति  २७
स्तुत्यभिवादनकृतैर्मधुरैर्वाक्यैः सुमङ्गलाचारैः
सर्वं स्तौति हि लोकं यस्मात्तस्माद्भवेद्वादी  २८
भावेभ्यो बहुधाऽस्मिन् रसा वदति नाट्ययोगेषु
प्राकृतसंस्कृतपाठ्यो नन्दी नामेति स ज्ञेयः  २९
गीतस्य च वाद्यस्य च पाठ्यस्य च नैकभावविहितस्य
शिष्टोपदेशयोगात्सूत्रज्ञः सूत्रधारस्तु  ३०
यस्मात्यथोपदिष्टान् रसांश्च भावांश्च सत्वसंयुक्तान्
भूमिविकल्पैर्नयति च नाट्यकरः कीर्तितस्तस्मात्  ३१
चतुरातोद्यविधानं सर्वस्य तु शास्त्रखे दविहितस्य
नाट्यस्यान्तं गच्छति तस्माद्वै नायकोऽभिहितः  ३२
नानाप्रकृतिसमुत्थं करोति यः शीर्षकं मुकुटयोगे
विविधैर्वेषविशेषैः स च कुटकारस्तु विज्ञेयः  ३३
भाण्डकवाद्यज्ञा या लयतालज्ञा रसानुविद्धा च
सर्वाङ्गसुन्दरी वै कर्तव्या नाटकीया तु  ३४
यस्त्वाभरणं कुर्याद्बहुविधविहितं स चाभरणः

यश्चोपकरणयोगात्स तेन नाम्नाऽभिधातव्यः ३५
यो वै माल्यं कुरुते पञ्चविधं माल्याकृत्सविज्ञेयः
लश्चापि वेषयोगं कुरुते स च वेषकारी तु ३६
चित्रज्ञश्चित्रकरो वस्त्रस्य रञ्जानात्तथा रजकः
जत्वश्मलोहकाष्ठैर्द्रव्यकरैः कारुकश्चैव ३७
नानातोद्यविधाने प्रयोगयुक्तः प्रवादने कुशलः
अतोद्येऽप्यतिकुशलो यस्मात्स कुश लवो ज्ञेयः ३८
यद्यत्समाश्रयन्ते शिल्पं वा कर्म वा प्रयोगं वा
तनैवोपगतगुणा विज्ञेया नामतः पुरुषाः ३९
एवं तु नाटकविधौ जातिर्नटसंश्रया बुधैर्ज्ञेया
नाट्योपकरणयुक्ता नानाशिल्पप्रसक्ता च ४०
उक्तोऽत्र भूमिकान्यासः प्रयोक्तारश्च योगतः
आदिष्टं नाट्यशास्त्रं च मुनयः किमिहोच्यताम् ४१
इति भरतीये नाट्यशास्त्रे भूमिकाविकल्पाध्यायः पञ्चत्रिंशः

अथ षट्त्रिंशोऽध्यायः

अथात्रेयो वसिष्ठश्च पुलस्त्यः पुलहः क्रतुः
अङ्गिरा गौतमोऽगस्त्यो मनुरायुस्तथात्मवान् १
विश्वामित्रः स्थूलशिराः संवर्तिः प्रमतिर्दनुः
उशना बृहस्पतिर्व्यासश्चावनः काश्यपो ध्रुवः २
दुर्वासा जामदग्न्यश्च मार्कण्डेयोऽथ गालवः
भरद्वाजश्च रैभ्यश्च यवक्रीतस्तथैव च ३
स्थूलाक्षः शकलाक्षश्च काण्वो मेधातिथिः क्रतुः
नारदः पर्वतश्चैव सुवर्माऽथैकजो द्विजः ४
नितम्बुर्भुवनः सौम्यः शतानन्दः कृतव्रणः
जामदग्न्यस्तथा रामः कचश्चेत्येवमादयः ५

एवं ते मुनयः श्रुत्वा सर्वज्ञं भरतं ततः
पुनरूचुरिदं वाक्यं कुतूहलपुरोगमम् ६
यस्त्वया गदितो ह्येष नाट्यवेदः पुरातनः
एकचित्तैः स चास्माभिः सम्यक् समुपधारितः ७
एकश्च संशयोऽस्माकं तं नो व्याख्यातुमर्हसि
को वाऽन्यो नाट्यवेदस्य निश्चयं वक्तुमर्हति ८
न वयं परिहासेन न विरोधेन नेर्ष्यया
पृच्छामो भगवन् नाट्यमुपदेशार्थमेव तु ९
अस्माभिश्च तदा नोक्तं कथाच्छेदो भवेदिति
इदानीं तूपशिक्षार्थं नाट्यगुह्यं निदर्शय १०
लोकस्य चरितं नाट्यमित्यवोचस्त्वदीदृशम्
तेषां तु लोकं गुह्यानां निश्चयं वक्तुमर्हसि ११
देवस्य कस्य चरितं पूर्वरङ्गे द्विजर्षभ
किमर्थं भुज्यते ह्येष प्रयुक्तः किं करोति वा १२
कस्माच्चैव पुनः शौचं सम्यक् चरति सूत्रदृक्
कथमुर्वीतले नाट्यं स्वर्गान्निपतितं विभो १३
कथं तवाऽयं वंशश्च नटसंज्ञः प्रतिष्ठितः
सर्वमेव यथातत्त्वं कथयस्व महामुने १४
भरत उवाच
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः
प्रत्युवाच पुनर्वाक्यं गुह्यार्थाभिनयं प्रति
ब्रवीमि वः कथां गुह्यां यन्मां पृच्छत्सुव्रताः
पूर्वरङ्गविधानस्य तां च मे सन्निबोधत १५
प्रोक्तवानस्मि यत्पूर्वं शुभं विघ्ननिबर्हणम्
तस्यानुबन्धेन मया पूर्वरङ्गः प्रकीर्तितः १६
शस्त्राणां प्रतिकारार्थं शरीरवरणं यथा

क्रियते हि यथा पापं हुतेनैव प्रशाम्यति १७
एवं जप्यैश्च होमैश्च देवताभ्यर्चनेन च
सर्वातोद्यविधानैश्च तथा गीतस्वनेन च १८
स्तुत्याशीर्वचनैः शान्तैः कर्मभावानुकीर्तनैः
मया पापापहरणैः कृते विघ्ननिबर्हणे १९
स्तुतिगीताभिसंसृष्टैर्देवैरभिहितोऽस्म्यहम्
नितरां परितुष्टाः स्मः प्रयोगेणामुना च ते २०
देवतासुरमानन्द्य यस्माल्लोकश्च नन्दति
तस्मादयं प्रयोगस्तु नदिनाम्ना भविष्यति २१
गीतवाद्यानुनादो हि यत्र काकुस्वनः शुभः
तस्मिन् देशे विपाप्मानो मङ्गल्यश्च भविष्यति २२
यावत्तं पूरयेद्देशं ध्वनिर्नाट्यत्तमाश्रयः
नस्यन्ति हि रक्षांसि तं देशं न विनायकाः २३
आवाहे च विवाहे च यज्ञे नृपतिमङ्गले
नान्दीशब्दमुपश्रुत्य हिंस्रा नश्यन्ति चैव हि २४
पाठ्यं नाट्यं तथा गेयं चित्रवादित्रमेव च
वेदमन्त्रार्थवचनैः समं ह्येतद्भविष्यति २५
श्रुतं मया देवदेवात्तत्त्वतः शङ्कराद्धितम्
स्नानजप्यसहस्रेभ्यः पवित्रं गीतवादितम् २६
यस्मिन्नातोद्यनाट्यस्य गीतपाठ्यध्वनिः शुभः
भविष्यत्यशुभं देशे नैव तस्मिन् कदाचन २७
एवं पूजाधिकारार्थं पूर्वरङ्गः कृतो मया
नाना स्तुतिकृतैर्वाक्यैर्देवताभ्यर्चनेन च २८
यतोऽभिवादनं क्लिष्टं शिष्टं तद्रङ्गमण्डले
ततस्तस्य हि तच्छौचं विहितं तु द्विजोत्तमाः २९
शौचं कृत्वा यतो मन्त्रं पूजनं जर्जरस्य तु

उच्यते पूर्वरङ्गेऽस्मिन् तस्माच्छौचं प्रकीर्तितम्  ३०
यथावतारितं चैव नाट्यमेतन् महीतले
वक्तव्यं सर्वमेतद्धि न शक्यं हि निगूहितुम्  ३१
ममैते तनयाः सर्वे नाट्यवेदसमन्विताः
सर्वलोकप्रहसनैर्बाधन्ते नाट्यसंश्रयैः  ३२
कस्यचित्त्वथ कालस्य शिल्पकं ग्राम्यधर्मकम्
ऋषीणां व्यङ्ग्यकरणं कुर्वद्भिर्गणसंश्रयम्  ३३
अश्राव्यं तद्दुराचारं ग्राम्यधर्मप्रवर्तितम्
निष्ठुरं चाप्रस्तुतं च काव्यं संसदि योजितम्  ३४
तच्छ्रुत्वा मुनयः सर्वे भीमरोषप्रकम्पिताः
ऊचुस्तान् भरतान् क्रुद्धा निर्दहन्तः इवाग्नयः  ३५
मा तावद्भो द्विजा युक्तमिदमस्मद्विडम्बनम्
को नामायं परिभवः किञ्च नास्मासु सम्मतम्  ३६
यस्माज्ज्ञानमदोन्मत्ता न वेत्था विनयाश्रिताः
तस्मादेतद्धि भवनां कुज्ञानं नाशमेष्यति  ३७
ऋषीणां ब्राह्मणानां च समवायसमागताः
निर्व्रताश्च विना होमैः शूद्रचारा भविष्यथ  ३८
अपाङ्क्तेयाः कुत्सिताश्चावमा एव भविष्यथ
यस्य वो भवति वंशः सर्वाशौचो भविष्यति  ३९
ये च वो वंशजास्तेऽपि भविष्यन्त्यथ नर्तकाः
परोपस्थानवन्तश्च शस्त्रपण्योपजीविनः  ४०
शापं दत्तं तथा ज्ञात्वा तुतानां मम देवताः
सर्वे विमनसो भूत्वा तानृषीन् समुपस्थिताः  ४१
समस्तैश्च ततः प्रोक्तं देवैः शक्रपुरोगमैः
इदानीं दुःखमुत्पन्नं नाट्यमेतद्विनङ्क्षति  ४२
ऋषिभिश्च ततः प्रोक्तं न चैतद्धि विनङ्क्ष्यति

शेषमन्यत्र यत्प्रोक्तं सर्वमेतद्भविष्यति ४३
एतच्छ्रुत्वा तु वचनं मुनीनामुग्रतेजसाम्
विषण्णास्ते ततः सर्वे श्रुत्वा मां तमुपस्थिताः ४४
प्रोक्तवन्तश्च मां पुत्रास्त्वयाहो नाशिता वयम्
अनेन नाट्यदोषेण शूद्राचारा हि यत्कृताः ४५
मयापि सान्त्वयित्वोक्ता मा क्रोधं व्रजतानघाः
कृतान्तविहितोऽस्माकं नूनमेव विधिः सुताः ४६
मुनीनां न मृदा वाक्यं भविष्यति कदाचन
निधने च मनो मा भूद् युष्माकमिति तान्त्विमाः ४७
जानीध्वं तत्तथा नाट्यं ब्रह्मणा संप्रवर्तितम्
शिष्येभ्यश्च तदन्येभ्यः प्रयच्छामः प्रयोगतः ४८
मा वै प्रणश्यतामेतनाट्यं दुःखप्रवर्तितम्
महाश्रयं महापुण्यं वेदाङ्गोपाङ्गसंभवम् ४९
अप्सरोभ्य इदं चैव याथातत्त्वं यथाश्रुतम्
नाट्यं दत्त्वा ततः सर्वे प्रायश्चित्तं चरिष्यथ ५०
इति भरतीये नाट्यशास्त्रे नाट्यशापो नामाध्यायः षट्त्रिंशः

अथ सप्तत्रिंशोऽध्यायः

कस्यचित्त्वथ कालस्य नहुषो नाम पार्थिवः
प्राप्तवान् देवराज्यं हि नयबुद्धिपराक्रमैः १
प्रशशास तदा राज्यं देवैर्व्युष्टिमवाप्नुवन्
गान्धर्वं चैव नाट्यं च दृष्ट्वा चिन्तामुपागमत् २
स चिन्तयित्वा मनसा कथमेष गृहे मम
नाट्यप्रयोगो हि भवेदिति सादर एव सन् ३
कृताञ्जलिः प्रयोगार्थं प्रोक्तवांस्तु सुरान् नृपः
अप्सरोभिरिदं सार्धं नाट्यं भवतु मे गृहे ४

प्रत्युक्तो ततो देवैर्बृहस्पतिपुरोगमैः
दिव्याङ्गनानां नैवेह मानुषैः सह सङ्गतिः ५
हितं पथ्यं च वक्तव्यो भवान् स्वर्गाधिपो
आचार्यास्तत्र गच्छन्तु गत्वा कुर्वन्तु ते प्रियम् ६
प्रोक्तवांस्तु ततो मां तु नृपतिः स कृताञ्जलिः
इदमिच्छामि भगवन् नाट्यमुर्व्यां प्रतिष्ठितम् ७
पूर्वमाचार्यकं चैव भवताऽभिहितं श्रुतम्
व्यक्तमावात्विदं लब्धं त्वत्सकाशाद् द्विजोत्तम ८
पितामहगृहेऽस्माकं तदन्तःपुरे जने
पितामहक्रियायुक्तमुर्वश्यां सम्प्रवर्तितम् ९
तस्याः प्रणाशशोकेन उन्मादोपरते नृपे
पिपन्नेऽन्तःपुरजने पुनर्नाशमुपागतम् १०
प्रकाशमेतदिच्छामो भूयस्तत्संप्रयोजितम्
तिथियज्ञक्रियास्येतद्यथा स्यान्मङ्गलैः शुभैः ११
तस्मिन् मम गृहे बद्धं नानाप्रकृतिसंश्रयम्
स्त्रीणां ललितविन्यासैर्यतो नः प्रथयिष्यति १२
तथाऽस्त्विति मया प्रोक्तो नहुषः पार्थिवस्तदा
सुताश्चाहूय तम्प्रोक्ता सामपूर्वं सुरैः सह १३
अयं हि नहुषो राजा याचते नः कृताञ्जलिः
गम्यतां सहितैर्भूमिं प्रयोक्तुं नाट्यमेव च १४
करिष्यामश्च शापान्तमस्मिन् सम्यक् प्रयोजिते
ब्राह्मणानां नृपाणां च भविष्यथ न कुत्सिताः १५
तत्र गत्वा प्रयुज्यन्तां प्रयोगान् वसुधातले
न शक्यं चान्यथा कर्तुं वचनं पार्थिवस्य हि १६
अस्माकं चैव सर्वेषां नहुषस्य महात्मनः
आत्मो पदेशसिद्धं हि नाट्यं प्रोक्तं स्वयंभुवा १७

शेषमुत्तरतन्त्रेण कोहलस्तु करिष्यति
प्रयोगः कारिकाश्चैव निरुक्तानि तथैव च १८
अप्सरोभिरिदं सार्धं क्रीडनीयकहेतुकम्
अधिष्ठितं मया स्वर्गे स्वातिना नारदेन च १९
ततश्च वसुधां गत्वा नहुषस्य गृहे द्विजाः
स्त्रीणां प्रयोगं बहुधा बद्धवन्तो यथाक्रमम् २०
अत्रोपभोगतस्ते तु मानुषीषु मामात्मजाः
बद्धवन्तोऽधिकस्नेहं तासु तद्द्विजसत्तमाः २१
पुत्रानुत्पाद्य वध्वा च प्रयोगं च यथाक्रमम्
ब्रह्मणा समनुज्ञाताः प्राप्ताः स्वर्गं पुनः सुताः २२
एवमुर्वीतले नाट्यं शिष्यैः समवतारितम्
भरतानां च वंशोऽयं भविष्यं च प्रवर्तितः २३
कोहलादिभिरेवं तु वत्सशाण्डिल्यधूर्तितैः
मर्त्यधर्मक्रियायुक्तैः कश्चित्कालमवस्थितैः २४
एतच्छास्त्रं प्रणीतं हि नाराणां बुद्धिवर्धनम्
त्रैलोक्यस्य क्रियोपेतं सर्वशास्त्रनिदर्शनम्
मङ्गल्यं ललितं चैव ब्रह्मणो वदनोद्भवम् २५
य इदं श्रुणुयान्नित्यं प्रोक्तं चेदं स्वयम्भुवा
कुर्यात्प्रयोगं यश्चैवमथवाऽधीतवान्नरः २६
या गतिर्वेदविदुषां या गतिर्यज्ञकारिणाम्
या गतिर्दानशीलानां तां गतिं प्राप्नुयाद्धिसः २७
दानधर्मेषु सर्वेषु कीर्त्यते तु महत्फलम्
प्रेक्षणीयप्रदानं हि सर्वदानेषु शस्यते २८
न तथा गन्धमाल्येन देवास्तुष्यन्ति पूजिताः
यथा नाट्प्रयोगस्थैर्नित्यं तुष्यन्ति मङ्गलैः २९
गान्धर्वं चेह नाट्यं च यः सम्यक् परिपालयेत्

स ईश्वरगणेशानां लभते सद्गतिं पराम्  ३०
एवं नाट्यप्रयोगे बहुविधिविहितं कर्मशास्त्रं प्रणीतं
नोक्तं यच्चात्र लोकादनुकृतिकरणात् । संविभाव्यं तु तज्ज्ञैः ॥
किं चान्यत्सम्प्रपूर्णा भवतु वसुमती नष्टदुर्भिक्षरोगा
शान्तिर्गोब्राह्मणानां भवतु नरपतिः पातु पृथ्वीं समग्राम्  ३१

इति भरतीये नाट्यशास्त्रे गुह्यतत्त्वकथनाध्यायः सप्तत्रिंशः

नाट्यशास्त्रम् संपूर्णम्

Data Entry at Maharishi University of Management, Fairfield, Iowa, using Vedapad Software by Ralph Bunker.
Proofread by Yeshayah Finkelstein.
Formatted for Maharishi University of Management Vedic Literature Collection

Source:
Nagar, R.S., Joshi, K.L., and Vedalankar, M.A., eds., *Natyasastra of Bharatamuni with the Commentary Abhinavabharati by Abhinavagupta-charya*, 4 vols., (Delhi: Parimal Publications, 1989).